ॐ

॥ **श्रीमन्महागणाधिपतये नमः** ॥

**अथाग्निहोत्रम्**

आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य **श्री परमेश्वरप्रीत्यर्थं सायमग्निहोत्रं होष्ये** ( प्रातस्तु **प्रातरग्निहोत्रं होष्ये**) इति सङ्कल्प्य परिसमूह्य परिस्तीर्य **ऋतसत्याभ्यां त्वा पर्युक्षामि** इति जपित्वा सायं पर्युक्षेत् । अत्रैवं क्रमः– दक्षिणाग्निं गार्हपत्यमाहवनीयमिति । **सत्यऋताभ्यां त्वा पर्युक्षामि** इति प्रातः । गार्हपत्याहवनीययोर्मध्य उत्तरत उपविश्य गार्हपत्यादविच्छिन्नामुदकधारां हरेदाहवनीयपर्यन्तम्–

**तन्तुं तन्वन् रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।**
**अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम्** ॥ [ऋ.सं. १० ।५३ ।६]

पश्चाद्गार्हपत्यस्योपविश्योदगङ्गारानपोहेत् **सुहुतकृत स्थ सुहुतं करिष्यथ** इति । तेष्वग्निहोत्रमधिश्रयेत् **अधिश्रितमध्यधिश्रितमधिश्रितं हिँ ३** इति ।

**इळायास्पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व ।**

**ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि पुष्टिरस्तु** इति वा मन्त्रेण ।

अधिश्रितमवज्वलयेत् **अग्निष्टे तेजो माहार्षीः** इति । दोहनपात्रं प्रक्षाल्य स्रुवेण प्रतिषिञ्च्यात् **शान्तिरस्यमृतमसि** इति । पुनर्ज्वलता दर्भेण त्रिः परिहरेत् **अन्तरितं रक्षोऽन्तरिता अरातयः** इति । उष्णीकृत्वा मन्दगत्या कर्षन्निवोदगुद्वासयेत् **दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा** इति तृतीयमन्त्रेणैव भूम्यां निदध्यात् । **सुहुतकृत स्थ सुहुतमकार्ष्ट** इत्यङ्गारान् गार्हपत्ये प्रतिक्षिपेत् । स्रुक्स्रुवं गार्हपत्ये प्रतितपेत् **प्रत्युष्टं रक्षः प्रत्युष्टा अरातयो निष्टप्तं रक्षो निष्टप्ता अरातयः** इति । उत्तरतः स्थाल्याः स्रुचमासाद्य स्रुवहस्तः **ॐ उन्नयामि** इत्यतिसर्जयीत ( प्रातस्तु **ॐ उन्नेष्यामि** इति ) । आहिताग्निराचम्यापरेण वेदिमतिव्रज्य दक्षिणत उपविश्यैतच्छ्रुत्वा **ॐ उन्नय** इत्यतिसृजेत् । यजमानाभावे स्वयं तीर्थदेशाद्यजमानायतनं गत्वा वेद्या दक्षिणत उपविश्य **ॐ उन्नय** इत्यतिसृजेत् । तथैव प्रतिनिवृत्य गार्हपत्यस्य पश्चादुपविश्य स्रुचि स्रुवपूरं चतुष्कृत्व उन्नयेत् **भूरिळा, भुव इळा, स्वरिळा, वृध इळा** इति मन्त्रेण । पञ्चावत्तिनां तु तूष्णीमेव पञ्चममवदानं भवति । स्थालीमभिमृश्य स्रुचा सह समिधं गृहीत्वा गार्हपत्यस्योपरि नासिकासम्मितां हृत्वा आहवनीयसमीपे कुशेषूपसाद्य जान्वाच्य समिधमादध्यात् **रजतां त्वाग्निज्योतिषं रात्रिमिष्टकामुपदधे स्वाहा** इति । **अग्नये ज्योतिष इदं न मम** इति त्यागः । समिधमादायानुमन्त्रयते–

**रजतां त्वाग्निज्योतिषं रात्रिमिष्टकामुपदधे ।**

**तेन ऋषिणा तेन ब्रह्मणा तया देवतयाङ्गिरस्वद्ध्रुवासीद** ॥

( प्रातस्तु **हरिणीं त्वा सूर्यज्योतिषमहरिष्टकामुपदधे स्वाहा** इति । **सूर्याय ज्योतिष इदं न मम** इति त्यागः । **हरिणीं त्वा सूर्यज्योतिषमहरिष्टकामुपदधे ।**

**तेन ऋषिणा तेन ब्रह्मणा तया देवतयाङ्गिरस्वद्ध्रुवासीद** इत्यनुमन्त्रणम् )

**विद्युदसि विद्य मे पाप्मानमग्नौ श्रद्धा** इत्यप उपस्पृश्य प्रदीप्तायां समिधौ द्व्यङ्गुलिमात्रेऽभिजुहुयात् **भूर्भुवःस्वरो३मग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा । अग्नय इदं न मम ।** ( प्रातस्तु **भूर्भुवःस्वरों३सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा । सूर्यायेदं न मम** इति । ) इममाहुतिमनुमन्त्रयते–

**ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः ।**

**जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः** ॥ इति ।

स्रुचं कुशेषु सादयित्वा गार्हपत्यमवेक्षेत **पशून् मे यच्छ** इति । अथोत्तरां तूष्णीं भूयसीमसंसृष्टां प्रागुदगुत्तरतो वा (मनसा) **प्रजापतये** (उच्चैः) **स्वाहा । प्रजापतय इदं न मम ।** भूयिष्ठं स्रुचि शिष्ट्वा स्रुग्घस्तस्तत्रैव स्थित्वाहुतिस्थलमीक्षमाणोऽनुमन्त्रयेत

**भूर्भुवःस्वः सुप्रजाः प्रजाभिः स्यां सुवीरो वीरैः सुपोषः पोषैः ।**

आहुतिदेशोपरिभागे स्रुचं त्रिरनुप्रकम्प्योपविश्यावमृज्य कुशमूलेषु निमार्ष्टि **पशुभ्यस्त्वा** इति । **पशुभ्य इदं न मम ।** तेषां दक्षिणत उत्ताना अङ्गुलीः करोति । ततः प्राचीनावीती दक्षिणत अपो निनयति **स्वधा पितृभ्यः** इति । **पितृभ्य इदं न मम ।** तूष्णीं वा । स्रुचं निधायाप उपस्पृशेत् **वृष्टिरसि वृश्च मे पाप्मानमप्सु श्रद्धा** इति । गार्पत्यस्य दक्षिणत उपविश्य जान्वाच्य तूष्णीं समिधमाधाय प्रदीप्तायां समिधौ द्व्यङ्गुलिमात्रे जुहुयात् **अग्नये गृहपतये स्वाहा । अग्नये गृहपतय इदं न मम ।** (मनसा) **प्रजापतये** (उच्चैः) **स्वाहा । प्रजापतय इदं न मम ।** पयस्थालीं दक्षिणाग्निसमीपे नीत्वा तत्र पश्चादुपविश्य जान्वाच्य तूष्णीं समिधमाधायाप उपस्पृशेत् । प्रदीप्तायां समिधौ द्व्यङ्गुलिमात्रे जुहुयात् । **अग्नये संवेशपतये स्वाहा । अग्नये संवेशपतय इदं न मम । अग्नयेऽन्नादायान्नपतये स्वाहा । अग्नयेऽन्नादायान्नपतय इदं न मम** इति वा मन्त्रेण । (मनसा) **प्रजापतये** (उच्चैः) **स्वाहा । प्रजापतय इदं न मम ।** ततः पयस्थालीं गृहीत्वा गार्हपत्यसमीपे स्थित्वा **अभयं वोऽभयं मे अस्तु** इत्युक्त्वा तीर्थदेशे स्थालीं विनिक्षिपेत् । आहवनीयादुत्तरत उदङ्ङ्वृत्योपविश्य स्रुग्गतं शेषं भक्षयेत् । **आयुषे त्वा प्राश्नामि** इति प्रथमम् **अन्नाद्याय त्वा प्राश्नामि** इत्युत्तरम् । भक्षयित्वाभात्ममपः स्रुचा निनयते त्रिः **सर्पदेवजनेभ्यः स्वाहा । सर्पदेवजनेभ्य इदं न मम ।** अथैनां कुशैः प्रक्षाल्य चतस्रः पूर्णाः स्रुचः निनयेदेकैकेन मन्त्रेण प्रागुदीची क्रमेण **ऋतुभ्यः स्वाहा । ऋतुभ्य इदं न मम । दिग्भ्यः स्वाहा । दिग्भ्य इदं न मम । सप्त ऋषिभ्यः स्वाहा । सप्त ऋषिभ्य इदं न मम । इतरजनेभ्यः स्वाहा । इतरजनेभ्य इदं न मम ।** पञ्चमीं कुशदेशे निनयेत् **पृथिव्याममृतं जुहोम्यग्नये वैश्वानराय स्वाहा । अग्नये वैश्वानरायेदं न मम ।** पश्चाद्गार्हपत्यस्योपविश्य षष्ठीं **प्राणममृते जुहोम्यमृतं प्राणे जुहोमि स्वाहा । अमृताय प्राणायेदं न मम ।** स्रुक्स्रुवावाहवनीये प्रताप्यान्तर्वेदि निदध्यात् परिकर्मिणे वा प्रयच्छेत् । अग्रेणाहवनीयं परीत्य विहारस्य दक्षिणदेशं गत्वा तस्य तस्याग्नेर्दक्षिणत उदङ्मुखस्तिष्ठन् तिस्रस्तिस्रः समिध आदध्यात् ।

आहवनीये **दीदिहि स्वाहा । अग्नय इदं न मम ।** तूष्णीं द्वितीयां तूष्णीं तृतीयाम् । गार्हपत्ये **दीदाय स्वाहा । अग्नय इदं न मम ।** तूष्णीं द्वितीयां तूष्णीं तृतीयाम् । दक्षिणाग्नौ **दीदिदाय स्वाहा । अग्नय इदं न मम ।** तूष्णीं द्वितीयां

तूष्णीं तृतीयाम् । ततः परिसमूहनं पर्युक्षणं पूर्वोक्त क्रमेणैव । **ऋतसत्याभ्यां त्वा पर्युक्षामि** इति सायम् । **सत्यऋताभ्यां त्वा पर्युक्षामि** इति प्रातः ।

साष्टाङ्गं प्रणमेत् । **सकृत्ते अग्ने नमः । द्विस्ते नमः । त्रिस्ते नमः । चतुस्ते नमः । पञ्चकृत्वस्ते नमः । दशकृत्वस्ते नमः । शतकृत्वस्ते नमः । आसहस्रकृत्वस्ते नमः । अपरिमितकृत्वस्ते नमः । नमस्ते अस्तु मा मा हिंसीः ॥**

**नमस्ते गार्हपत्याह नमस्ते दक्षिणाग्नये ।**

**नम आहवनीयाय महावेद्यै नमो नमः ॥**

**काण्डद्वयोपपाद्याय कर्मब्रह्म स्वरूपिणे ।**

**स्वर्गापवर्गदात्रे च (मार्गाय) यज्ञेशाय नमो नमः ॥**

**यज्ञेशाच्युत गोविन्द माधवानन्त केशव ।**

**कृष्ण विष्णो हृषीकेश वासुदेव नमोऽस्तुते ॥(तुभ्यं विश्वात्मने नमः)**

**प्रमादात् कुर्वाअं कर्म प्रच्यवेताध्वरेषु यत् ।**

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥**

पुनः पश्चाद्गार्हपत्यस्योपविश्य कर्म ब्रह्मार्पणं कुर्यात् । नामत्रयजपं च ।

# ॥ प्रवासोपस्थानम् ॥

प्रवत्स्यन्नग्निं प्रज्वल्याचम्य प्राणानायम्य **ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रवासविधिनाग्नीनुपस्थास्ये** इति सङ्कल्प्य प्रत्यगुदगायतनसमीपं गत्वा तं तमग्निमुपतिष्ठेत आहवनीयम्– **शंस्य पशून्मे पाहि** इति

उत्तरेण विहारं गत्वा गार्हपत्यम्– **नर्य प्रजां मे पाहि** इति

अपरेण विहारं गत्वा दक्षिणाग्निम्– **अथर्व पितुं मे पाहि** इति तत्रैव तिष्ठन् गार्हपत्याहवनीयावीक्षेत–

**इमान्मे मित्रावरुणौ गृहं गोपायतं युवम्**

**अविनष्टानविहृतान् पूषैनानभिरक्षत्वस्माकं पुनरायतनात्** इति पुनः यथेतं प्रत्येत्य ततो गमनाय प्रदक्षिणमावर्तमान आहवनीयमुपतिष्ठते– **मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे**

**तत्त्वं बिभृहि पुनराममैतोस्तवाहं नाम बिभराण्यग्ने** इति ततः पृष्ठतोऽग्नीननीक्षमाणस्तीर्तदेशादेव माप्रगामेति सूक्तं जपन् यथेष्टं प्रव्रजेत्

**मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः । मान्तस्थुर्नो अरातयः ॥**

**यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः । तमाहुतं नशीमहि ॥**

**मनो न्वा हुवामहे नाराशंसेन सोमेन । पितॄणां च मन्मभिः ॥**

**आ त एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक्च सूर्यं दृशे ॥**

**पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातं सचेमहि ॥**

**वयं सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहि ॥** [१० ।५७ ।१–६]

यावद्गतेऽग्न्यागारच्छदिर्न दृश्यते तावदग्निभ्यो दूरं गत्वा वाचं विसृजेत अभिलषितदेशगामिनं पन्थानमवरुह्य–

**सदा सुगः पितुमाँ अस्तु पन्था मध्वा देवा ओषधीः सं पिपृक्त**

**भगो मे अग्ने सख्ये न मृध्या उद्रायो अश्यां सदनं पुरुक्षोः** [३–५४–२१]

यदि कदाचिद्यथोक्तोपस्थानमकृत्वैव गन्तव्यं स्याद्दैवान्मानुषाद्वा निमित्तात् तदा तत्रैव स्थितः सर्वानग्नीनुत्पत्तिक्रमेण तं तमग्निं मनसि ध्यात्वा तां तां दिशमभिमुखमुपतिष्ठेत–

**इहैव सन् तत्र सन्तं त्वाग्ने हृदा वाचा मनसा वा बिभर्मि**

**तिरो मा सन्तं मा प्रहासीर्ज्योतिषा त्वा वैश्वानरेणोपतिष्ठते** इति

**अनेन प्रवासोपस्थानेन श्रीपरमेश्वरः प्रीयताम्**

### प्रवासादागत्यविधिः

प्रवासं कृत्वा प्रत्येत्य स्वग्रामसमीप्यं प्राप्य

**अपि पन्थामगन्महि स्वस्ति गामनेहसम्**

**येन विश्वाः परि द्विषो वृणक्तिविन्दते वसु** इति ब्रूयात् [६–२]

ततः समित्पाणिर्वाग्यतोऽग्नीन् ज्वलतः श्रुत्वाचम्य **ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रवासागनविधिं करिष्ये** इति सङ्कल्प्य शुचिर्भूत्वा तीर्थेनात्यन्तसमीपदेशमभिक्रम्याहवनीयमीक्षेत–

**विस्वदानीमारभन्तोऽनातुरेण मनसा अग्ने मा ते प्रति वेषा रिषाम**

**नमस्ते अस्तु मीळ्हुषे नमस्त उपसद्वने अग्ने शुम्भस्व तन्वःसं मा रय्या सृज**

आनीताः समिधो विभज्य तस्य तस्याग्नेः समीपे निधायाहवनीयमुपतिष्ठते–

**मम नाम तव च जातवेदो वाससी इव विवसानौ चरावः**

**ते बिभृवो दक्षसे जीवसे च यथायथं नौ तन्वौ जातवेदः** इत्युपस्थायैकैकां समिधं तस्मिंस्तस्मिन्नग्नावभ्यादध्यात्–

**अगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम्**

**अग्ने सम्राळभिद्युम्नमभिसह आयच्छस्व स्वाहा** इत्याहवनीये

**अयमग्निर्गृहपतिर्गार्हपत्यः प्रजया वसुवित्तमः**

**अग्ने गृहपतेऽभिद्युम्नमभिसह आयच्छस्व स्वाहा** इति गार्हपत्ये

**अयमग्निः पुरीष्यो रयिमान् पुष्टिवर्धनः**

**अग्ने पुरीष्याभिद्युम्नमभिसह आयच्छस्व स्वाहा** इति दक्षिणाग्नौ तत्रैव स्थितो गार्हपत्याहवनीयावीक्षेत–

**इमान्मे मित्रावरुणौ गृहान्मे गोपायतं युवम्**

**अविनष्टानविहृतान् पूषैनानभ्यराक्षीदास्माकं पुनरायतनात्** इति यथेतं प्रत्येत्य

[दशरात्रादूर्ध्वं प्रवासं कृत्वागतेन तु तूष्णीमाज्यं त्रिरुत्पूय जुह्वां चतुर्गृहीतं गृहीत्वा प्रत्यगुदगाहवनीयादस्थायाहवनीये जुहुयात्–

**मनो ज्योतिर्जुषतामाज्यं मे विच्छिन्नं यज्ञं समिमं दधातु**

**या इष्टा उषसो या अनिष्टास्ताः सन्तनोमि हविषा घृतेन स्वाहा मनसे ज्योतिष इदं न मम** इति]

द्वयोर्बहूनामप्यग्निहोत्रविच्छेदे सति चतुर्गृहीतं जुहुयात् **अग्निहोत्रहोमविच्छेदनिमित्तप्रत्यवायजनितदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रायश्चित्ताज्याहुतिं होष्यामि** इति सङ्कल्प्य अनुत्पूतमाज्यं तूष्णीं त्रिरुत्पूय पूर्ववत् स्थित्वा **मनो ज्योतिः** इति मन्त्रेण जुहुयात् सर्वं विहारं परिसमुह्य उदग्विहारादुपविश्य वाचं विसृजेत **भूर्भुवःस्वः** इति **अनेन प्रवासागमननिमित्तविधिना श्रीपरमेश्वरः प्रीयताम्** आचम्य ततो गृहानीक्षेत–**गृहा मा बिभीतोप वः स्वस्त्येवोऽस्मासु च प्रजायध्वं मा च वो गोपती रिषत्** इति ततो गृहान् प्रपद्येत–

**गृहानहं सुमनसः प्रपद्ये वीरघ्नो वीरवतः सुवीरान्**

**इराण् वहन्तो घृतमुक्षमाणास्तेष्वहं सुमनाः संविशानि** इति

**शिवं शग्मं शंयोः शंयोः** इति त्रिरनुमन्त्र्य प्रपद्येत

अत्र प्रवत्स्यन् प्रत्येत्याहरहः प्रयोगान्तरं कुर्यादित्थमवीवृतद्वृत्तिकृत्

प्रवत्स्यन्नग्नीन् विहृत्य प्रज्वल्याचम्य तीर्थेन प्रपद्य तत्रै स्थित्वा सर्वानग्नीन् सकृदेव उपतिष्ठेत– **अभयं वोऽभयं मे अस्तु** इति ततः प्रदक्षिणमावृत्य तीर्थेनैव निष्क्रम्य **मा प्रगाम** इति जपन्प्रव्रज्य **सदा सुगः** इति पन्थानं प्राप्य जपेत् प्रत्येत्य **अपि पन्थामगन्महि** इति जपित्वा विहृतान् प्रज्वलितांस्तीर्थेनैव प्रपद्य तत्रैव स्थित्वा **अभयं वः** इत्युपस्थाय **मनो ज्योतिः** इत्यादि पूर्ववत्

## समारोपविधिः

समारोप्स्यन्नग्नीन् विहृत्य प्रज्वल्याचम्य **ममोपात्त दुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थमापन्निमित्तमग्निमरण्योः समारोपयिष्ये** यदि पाणौ **पाणौ समारोपयिष्ये** इति सङ्कल्प्य अरणी गृहीत्वा

**अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः**

**तं जानन्नग्न आ सीदाथा नो वर्धया गिरः** [३ २९ १०] इति गार्हपत्ये प्रतितप्य यदि दक्षिणाग्निर्भिन्नयोनिस्तदा तस्यारण्यन्तरेऽनेनैव मन्त्रेण दक्षिणाग्नावरणी प्रतितपेत्

पाणिसमारोपणपक्षे पाणी गार्हपत्ये प्रतितपेत् तत्र मन्त्रः–

**या ते अग्ने यज्ञियास्तनूस्तयेह्यारोहात्मात्मानमच्छा वसूनि कृण्वन्नर्या पुरूणि**

**यज्ञो भूत्वा यज्ञमासीद योनिं जातवेदो भुव आ जायमानः** इति

**अनेन समारोपविधिना श्रीपरमेश्वरः प्रीयताम्**

## प्रत्यवरोहविधिः

**प्रत्यवरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन्**

**प्रजां पुष्टिं रयिमस्मासु धेह्यथा भव यजमानाय शंयोः** इति मन्त्रमुक्त्वा तयोररण्योरग्निं मन्थयेत् स्वयं वा मन्थेत् यदि पाण्योः समारोपणं स्यात्तदैतेन मन्त्रेणारणी संस्पृश्य मन्थयेत् यावदग्न्युत्पादनं मन्त्रावृत्तिः अग्निहोत्रविच्छेदे मनो ज्योत्ः इत्यादि पूर्ववत्

## ॥ अथ दर्शपूर्णमासेष्टिप्रयोगः ॥

**अस्या इष्टेः पञ्चदश सामिधेन्यः । वार्तघ्नावाज्यभागौ ।** अमावास्यायां– **वृधन्वन्तावाज्यभागौ । अग्निः विष्णुः अग्नीषोमौ इन्द्रो वैमृधश्च प्रधानदेवताः ।** अमावास्यायां–**अग्निः विष्णुः इन्द्राग्नी** इत्यसन्नयतः । सन्नयतः संवत्सरपर्यन्तम् **इन्द्रः,** अनन्तरं **महेन्द्रः । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः देवा आज्यपाश्च ।**

दर्शपूर्णमासयोर्हविःष्वासन्नेषु होतामन्त्रितः प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य दक्षिणावृद्विहारं प्रपद्यते पूर्वेणोत्करमपरेण प्रणीता इध्ममपरेणाप्रणीते चात्वालं चात्वालवत्स्वेतत्तीर्थमित्याचक्षते । प्रपद्याभिहृततरेण पादेन वेदिः श्रोण्योत्तरया पार्ष्णी समां निधाय प्रपदेन बर्हिराक्रम्य संहितौ पाणी धारयन्नाकाशवत्यङ्गुली हृदयसम्मितावङ्कसंमितौ वा द्यावापृथिव्योः सन्धिमीक्षमाणस्तिष्ठेत् । अध्वर्युणा **अग्नये समिध्यमानायानुब्रूहि** इति प्रेषितो जपति–

**नमः प्रवक्त्रे नम उपद्रष्ट्रे नमोऽनुख्यात्रे क इदमनुवक्ष्यति स इदमनुवक्ष्यति षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चाऽऽपश्चौषधयश्च वाक्समस्थितयज्ञः साधुच्छन्दांसि प्रपद्येऽहमेव माम्** (अमुमिति स्वं नामादिशेत) **शर्माणं भूते भविष्यति जाते जनिष्यमाण आभजाम्यपाव्यं वाचो अशान्तिं वह** इत्यङ्गुल्यग्राण्यवकृष्य **जातवेदो रमया पशून् मयि** इति प्रतिसन्दध्यात् **वर्म मे द्यावापृथिवी वर्माग्निर्वर्म सूर्यो वर्म मे सन्तु तिरश्चिकाः ।**

**तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवा असाम ।**
**ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम् ॥** [ ऋ.स १०/५३/४]

इत्युपांशु । **हिम्३** इत्युच्चैः । **भूर्भुवःस्वरो३म्** इत्युपांशु । समाप्य सामिधेनीरन्वाह अथोच्चैः

**प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या देवाञ्जिगाति सुम्नयो३ं** [३ ।२७ ।१]
**प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या । देवाञ्जिगाति सुम्नयो३ं**
**प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या देवाञ्जिगाति सुम्नयो३**
**मग्न अयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषो३ं** [६ ।१६ ।१०]
**तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्यो३ं**
**स नः पृथुश्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्यो३**
**मीळेन्यो नमस्यस्तिरस्तमांसि दर्शतः । समग्निरिध्यते वृषो३ं** [३ ।२७ ।१४]
**वृषो अग्निः समिध्यतेऽश्वो न देववाहनः । तं हविष्मन्त ईळतो३ं**

**वृषणं त्वा वयं वृषन् वृषणः समिधीमहि । अग्ने दीद्यतं बृहो३**

**मग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतोꣳ** [१ ।१२ ।१]

**समिध्यमानो अध्वरेऽग्निः पावक ईड्यः । शोचिष्केशस्तमीमहोꣳ** [३ ।२७ ।४]

**समिद्धो अग्न आहुत देवान् यक्षि स्वध्वर । त्वं हि हव्यवाळसो३** [५ ।२८ ।५]

**माजुहोता दुवस्यताग्निं प्रयत्यध्वरे वृणीध्वं हव्यवाहनो३** [५ ।२७ ।६]

**माजुहोता दुवस्यताग्निं प्रयत्यध्वरे । वृणीध्वं हव्यवाहनो३**

**माजुहोता दुवस्यताग्निं प्रयत्यध्वरे वृणीध्वं हव्यवाहनो३ मग्ने महाँ असि ब्राह्मण भारत** । इति निगदेऽवसाय यजमानस्यार्षेयान् प्रवरान् वृणीते **देवेद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसंशितो घृताहवनः प्रणीर्यज्ञानां रथीरध्वराणामतूर्तो होता तूर्णिर्हव्यवाट्** । इत्यवसाय

**आस्पात्रं जुहूर्देवानां चमसो देवपानोऽराँ इवाग्ने नेमिर्देवांस्त्वं परिभूरस्यावह देवान् यजमानाय । अग्निमग्न आ३वह । सोमम‍ा३वह । अग्निमा३वह ।** (उपांशु) **विष्णुम्** (उच्चैः) **आ३वह । अग्नीषोमावा३वह । इन्द्रं वैमृधमा३वह** । अमावास्यायाम्– **इन्द्राग्नी आ३वह** इत्यसन्नयतः । सन्नयतस्तु **इन्द्रमा३वह** । संवत्सरानन्तरं **महेन्द्रमा३वह । देवाँ आज्यपाँ आ३वह । अग्निं होत्रायावह स्वं महिमानमा३वह । आवह जातवेदः सुयजा यज** । इत्यावाह्य यथास्थितमूर्ध्वजानुरुपविश्य उदग्वेदेर्व्यूह्य तृणानि भूमौ प्रादेशं कुर्यात्– **अदितिर्मातास्यन्तरिक्षान्माच्छेत्सीरिदमहमग्निना देवेन देवतया त्रिवृता स्तोमेन रथन्तरेण साम्ना गायत्रेण च्छन्दसाग्निष्टोमेन यज्ञेन वषट्कारेण वज्रेण योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तं हन्मि** इति । आश्रावयिष्यन्तमनुमन्त्रयेत– **आश्रावय यज्ञं देवेष्वाश्रायव मां मनुष्येषु कीर्त्यै यशसे ब्रह्मवर्चसाय** इति । प्रावृणानं– **देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेण द्यावापृथिवी मां पातामग्निर्होताहं मानुषः** । मानुष इत्यध्वर्योः श्रुत्वा– **उदायुषा स्वायुषोदोषधीनां रसेनोत्पर्जन्यस्य धामभिरुदस्थाममृताँ अनु** इत्युत्तिष्ठेत् । **षष्टिश्चाध्वर्यो नवतिश्च पाशा अग्निं होतारमन्तरा विचृत्ताः । सिनन्ति पाकमतिधीर एति** इत्युत्थाय जपेत् । **ऋतस्य पन्थामन्वेमि होता** इत्यभिक्रम्यांसेऽध्वर्युमन्वारभेत पार्श्वस्थेन पाणिना, आग्नीध्रमङ्कदेशेन सव्येन वा **इन्द्रमन्वारभामहे होतृवूर्ये पुरोहितम् । येनायन्नुत्तमं स्वर्देवा अङ्गिरसो दिवम्** ॥ इति । संमार्गतृणैस्त्रिरभ्यात्मं मुखं संमृजीत **संमार्गोऽसि सं मां (मा) प्रजया पशुभिर्मृड्ढि** इति सकृन्मन्त्रेण द्विस्तूष्णीम् । स्पृष्टोदकं होतृषदनमभिमन्त्रयेत **अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतरः** इति । अङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं प्रत्यग्दक्षिणा निरसेत् **निरस्तः परावसुः** इति । अप उपस्पृश्य । **इदमहमर्वावसोः सदने सीदामि** इत्युपविशेद्दक्षिणोत्तरिणोपस्थेन । उपविश्य **देवबर्हिः स्वासस्थं त्वाध्यासदेयम्** इति जपति । **अभिहिष होतः प्रतरां बर्हिषद्भव** इति जानुशिरसा बर्हिरुपस्पृश्यात ऊर्ध्वं जपेत्–

**भूपतये नमो भुवनपतये नमो भूतानांपतये नमो भूतये नमः प्राणं प्रपद्येऽपानं प्रपद्ये व्यानंप्रपद्ये वाचं प्रपद्ये चक्षुः प्रपद्ये श्रोत्रं प्रपद्ये मनः प्रपद्य आत्मानं प्रपद्ये गायत्रीं प्रपद्ये त्रिष्टुभं प्रपद्ये जगतीं प्रपद्येऽनुष्टुभं प्रपद्ये छन्दांसि प्रपद्ये**

**सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यः ॥** [१० ।१५८ ।१]

**नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।**

**यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः ॥** [१ ।२७ ।१३]

**विश्वेदेवाः शास्तन मा यथेह होता वृतो मनवै यं निषद्य ।**

**प्र मे ब्रूत भागदेयं यथा वो येन पथा हव्यमा वो वहानि ॥** [१० ।५२ ।१]

**अराधि होता निषदा यजीयानभि प्रयांसि सुधितानि हि ख्यत् ।**

**यजामहै यज्ञियान् हन्त देवाँ ईळामहा ईड्याँ आज्येन ॥** [१० ।५३ ।२]

**तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवा असाम ।**

**ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम् ॥** [ऋ.स १० ।५३ ।४]

इत्युपांशुना समाप्य । प्रदीप्त इध्मे स्रुचावादापयेन्निगदेन **अग्निर्होता वेत्वग्नेर्होत्रं वेत्तु प्रावित्रं साधु ते यजमानदेवता यो अग्निम्** इत्यवसाय **होतारमवृथाः** इति जपेत् । **घृतवतीमध्वर्यो स्रुचमास्यस्व देवयुवं विश्ववारे ईळामहै देवाँ ईळेन्यान्नमस्याम नमस्यान् यजाम यज्ञियान् ॥**

**अथ प्रयाजाः ।**

अध्वर्युराश्रावयति प्रत्याश्रावयेदाग्नीध्र उत्करदेशे तिष्ठन् स्फ्यमिध्मसन्नहनानीत्यादाय दक्षिणमुखः **अस्तु श्रौ३षट्** इत्यौकारं प्लावयन् । अध्वर्युणा **समिधो यज** इति प्रेषितो यजति ।

१. **ये३ यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तू ३ वौ३षट् । वागोजः सह ओजो मयि प्राणापानौ** इति सर्वत्र वषट्कारमुक्त्वोक्त्वानुमन्त्रयेत् ।

२. **ये३ यजामहे तनूनपादग्न आज्यस्य वेतू३ वौ३षट् । वागोज** इत्यनुमन्त्रणम् ।

वसिष्ठशुनकात्रिवध्र्यश्वराजन्यानां–

**ये३ यजामहे नराशंसो अग्न आज्यस्य वेतू३ वौ३षट् । वागोज** इत्यनुमन्त्रणम् ।

३. **ये३ यजामह इळो अग्न आज्यस्य व्यन्तू३ वौ३षट् । वागोज** इत्यनुमन्त्रणम् ।

४. **ये३ यजामहे बर्हिरग्न आज्यस्य वेतू३ वौ३षट् । वागोज** इत्यनुमन्त्रणम् ।

५. **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं स्वाहा** (उपांशु) **विष्णुं स्वाहाग्नीषोमौ स्वाहेन्द्रं वैमृधम्,** अमावास्यायां– **स्वाहेन्द्राग्नी** इत्यसन्नयतः, सन्नयतः **स्वाहेन्द्रं,** संवत्सरानान्तरं **स्वाहा महेन्द्रं, स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तू३ वौ३षट् ।** (**वागोज** इत्यनुमन्त्रणम्)

**अथाज्यभागौ ।**

अग्नयेऽनुब्रूहि इति प्रेषितः–

**अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतो३म् ॥** [६ ।१६ ।३४]

अग्निं यज इति प्रेषितः– **ये३ यजामहेऽग्निं जुषाणो अग्निराज्यस्य वेतू३ वौ३षट् ।(वागोज** इत्यनुमन्त्रणम्)

सोमायानुब्रूहि इति प्रेषितः–

**त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो असि क्रतो३म् ॥** [१ ।९१ ।५]

सोमं यज इति प्रेषितः–

**ये३ यजामहेसोमंजुषाणः सोम आज्यस्य हविषो वेतू३ वौ३षट् ।** (वागोज इत्यनुमन्त्रणम्)

**अमावास्यायां वृधन्वन्तावाज्यभागौ । तस्य याज्यानुवाक्ये–**

**अग्निः प्रत्नेन मन्मना शुम्भानस्तन्वं स्वाम् । कविर्विप्रेण वावृधो३म् ॥** [८ ।४४ ।१२]

**सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । सुमृळीको न आविशो३म् ॥** [१ ।९१ ।११]

**प्रधानानां देवतानां याज्यानुवाक्याः–**

अग्नयेऽनुब्रूहि इति प्रेषितः–

**अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतो३म् ॥** [८ ।४४ ।१६]

अग्निं यज इति प्रेषितः–

**ये३ यजामहेऽग्निं भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।**

**दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहा३ं वौ३षट् ॥** (वागोजः..) [१० ।८ ।६]

विष्णवे अनुब्रूहि इति प्रेषितः–

(उपांशु) **इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूहळमस्य पांसुरे** (उच्चैः) **ॐ ॥** [१ ।२२ ।१७]

यज इति प्रेषितः–

**ये३ यजामहे** (उपांशु) **विष्णुं त्रिर्देवः पृथिवीमेष एतां विचक्रमे शतर्चसं महित्वा ।**

**प्र विष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नामा३**(उच्चैः) **वौ३षट् ॥ (वागोजः..)** [७ ।१०० ।३]

अग्नीषोमाभ्यामनुब्रूहि इति प्रेषितः–

**अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवतो३म् ॥** [१ ।९३ ।३]

अग्नीषोमौ यज इति प्रेषितः–

**ये३ यजामहेऽग्नीषोमौ युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ।**

**युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीता३ न्वौ३षट् ॥ (वागोजः..)** [१ ।९३ ।५]

इन्द्राय वैमृधायानुब्रूहि इति प्रेषितः–

**वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।**

**यो अस्माँ अभिदासत्यधरं गमया तमो३म् ॥** [१० ।१५२ ।४]

इन्द्रं वैमृधं यज इति प्रेषितः–

**ये३ यजामह इन्द्रं वैमृधं मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः ।**

**सृकं संशाय पविमिन्द्रतिग्मं वि शत्रून् ताह्ळि विमृधो नुदस्वा३ वौ३षट् ॥** (वागोजः..) [१० ।१८० ।२]

**अमावास्यायाम्–**

असन्नयत आहिताग्नेर्याज्यानुवाक्या–

इन्द्राग्निभ्यामनुब्रूहि इति प्रेषितः–

**इन्द्राग्नी अवसागतमस्मभ्यं चर्षणीसहा । मा नो दुःशंस ईशतो३म् ॥** [७ ।९४ ।७]

इन्द्राग्नी यज इति प्रेषितः–

**ये३ यजामह इन्द्राग्नी गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम् ।**

**इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णै३ वौषट् ॥** (वागोजः..) [७ ।९३ ।४]

सन्नयत आहिताग्नेर्याज्यानुवाक्या–

इन्द्रायानुब्रूहि इति प्रेषितः–

**एन्द्र सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठमूतये भरो३म् ॥** [१ ।८ ।१]

इन्द्रं यज इति प्रेषितः–

**ये३ यजामह इन्द्रं प्र स साहिषे पुरुहूत शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु ।**

**इन्द्राभर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीना३ं वौ३षट् ॥** (वागोजः..) [१० ।१८० ।१]

सन्नयत आहिताग्नेः संवत्सरानन्तरम्–

महेन्द्रायानुब्रूहि इति प्रेषितः–

**महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव । स्तोमैर्वत्सस्य वावृधो३म् ॥** [८ ।६ ।१]

महेन्द्रं यज इति प्रेषितः–

**ये३ यजामहे महेन्द्रं भुवस्त्वमिन्द्र ब्रह्मणा महान् भुवो विश्वेषु सवनेषु यज्ञियः ।**

**भुवो नॄँः श्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणा३ इ वौ३षट् ॥** (वागोजः..) [१० ।५० ।४]

**अथ स्विष्टकृत् ।**

अग्नये स्विष्टकृतेऽनुब्रूहि इति प्रेषितः–

**पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँर्ऋतुपते यजेह ।**

**ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्या यजिष्ठो३म् ॥** [१० ।२ ।१]

अग्निं स्विष्टकृतं यज इति प्रेषितः–

**ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाळग्नेः प्रियाधामान्ययाट्** (उपांशु) **विष्णोः** (उच्चैः) **प्रियाधामान्ययाळग्नीषोमयोः प्रियाधामान्ययाळिन्द्रस्य वैमृधस्य प्रियाधामान्ययाट्**

(असन्नयतः) **इन्द्राग्न्योः प्रियाधामान्ययाट्** (सन्नयतः) **इन्द्रस्य प्रियाधामान्ययाट्** (सन्नयत आहिताग्नेः संवत्सरानन्तरम्) **महेन्द्रस्य प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि । यक्षदग्नेर्होतुः प्रियाधामानि यक्षत्स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हवि–**

**रग्ने यद्द्यविशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा ।**

**ऋता यजासि महिना वियद्भूर्हव्या वह यविष्ठ या ते अद्या३ वौ३षट् ॥** (वागोजः..) [६ ।१५ ।१४]

इत्यनवानं यजति प्रकृत्या वा । प्रदेशिन्याः पर्वणी उत्तमे अञ्जयित्वा ओष्ठयोरभ्यात्मं निमार्ष्टि– **वाचस्पतिना ते हुतस्येषे प्राणाय पाश्नामि ।** उत्तरमुत्तरे **।मनसस्पतिना हुतस्योर्जेऽपानाय प्राश्नामि ।** अधरमधरे । स्पृष्टोदकमञ्जलिनेळां प्रतिगृह्य सव्ये पाणौ कृत्वा पश्चादस्या उदगङ्गुलिं पाणिमुपधाय अवान्तरेळामवदापयीत । अन्तरेणाङ्गुष्ठमङ्गुलीश्च स्वयं द्वितीयमाददीत । प्रत्यालब्धामङ्गुष्ठेनाभिसङ्गृह्य प्रत्याहृत्याङ्गुलीरमुष्टिं कृत्वा दक्षिणत इळां परिगृह्यास्यसम्मितामुपह्वयते प्राणसम्मितां वा ।

**इळोपहूता सह दिवा बृहतादित्येनोपास्माँ इळाह्वयतां सह दिवा बृहतादित्येनेळोपहूता सहान्तरिक्षेण वामदेव्येन वायुनोपास्माँ इळाह्वयतां सहान्तरिक्षेण वामदेव्येन वायुनेळोपहूता सह पृथिव्या रथन्तरेणाग्निनोपास्माँ इळाह्वयतां सह पृथिव्या रथन्तरेणाग्निना । उपहूता गावः सहाशिर उप मां गावः सहाशिरा ह्वयन्तामुपहूता धेनुः सह ऋषभोपमां धेनुः सह ऋषभा ह्वयतामुपहूता गौर्घृतपद्युप मां गौर्घृतपदी ह्वयतामुपहूता दिव्याः सप्त होतार उप मां दिव्याः सप्त होतारो ह्वयन्तामुपहूतः सखाभक्ष उप मां सखाभक्षो ह्वयतामुपहूतेळावृष्टिरुप**

**मामिळावृष्टिर्ह्वयताम्** । (इत्युपांशु, अथोच्चैः) **इळोपहूतोपहूतेळोपास्माँ इळाह्वयतामिळोपहूता । मानवी घृतपदी मैत्रावरुणी ब्रह्मदेवकृतमुपहूतं दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः । य इमं यज्ञमावान्ये च यज्ञपतिं वर्धानुपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे । उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूतः ॥** उपहूयावान्तरेळां प्राश्नीयात् । **इळे भागं जुषस्व नः पिन्वगा जिन्वार्वतो रायस्पोषस्येशिषे तस्य नो रास्व तस्य नोदास्तस्यास्ते भागमशीमहि । सर्वात्मानः सर्वतनवः सर्ववीराः सर्वपूरुषाः (सर्वपुरुषाः** इति वा) प्राश्याचम्य आहवनीयपरिस्तरणैरञ्जलिमन्तर्धायान्येनाप आसेचयते तन्मार्जनम् ।

**क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी पतिगृह्णातु ॥** (प्रतिग्रहणमन्त्रः)

मार्जयित्वानुयाजैश्चरन्ति ।

यज इति प्रेषितः–

**देवं बर्हिर्वसुवने वसुधेयस्य वेतू३ वौ३षट् ।** (**वागोज** इत्यनुमन्त्रणम्)

**देवो नराशंसो वसुवने वसुधेयस्य वेतू३ वौ३षट् ।**(**वागोज** इत्यनुमन्त्रणम्)

**देवो अग्निः स्विष्टकृत् सुद्रविणा मन्द्रः कविः सत्यमन्मायजी होता होतुर्होतुरायजीयानग्ने यान् देवानयाड्याँ अपि प्रेर्येते होत्रे अमत्सत तां ससनुषीं होत्रां देवङ्गमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीही३ वौ३षट् ॥**

अमत्सतेत्यत्रावसाय वा अनवानं वा यजेत् । (**वागोज** इत्यनुमन्त्रणम्)

सूक्तवाकाय सम्प्रेषितः– **इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि । उपश्रुती दिवस्पृथिव्यो रोमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्ताम् । शङ्गयी जीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयंकृतौ । वृष्टिद्यावारीत्यापा शंभुवौ मयोभुवा ऊर्जस्वती पयस्वती सूपचरणा च स्वधिचरणा च तयोराविदि ।** (इत्यवसाय)

**अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत । सोम इदं हविरजुषतावीवृधत महो ज्यायोऽकृत । अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत ।** (उपांशु) **विष्णुः** (उच्चैः) **इदं हविरजुषतावीवृधत महो ज्यायोऽकृत । अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् । इन्द्रो वैमृध इदं हविरजुषतावीवृधत महो ज्यायोऽकृत** । अमावास्यायामसन्नयतः– **इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्** । सन्नयतः– **इन्द्र इदं हविरजुषतावीवृधत महो ज्यायोऽकृत** । संवत्सरानन्तरम्– **महेन्द्र इदं हविरजुषतावीवृधत महो ज्यायोऽकृत । देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायोऽक्रत । अग्निर्होत्रेणेदं हविरजुषतावीवृधत महो ज्यायोऽकृत । अस्यामृधेद्धोत्रायां देवङ्गमायामाशास्तेऽयं यजमानः** असाविति नामं निर्दिशेन्नक्षत्रं च । **आयुराशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सजातवनस्यामाशास्त उत्तरां देवयज्यामाशास्ते भूयो हविष्करणमाशास्ते दिव्यं धामाशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाशास्ते तदश्यात् तदृध्यात् तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्योऽवनते वयमग्नेर्मानुषाः । इष्टं च वित्तं चोभे च नो द्यावापृथिवी अंहसस्पातामेह गतिर्वामस्येदं च नमो देवेभ्यः ।**

शंयुवाकाय सम्प्रेषितः– **तच्छंयोरा वृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं चतुष्पदे ॥** अध्वर्युणा दत्तं वेदं गृह्णीयात्– **वेदोऽसि वेदो विदेय** इति । **उदायुषा स्वायुषोदोषधीनां रसेनोत्पर्जन्यस्य धामभिरुदस्थाममृताँ अनु** इत्युपोत्थाय पश्चाद्गार्हपत्यस्य प्राङ्मुख उपविशेत् ।

**अथ पत्नीसंयाजाः ।**

प्रजाकामस्य राकासिनीवालीकुह्व्यः प्राग्गृहपतेर्यजेत । मन्द्रा याज्यानुवाक्याः । प्रणवागूर्वषट्कारा उच्चैः सर्वत्र ।

सोमायानुब्रूहि इति प्रेषितः–

**आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ओ३म् ॥** [१ ।९१ ।१६]

सोमं यज इति प्रेषितः–

**ये३ यजामहे सोमं सं ते पयांसि समुयन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।**

**आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्वा३ वौ३षट् ॥** (वागोजः..) [१ ।९१ ।१८]

त्वष्ट्रेऽनुब्रूहि इति प्रेषितः–

**इह त्वष्टारमग्रियं विश्वरूपमुपह्वये । अस्माकमस्तु केवलः ॐ ॥** [१ ।१३ ।१०]

त्वष्टारं यज इति प्रेषितः–

**ये३ यजामहे त्वष्टारं तन्नस्तुरीपमधपोषयित्नु देव त्वष्टर्विरराणः स्यस्व ।**

**यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामा३ वौ३षट् ॥** (वागोजः..) [३ ।४ ।९]

देवानां पत्नीभ्योऽनुब्रूहि इति प्रेषितः–

**देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।**

**याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवा शर्म यच्छत ॐ ॥** [५ ।४६ ।७]

देवानां पत्नीर्यज इति प्रेषितः–

**ये३ यजामहे दीवानां पत्नीरुत ग्ना व्यन्तु देवपत्नीरिन्द्राण्यग्नाय्यश्विनी राट् ।**

**आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनां३ वौ३षट् ॥** (वागोजः..) [५ ।४६ ।८]

राकाया अनुब्रूहि इति प्रेषितः–

**राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।**

**सीव्यत्वपः सूच्या च्छिद्यमानया दधातु वीरं शतदायमुक्थ्यम् ॐ ॥** [२ ।३२ ।४]

राकां यज इति प्रेषितः–

**ये३ यजामहे राकां यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।**

**ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा३ वौ३षट् ॥** (वागोजः..) [२ ।३२ ।५]

सिनीवाल्या अनुब्रूहि इति प्रेषितः–

**सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।**

**जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॐ ॥** [२ ।३२ ।६]

सिनीवालीं यज इति प्रेषितः–

**ये३ यजामहे सिनीवालीं या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी ।**

**तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतना३ वौ३षट् ॥** (वागोजः..) [२ ।३२ ।७]

कुहव्याअनुब्रूहि इति प्रेषितः–

**कुहूमहं सुवृतं विद्मनापसमस्मिन् यज्ञे जोहवीमि ।**

**सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॐ ॥**

कुहूं यज इति प्रेषितः–

**ये३ यजामहे कुहूं कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु ।**

**सं दाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधातू३ वौ३षट् ॥** (वागोजः..)

अनुमत्या अनुब्रूहि इति प्रेषितः–

**अनुनोद्यामनुमतिर्यज्ञं देवेषु मन्यताम् ।**

**अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ओ३म् ॥**

अनुमतिं यज इति प्रेषितः–

**ये३ यजामहेऽनुमतिमन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।**

**क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषाद्३ वौ३षट् ॥** (वागोजः..)

अग्नये गृहपतयेऽनुब्रूहि इति प्रेषितः–

**अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः ।**

**देवानामुत यो मर्त्यानां यजिष्ठः स प्र यजतामृतावा ओ३म् ॥** [६ ।१५ ।१३]

अग्निं गृहपतिं यज इति प्रेषितः–

**ये३ यजामहेऽग्निं गृहपतिं हव्यवाळग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे ।**

**सुगार्हपत्याः समिषो दिदीह्यस्मद्र्यक् सं मिमीहि श्रवांसी३ वौ३षट् ॥** (वागोजः..) [५ ।४ ।२]

आज्यं पाणितलेऽवदापयीत । इळामुपहूय सर्वं प्राश्नीयात् । शंयुवाको भवेन्न वा । वेदं पत्न्यै प्रदाय वाचयेत् । होताध्वर्युर्वा । **वेदोऽसि वित्तिरसि विदेयकर्मासि करणमसि क्रिया संसनिरसि सनितासि सनेयं घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनम् ।**

**यं बहव उपजीवन्ति यो जनानामसद्वशी । तं विदेय प्रजां विदेय कामाय त्वा ॥** इति

वेदिशिरसा नाभिदेशमालभेत प्रजाकामा चेत् । अथास्या योक्त्रं विचृतेत् ।

**प्र त्वा मुञ्चामि वरुणस्य पाशाद्येन त्वा बध्नात् सविता सुशेवः ।**

**ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या दधामि ॥** [१० ।८५ ।२४]

तत् प्रत्यग्गार्हपत्याद्द्विगुणं प्राक्पाशं निधायोपरिष्टादस्योदगग्राणि वेदतृणानि करोति । पुरस्तात् पूर्णपात्रं संश्लिष्टं वेदतृणैरभिमृश्य वाचयेत्– **पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः ।**

**सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः । अक्षितिरसि मां मे क्षेष्ठाः ।** इति । अथैनां पूर्णपात्रप्रतिदिशमुदकमुदुक्षन्नुदुक्षन्तीं वाचयेत्– **प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् । दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम् । प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम् । उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम् । ऊर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयताम् ।** (**मार्जयन्ताम्** इति वा) । अथास्या उत्तानमञ्जलिमधस्ताद्योक्त्रस्य निधायात्मनश्च सव्यं पूर्णपात्रं निनयन् वाचयेत्–

**माहं प्रजां परासिचं या नः सयावरी स्थन । समुद्रे वो निनयानि स्वं पाथो अपीथ ॥** इति

वेदतृणान्यग्रे गृहीत्वाविधून्वन् त्सन्ततं स्तृणन् त्सव्येन गार्हपत्यादाहवनीयमेति ।

**तन्तुं तन्वन् रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।**

**अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥** [१० ।५३ ।६]

शेषं निधाय प्रत्यगुदगाहवनीयादवस्थायाज्यस्थाल्याः स्रुवेणादाय सर्वप्रायश्चित्तानि जुहुयात् ।

**अयाश्चाग्ने स्यनभिशस्तीश्च सत्यमित्त्वमया असि ।**

**अयासा वयसा कृतोऽयासन् हव्यमूहिषे या नो धेहि भेषजं स्वाहा ॥**

**अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्त धामभिः स्वाहा ॥** [१ ।२२ ।१६]

**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूहळमस्य पांसुरे स्वाहा ॥** [१ ।२२ ।१७]

**भूः स्वाहा । भुवः स्वाहा । स्वः स्वाहा । भूर्भुवःस्वः स्वाहा ॥**

हुत्वा संस्थाजपेनोपस्थाय तीर्थेन निष्क्रम्यानियमः ।

**ॐ च मे स्वरश्च मे यज्ञोप च ते नमश्च ।**

**यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नमः ॥** इति संस्थाजपः ।

॥ शम् ॥

## अन्वारम्भणीयेष्टिः

अस्या इष्टेः पञ्चदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । अग्नाविष्णू, सरस्वती, सरस्वान्, अग्निर्भगी च प्रधानदेवताः । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह ।** (उपांशु) **अग्नाविष्णू आ३वह ।** (उपांशु) **सरस्वतीम् आ३वह ।** (उपांशु) **सरस्वन्तम् आ३वह ।** (उपांशु) **अग्निं भगिनम् आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहा** (उपांशु) **अग्नाविष्णू स्वाहा** (उपांशु) **सरस्वतीं स्वाहा** (उपांशु) **सरस्वन्तं स्वाहा** (उपांशु) **अग्निं भगिनं स्वाहा देवा आज्यपा** इत्यादि ।

वार्त्रघ्नावाज्यभागौ– **अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः ।**

अग्नाविष्ण्वोर्याज्यानुवाक्या–

(उपांशु)**अग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतम् ओ३म् ॥**

**ये३ यजामहे**(उपांशु) **अग्नाविष्णू अग्नाविष्णू महिधाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा**

**दमे दमे सुष्टुतिर्वामियाना प्रति वां जिह्वा घृतमुच्चरण्या३ द्वौ३षट् ॥**

सरस्वत्या याज्यानुवाक्या–

(उपांशु) **पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ओ३म् ॥** [१ ।३ ।१०]

**ये३ यजामहे** (उपांशु) **सरस्वतीं पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।**

**ग्नाभिरच्छिद्रं शरणं सजोषा दुराधर्षं गृणते शर्म यंसा३द् वौ३षट् ॥** [६ ।४९ ।७]

सरस्वतो याज्यानुवाक्या–

(उपांशु) **पीपिवांसं सरस्वतः स्तनं यो विश्वदर्शतः भक्षीमहि प्रजामिषम् ओ३म्** [७९६ ६]

**ये३ यजामहे** (उपांशु) **सरस्वन्तं दिव्यं सुपर्णं वायसं बृहन्तमपां गर्भं दर्शतमोषधीनाम्**

**अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमी३ वौ३षट् ॥** [१ १६४ ५२]

अग्नेर्भगिनो याज्यानुवाक्या–

(उपांशु) **आ सवं सवितुर्यथा भगस्येव भुजिं हुवे अग्निं समुद्रवाससम् ओ३म्** [८ १०२ ६]

**ये३ यजामहे** (उपांशु) **अग्निं भगिनं सनो राधांस्या भरेशानः सहसो यहो**

**भगश्च दातु वार्या३ं वौ३षट् ॥** [७ १५ ११]

स्विष्टकृदि–

**पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँर्ऋतुपते यजेह ।**

**ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्या यजिष्ठो३म् ॥** [१० ।२ ।१]

**ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाट्** (उपांशु) **अग्नाविष्ण्वोः प्रियाधामान्ययाट्** (उपांशु) **सरस्वत्याः प्रियाधामान्ययाट्** (उपांशु) **सरस्वतः प्रियाधामान्ययाट्** (उपांशु) **अग्नेर्भगिनःप्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि...,**

**जुषतां हविरग्ने यदद्यविशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा ।**

**ऋता यजासि महिना वियद्भूर्हव्या वह यविष्ठ या ते अद्या३ वौ३षट् ॥** (वागोजः..) [६ ।१५ ।१४]

सूक्तवाके– **अग्निरिदं..., सोम इदं...,** (उपांशु) **अग्नाविष्णू इदं हविरजुषेथामवीवृधेथां महो ज्यायोक्राताम्...,** (उपांशु) **सरस्वती इदं...,** (उपांशु) **सरस्वान् इदं...,** (उपांशु) **अग्निर्भगी इदं..., देवा आज्यपा** इत्यादि संस्थाजपान्तं प्रकृतिवत्

## अग्न्याधेयप्रयोगः

अस्या इष्टेः पञ्चदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । अग्निः, अग्निः पवमानश्च प्रधानदेवत । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह ।** (उपांशु)**अग्निम् आ३वह ।** (उपांशु) **अग्निं पवमानम् आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहा** (उपांशु) **अग्निं स्वाहा** (उपांशु) **अग्निं पवमानं स्वाहा देवा आज्यपा** इत्यादि ।

वार्त्रघ्नावाज्यभागौ– **अग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वयम्**

अग्नेर्याज्यानुवाक्या–

(उपांशु) **अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति ओ३म् ॥** [८ ।४४ ।१६]

**ये३ यजामहे**(उपांशु) **अग्निं भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।**

**दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहा३ं वौ३षट् ॥** [१० ।८ ।६]

अग्नेः पवमानस्य याज्यानुवाक्या–

(उपांशु) **अग्न आयूंषि पवस आ सुवोर्जमिषं च नः आरे बाधस्व दुच्छुनाम् ओ३म् ॥**

**ये३ यजामहे**(उपांशु) **अग्निं पवमानमग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् ।**

**दधद्रयिं मयि पोषां वौ३षट् ॥**

स्विष्टकृतः याज्यानुवाक्या–

**स हव्यवाळग्निरमर्त्य उशिग्दूतश्चनोहितः अग्निर्धिया समृण्वतो३म्** ३ ११ २

**ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाट्** (उपांशु) **अग्नेः प्रियाधामान्ययाट्** (उपांशु) **अग्नेः पवमानस्य प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि.... जुषतां हविरग्निर्होता पुरोहितोध्वरस्य विचर्षणिः । स वेद यज्ञमानुषा३ ग्वौ३षट् ॥** [३ ।११ ।१]

सूक्तवाके– **अग्निरिदं..., सोम इदं...,** (उपांशु) **अग्निः इदं...,** (उपांशु) **अग्निः पवमानः इदं..., देवा आज्यपा** इत्यादि संस्थाजपान्तं प्रकृतिवत्

# पिण्डपितृयज्ञप्रयोगः

अपराह्णे आचम्य प्राणानायम्य **ममोपात्तदुरितक्षयद्वारा श्री परमेश्वरप्रीत्यर्थं पिण्डपितृयज्ञं करिष्ये** इति सङ्कल्प्य स्वयोनितो दक्षिणाग्निमानीय प्रज्वल्य तस्यैकोल्मुकं प्राग्दक्षिणा प्रणयेत् – **ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति परापुरो निपुरो ये भरन्त्यग्निष्टाल्लोकात् प्रणुदात्वस्मात्** इत्यतिप्रणीय दक्षिणाग्निमतिप्रणीतमुभौ उपसमाधाय परिस्तीर्य च दक्षिणाग्नेः प्रागुदक्प्रत्यगुदग् वैकैकशः पात्राणि सादयेत्– चरुस्थालीशूर्पस्फोलूखलमुसलस्रुवध्रुवकृष्णाजिनसकृदाच्छिन्नेध्ममेक्षणकमण्डलून् इत्येवमासाद्य दक्षिणाग्नेर्दक्षिणतोऽग्निष्ठं शकटमारुह्य तत्रैव शूर्पे चरुस्थालीं विधाय व्रीहिभिः प्रपूर्य पूर्णां निमृज्य स्थाल्यास्यदेशाच्छूर्पोपरि ये पतन्ति तान् व्रीहीन् परिसन्नान् शकटे निधाय कृष्णाजिन उलूखलं कृत्वा स्थाल्यन्तर्गतानविविच्याविविच्य पत्न्यवहन्यात् ततः सकृत् प्रक्षाल्य दक्षिणाग्नौ श्रपयेत् ततो दक्षिणाग्न्यतिप्रणीतयोरन्तराले स्फ्येन लेखामुल्लिखेत्– **अपहता असुरा रक्षांसि वेदिषद** इति तामभ्युक्ष्य सकृदाच्छिन्नैरवस्तीर्य आज्यं गृहीत्वा ध्रुवायां कृत्वा दक्षिणतो दक्षिणाग्नेर्निधाय तेनाज्येन स्थालीमभिघार्य दक्षिणाग्नेः पश्चादासादयेत् यदि नवनीतमाज्यकार्यार्थं स्यात तदास्य विलपनमात्रं कृत्वान्यस्मिन् पात्र आनीयैकपवित्रेण सकृत्तूष्णीमुत्पूय ततो ध्रुवायां कृत्वा दक्षिणतो दक्षिणाग्नेर्निधाय तेन स्थालीपाकं स्रुवेणाभिघार्य दक्षिणाग्नेः पश्चादासादयेत् दक्षिणत आञ्जनाभ्यञ्जनकशिपूपबर्हणानि सादयेत् प्राचीनावीती इध्ममुपसमाधाय मेक्षणं स्रुवेणोपस्तीर्य द्विरवदाय प्रत्यभिघार्य मेक्षणेनादाय जुहुयात् **सोमाय पितृमते स्वधा नमः सोमाय पितृमत इदं न मम अग्नये कव्यवाहनाय स्वधा नमः अग्नये कव्यवाहनायेदं न मम** इति दक्षिणाग्नावेव द्वितीयाहुतिं हुत्वा यज्ञोपवीती मेक्षणं दक्षिणाग्नावनु प्रहृत्य प्राचीनावीती लेखां त्रिरुदकेनोपनयेत्– **शुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहाः** इति तस्यां पराचीनपाणिः पिण्डान्निपृणीयात्– **एतत्ते पितः शर्मन् ये च त्वामत्रानु एतत्ते पितामह शर्मन् ये च त्वामत्रानु एतत्ते प्रपितामह शर्मन् ये च त्वामत्रानु** एवं निपृतानुमन्त्रयेत **अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्** इत्यनुमन्त्र्य सव्यावृदुदङ्ङावृत्य यथाशक्ति अप्राणन्नासित्वाभिपर्यावृत्य **अमीमदन्त पितरो यथाभागमावृषायीषत** इत्यनुमन्त्र्य चरोः प्राणभक्षं भक्षयित्वा **शुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहाः** इत्यपो निनीय **पितः शर्मन्नभ्यङ्क्ष्व पितामह शर्मन्नभ्यङ्क्ष्व प्रपितामह शर्मन्नभ्यङ्क्ष्व पितः शर्मन्नङ्क्ष्व पितामह शर्मन्नङ्क्ष्व प्रपितामह शर्मन्नङ्क्ष्व** इत्यभ्यञ्जनाञ्जने दत्वा **एतद्वः पितरो वासो मा नोऽतोऽन्यत्पितरो युङ्ध्वम्** इति वासो दद्याद्दशामूर्णास्तुकां वा पञ्चाशद्वर्षताया ऊर्ध्वं स्वं लोम अथैनानुपतिष्ठेत **नमो वः पितर इषे नमो वः पितर ऊर्जे नमो वः पितरः शुष्माय नमो वः पितरो घोराय नमो वः पितरो जीवाय नमो वः पितरो रसाय स्वधा वः पितरो नमो वः पितरो नम एता युष्माकं पितर इमा अस्माकं जीवा वो जीवन्त इह सन्तः स्याम मनोन्वा हुवामहे नाराशंसेन स्तोमेन पितृणां च मन्मभिः**

**आ त एतु मनः पुनः क्रत्वे दक्षाय जीवसे ज्योक्च सूर्यं दृशे**

**पुनर्नःपितरो मनो ददातु दैव्यो जनः जीवं व्रातं सचेमहि**

अथैनान् प्रवाहेत्– **परेत नः पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः**

**दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत** इति

अग्निं प्रत्येयात्– **अग्ने तमाद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् ऋद्ध्या मा त ओहैः**

गार्हपत्यम्– **यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम**

**अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु करोतु मामनेहसम्** इति

**वीरं मे दत्त पितरः** इति पिण्डानां मध्यमं पिण्डमादाय पत्नीं प्राशयेत्

**आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् यथायमरपा असत्**

इति पत्न्येव मन्त्रं ब्रूयात् इतरावप्सु पिण्डौ प्रक्षिपेत् अतिप्रणीते वा प्रक्षिप्य पात्राणां द्विवदुत्सर्गः यद्येकमेवावशिष्टं स्यात्तर्हि द्वित्वसम्पादनार्थं तृणेन सह तदुत्सृजेदिति **अनेन पिण्डपितृयज्ञाख्येन कर्मणा श्रीपरमेश्वरः प्रीयताम्**

## आग्रयणप्रयोगः

अस्या इष्टेः सप्तदशसामिधेन्यः । वृधन्वन्तावाज्यभागौ । इन्द्राग्नी, विश्वेदेवाः, सोमः, द्यावापृथिवी च प्रधानदेवताः । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

**नमः प्रवक्त्रे** इत्यादि सामिधेन्यां **पृथुपाजा अमर्त्यः** इति द्वे धाय्ये आवपेत–

**शोचिष्केशस्तमीमहोइं**

**पृथुपाजा अमर्त्यो घृतनिर्णिक् स्वाहुतः । अग्निर्यज्ञस्य हव्यवोइं** [३ ।२७ ।५]

**तं सबाधो यतस्रुच इत्था धिया यज्ञवन्तः । आ चक्रुरग्निमूतयोइं** [३ ।२७ ।६]

**समिद्धो अग्न आहुत** इत्यादि ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । इन्द्राग्नी आ३वह ।** (उपांशु) **विश्वान् देवान् आ३वह ।** (उपांशु) **सोमम् आ३वह ।** (उपांशु) **द्यावापृथिवी आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहेन्द्राग्नी स्वाहा** (उपांशु) **विश्वान् देवान् स्वाहा** (उपांशु) **सोमं स्वाहा** (उपांशु) **द्यावापृथिवी स्वाहा देवा आज्यपा** इत्यादि ।

वृधन्वन्तावाज्यभागौ– **अग्निः प्रत्नेन मन्मना, सोम गीर्भिष्ट्वा वयम् ।**

याज्यानुवाक्या–

इन्द्राग्न्योर्याज्यानुवाक्या–

**इन्द्राग्नी अवसागतमस्मभ्यं चर्षणीसहा । मा नो दुःशंस ईशतो३म् ॥** [७ ।९४ ।७]

**ये३ यजामह इन्द्राग्नी गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम् ।**

**इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णै३ वौंषट् ॥** [७ ।९३ ।४]

विश्वेषां देवानां याज्यानुवाक्या–

(उपांशु) **विश्वे देवास आगत शृणुता म इमं हवम् । एदं बर्हिर्निषीदत ओ३म् ॥** [२ ।४१ ।१३]

**ये३ यजामहे** (उपांशु) **विश्वान् देवान् ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां सधस्थे ।**

**ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यन्तु देवा३ वौ३षट् ॥** [६ ।५२ ।१५]

सोमस्य याज्यानुवाक्या–

(उपांशु) **सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे । ताभिर्नोऽविता भवो३म् ॥** [१ ।९१ ।९]

**ये३ यजामहे**(उपांशु) **सोमं या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ।**

**तेभिर्नो विश्वैः सुमना अहेळन् राजन् त्सोम प्रति हव्या गृभाया३ वौ३षट् ॥** [१ ।९१ ।१]

द्यावापृथिव्योर्याज्यानुवाक्या–

(उपांशु) **मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ओँ** ॥[१ ।२२ ।१३]

**ये३ यजामहे**(उपांशु) **द्यावापृथिवी प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वं सदने ऋतस्य ।**

**आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथाइं वौ३षट् ॥** [७ ।५३ ।२]

स्विष्टकृतः याज्यानुवाक्या–

**प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वां शश्वन्त उपयन्ति वाजो३म्** ॥[७ ।१ ।३]

**ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाळिन्द्राग्न्योः प्रियाधामान्ययाट्** (उपांशु) **विश्वेषां देवानां प्रियाधामान्ययाट्** (उपांशु) **सोमस्य प्रियाधामान्ययाट्** (उपांशु) **द्यावापृथिव्योः प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि ।...जुषतां हवि–**

**रिमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ । प्रति न ईं सुरभीणि व्यन्तू३ वौ३षट्** ॥ [७ ।१ ।१८]

इळां प्रकृतिवदुपहूय इळाभक्षणे **इळे भाग**मिति मन्त्रं जपित्वावान्तरेळां सव्ये पाणौ कृत्वा इतरेण पाणिनाभिमृशेत्–

**प्रजापतये त्वा ग्रहं गृह्णामि मह्यं श्रियै मह्यं यशसे मह्यमन्नाद्याय** इति मन्त्रेण

**भद्रां नः श्रेयः समनैष्ट देवास्त्वया वसेन समशी महित्वा**

**स नो मयोभूः पितवाविवेशेह शं नो भव द्विपदे शं चतुष्पदे** इति प्राश्याचम्य नाभिमालभेत–

**अमोऽसि प्राण तदृतं ब्रवीम्यमासि सर्वानसि प्रविष्टः**

**स मे जरां रोगमपनुद्य शरीरादमाम एधि मामृथाम इन्द्र** इति /अप उपस्पृश्य

सूक्तवाके– **अग्निरिदं..., सोम इदं..., इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्** (उपांशु) **विश्वे देवा इदं हविरजुषन्तावीवृधन्त महो ज्यायोऽक्रत ।** (उपांशु) **सोमः इदं...,** (उपांशु) **द्यावापृथिवी इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम् । देवा आज्यपा** इत्यादि संस्थाजपान्तं प्रकृतिवत्

# चातुर्मास्यानि

## ॥ वैश्वदेव पर्व ॥

**अन्वारम्भणीयेष्टिः ।**

अस्या इष्टेः पञ्चदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । अग्निर्वैश्वानरः, पर्जन्यश्च प्रधानदेवताः । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह ।** (उपांशु) **अग्निं वैश्वानरम् आ३वह ।** (उपांशु) **पर्जन्यम् आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहा** (उपांशु) **अग्निं वैश्वानरं स्वाहा** (उपांशु) **पर्जन्यं स्वाहा देवा आज्यपा** इत्यादि ।

वार्त्रघ्नावाज्यभागौ– **अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः ।**

अग्नेर्वैश्वानरस्य याज्यानुवाक्या–

(उपांशु) **वैश्वानरो अजीजनदग्निर्नो नव्यसीं मतिम् । क्ष्मया वृधान ओजसा ओ३म् ॥**

**ये यजामहे** (उपांशु) **अग्निं वैश्वानरं पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ।**

**वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्ता३ं वौ३षट् ॥** (वागोजः..,) [१ ।९७ ।२]

पर्जन्यस्य याज्यानुवाक्या–

(उपांशु) **पर्जन्याय प्र गायत दिवस्पुत्राय मीह्ळुषे । स नो यवसमिच्छतु ओ३म् ॥** [७ ।१०२ ।१]

**ये यजामहे** (उपांशु) **पर्जन्यं प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः ।**

**इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावती३ वौ३षट् ॥** []

प्राकृते संयाज्ये– **पिप्रीहि देवाँ उशतो यविष्ठ... अयाट्** (उपांशु) **अग्नेर्वैश्वानरस्य प्रियाधामान्ययाट्** (उपांशु) **पर्जन्यस्य प्रियाधामानि... अग्ने यदद्य विशो अध्वरस्ये**त्यादि ।

सूक्तवाके– **अग्निरिदं..., सोम इदं...,** (उपांशु)**अग्निर्वैश्वानर इदं...,** (उपांशु) **पर्जन्य इद**मित्यादि ।

शेषं सर्वं प्रकृतिवत् ।

अग्निमन्थनम् ।

**अग्नये मथ्यमानायानुब्रूहि** इति प्रेषितः पश्चात् सामिधेनीस्थानस्य पदमात्रेऽवस्थायाभि हिंकृत्य ।

**हिम्, भूर्भुवःस्वरो३**

**मभि त्वा देव सवितरिशानं वार्याणाम् । सदावन् भागमीमहो३**

**मभि त्वा देव सवितरिशानं वार्याणाम् । सदावन् भागमीमहो३** [१ ।२४ ।३]

**मभि त्वा देव सवितरिशानं वार्याणाम् । सदावन् भागमीमहो३**

**मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभो३ं** [१ ।२२ ।१३]

**त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतो३ं** [६ ।१६ ।१३]

**तमु त्वा दध्यङ् ऋषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरन्दरो३ं** [६ ।१६ ।१४]

**तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् ।** इत्यवसाय, [६ ।१६ ।१५]

अजातेग्नौ राक्षोघ्नीरनुब्रूयात् । जातायानुब्रूहि इत्युक्ते–

**धनञ्जयं रणे रणो३**

**मुत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनञ्जयो रणे रणो३** [१ ।७४ ।३]

**मायं हस्ते न खादिनं शिशुं जातं न बिभ्रति ।** इत्यर्धर्च आरमेत् [६ ।१६ ।४०]

प्रह्रियमाणाय प्रेषितः कुण्डे निधीयमाने–

**विशामग्निं स्वध्वरो३म्**

**प्र देवं देववीतये भरता वसुवित्तमम् । आ स्वे योनौ निषीदतो३** [६ ।१६ ।४१]

**मा जातं जातवेदसि प्रियं शिशीताथितिम् । स्योन आ गृहपतो३** [६ ।१६ ।४२]

**मग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यो३ं** [१ ।१२ ।६]

**त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन् त्सता । सखा सख्या समिध्यसो३ं** [८ ।४३ ।१४]

**तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनो३ं** [८ ।८४ ।८]

**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।**

**ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवो३ं** [१० ।९० ।१६]

**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।**

**ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवो३ं** [१० ।९० ।१६]

**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।**

**ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवो३म् ।** प्रक्रमस्थाने भूर्भुवःस्वरोमिति वाचं विसृजते ।

## वैश्वदेवपर्व ।

अस्या इष्टेः सप्तदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । नवप्रयाजा नवानूयाजाः । अग्निः, सोमः, सविता, सरस्वती, पूषा, मरुतः स्वतवसः, विश्वेदेवाः, द्यावापृथिवी च प्रधानदेवताः । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

**नमः प्रवक्त्रे** इत्यादि सामिधेन्यां **पृथुपाजा अमर्त्यः** इति द्वे धाय्ये आवपेत–

**शोचिष्केशस्तमीमहो३ं**

**पृथुपाजा अमर्त्यो घृतनिर्णिक् स्वाहुतः । अग्निर्यज्ञस्य हव्यवो३ं** [३ ।२७ ।५]

**तं सबाधो यतस्रुच इत्था धिया यज्ञवन्तः । आ चक्रुरग्निमूतयो३ं** [३ ।२७ ।६]

**समिद्धो अग्न आहुत** इत्यादि ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । अग्निमा३वह । सोममा३वह । सवितारम्** (उपांशु) **आ३वह । सरस्वतीमा३वह । पूषणमा३वह । मरुतः स्वतवस आ३वह । विश्वान् देवाना३वह ।** (उपांशु) **द्यावापृथिवी आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

प्रयाजाः–

**१. ये३ यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तू३ वौ३षट् ।**

**२. ये३ यजामहे तनूनपादग्न आज्यस्य वेतू३ वौ३षट् ।**

वसिष्ठशुनकात्रिवध्र्यश्वराजन्यानां–

**ये३ यजामहे नराशंसो अग्न आज्यस्य वेतू३ वौ३षट्**

**३. ये३ यजामह इळो अग्न आज्यस्य व्यन्तू३ वौ३षट् ।**

**४. ये३ यजामहे बर्हिरग्न आज्यस्य वेतू३ वौ३षट् ।**

**५. ये३ यजामहे दुरो अग्न आज्यस्य व्यन्तू३ वौ३षट् ।**

**६. ये३ यजामह उषासानक्ताग्न आज्यस्य वीता३ं वौ३षट् ।**

**७. ये३ यजामहे दैव्या होताराग्न आज्यस्य वीता३ं वौ३षट् ।**

**८. ये३ यजामहे तिस्रो देवीरग्न आज्यस्य व्यन्तू३ वौ३षट् ।**

**९. ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं स्वाहा सोमं स्वाहा** (उपांशु) **सवितारं स्वाहा सरस्वतीं स्वाहा पूषणं स्वाहा मरुतः स्वतवसः स्वाहा विश्वान् देवान् त्स्वाहा** (उपांशु) **द्यावापृथिवी स्वाहा देवा आज्यपा** इत्यादि ।

वार्त्रघ्नावाज्यभागौ– **अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः ।**

अग्नेर्याज्यानुवाक्या–

**अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतो३म् ॥** [८ ।४४ ।१६]

**ये३ यजामहेऽग्निं भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचते शिवाभिः ।**

**दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहा३ं वौ३षट् ॥** [१० ।८ ।६]

सोमस्य याज्यानुवाक्या–

**सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे । ताभिर्नोऽविता भवो३म् ॥** [१ ।९१ ।९]

**ये३ यजामहे सोमं या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ।**

**तेभिर्नो विश्वैः सुमना अहेळन् राजन् त्सोम प्रति हव्या गृभाया३ वौ३षट् ॥** [१ ।९१ ।१]

सवितुर्याज्यानुवाक्या–

(उपांशु) **आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे । सत्यसवं सवितारम् ॐ ॥** [५ ।८२ ।७]

**ये३ यजामहे** (उपांशु) **सवितारं वाममद्य सवितर्वाममुश्वोदिवे दिवे वाममस्मभ्यं सवीः ।**

**वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्यामा३ वौ३षट् ॥** [६ ।७१ ।६]

सरस्वत्या याज्यानुवाक्या–

**पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसो३म् ॥** [१ ।३ ।१०]

**ये३ यजामहे सरस्वतीं पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।**

**ग्नाभिरच्छिद्रं शरणं सजोषा दुराधर्षं गृणते शर्म यंसा३द् वौ३षट् ॥** [६ ।४९ ।७]

पूष्णो याज्यानुवाक्या–

**पूषन् तव व्रते वयं नरिष्येम कदाचन । स्तोतारस्तु इह स्मसो३म् ॥** [६ ।५४ ।९]

**ये३ यजामहे पूषणं शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।**

**विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तू३ वौ३षट् ॥** [६ ।५८ ।१]

मरुतां स्वतवसां याज्यानुवाक्या–

**इहेह वः स्वतवसः कवयः सूर्यत्वचः । यज्ञं मरुत आ वृणो३म् ॥** [५ ।५९ ।११]

**ये३ यजामहे मरुतः स्वतवसः प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।**

**ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्या३ वौ३षट् ॥** [६ ।६६ ।९]

विश्वेषां देवानां याज्यानुवाक्या–

**विश्वे देवास आगत शृणुता म इमं हवम् । एदं बर्हिर्निषीदतो३म् ॥** [२ ।४१ ।१३]

**ये३ यजामहे विश्वान् देवान् ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां सधस्थे ।**

**ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यन्तु देवा३ वौ३षट् ॥** [६ ।५२ ।१५]

द्यावापृथिव्योर्याज्यानुवाक्या–

(उपांशु) **मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॐ ॥**[१ ।२२ ।१३]

**ये३ यजामहे**(उपांशु) **द्यावापृथिवी प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वं सदने ऋतस्य ।**

**आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथा३ं वौ३षट् ॥** [७ ।५३ ।२]

स्विष्टकृतः– **प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वां शश्वन्त उपयन्ति वाजो३म् ॥**[७ ।१ ।३]

**ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाळग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाट्** (उपांशु) **सवितुः प्रियाधामान्ययाट् सरस्वत्याः प्रियाधामान्ययाट् पूष्णः प्रियाधामान्ययाण् मरुतां स्वतवसां प्रियाधामान्ययाड् विश्वेषां देवानां प्रियाधामान्ययाट्** (उपांशु) **द्यावापृथिव्योः प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि ।... जुषतां हवि–**

**रिमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ । प्रति न ईं सुरभीणि व्यन्तू३ वौ३षट् ॥** [७ ।१ ।१८]

ततः इळाभक्षणान्ते नवानुयाजाः ।

**१. देवं बर्हिर्वसुवने वसुधेयस्य वेतू३ वौ३षट् ।**

**२. देवीर्द्वारो वसुवने वसुधेयस्य व्यन्तू३ वौ३षट् ।**

**३. देवी उषासानक्ता वसुवने वसुधेयस्य वीता३ं वौ३षट् ।**

**४. देवी जोष्ट्री वसुवने वसुधेयस्य वीता३ं वौ३षट् ।**

**५. देवी ऊर्जाहुती वसुवने वसुधेयस्य वीता३ं वौ३षट् ।**

**६. देवा दैव्या होतारा वसुवने वसुधेयस्य वीता३ं वौ३षट् ।**

**७. देवीस्तिस्रस्तिसो देवीर्वसुवने वसुधेयस्य व्यन्तू३ वौ३षट् ।**

**८. देवो नराशंसो वसुवने वसुधेयस्य वेतू३वौ३षट् ।**

**९. देवो अग्निः स्विष्टकृत् सुद्रविणा मन्द्रः कविः सत्यमन्मायजी होता होतुर्होतुरायजीयानग्ने यान् देवानयाड्याँ अपि प्रेर्येते होत्रे अमत्सत तां ससनुषीं होत्रां देवङ्गमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीही३ वौ३षट् ।**

सूक्तवाके– **अग्निरिदं..., सोम इदं..., अग्निरिदं..., सोम इदं...,** ˙(उपांशु)**सविता इदं..., सरस्वतीदं..., पूषेदं..., मरुतः स्वतवस इदं हविरजुषन्तावीवृधन्त महो ज्यायोऽक्रत । विश्वे देवा इदं हविरजुषन्तावीवृधन्त महो ज्यायोऽक्रत** । ˙(उपांशु) **द्यावापृथिवी इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम् । देवा आज्यपा** इत्यादि ।

अनुयाजानां सूक्तवाकस्य शंयुवाकस्य वोपरिष्टाद् वाजिनप्रचारः । वाजिभ्योऽनुब्रूहि इत्युक्ते–

**शं नो भवन्तु वाजिनो हवेषु देवातातामितद्रवः स्वर्काः ।**

**जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवो३म् ॥** [७ ।३७ ।७]

**ये३ यजामहे वाजिनो वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञा**

**अस्य मध्वः पिबत मादयध्वं तृप्तायाथ पथिभिर्देवयानै३र् वौ३षट् ॥** [७ ।३७ ।८]

ऊर्ध्वज्ञुरनवानं जपति अनुवष्ट्कारमासीनः ।

**अग्ने वीहि** अथवा **वाजिनस्याग्ने वीही३ वौ३षट् ।** इति अनुवषट्कारः । द्विर्वागोजः ।

वाजिनमिळामिव प्रतिगृह्य उपहवमिच्छेत– **अध्वर्य उपह्वयस्व । ब्रह्मन्नुपह्वयस्व । अग्नीदुपह्वयस्व । यजमानोपह्वयस्व ।**

**यन्मे रेतः प्रसिच्यते यद्वा मे अपि गच्छति यद्वा जायते पुनः ।**

**तेन मा शिवमाविश तेन मा वाजिनं कुरु । तस्य ते वाजपीतस्य उपहूतस्योपहूतो भक्षयामि ।** इति प्राणभक्षं भक्षयेत् । एवमध्वर्युर्ब्रह्माग्नीध्रः । यजमानः प्रत्यक्षमितरे च दीक्षिताः ।

वेदोऽसि वेदो विदेयेत्यादि संस्थाजपान्तं प्रकृतिवत् ।

## ॥ इति वैश्वदेवपर्व ॥

## ॥ अथ वरुणप्रघासाः ॥

पश्चाद्दार्शपौर्णमासिकाया वेदेरुपविश्य निरसनोपवेशने कृत्वा प्रेषितोऽग्निप्रणयनीयाः प्रतिपद्यते ।

अग्नये प्रणीयमानायानुब्रूहि इत्युक्ते–**हिम्, भूर्भुवःस्वरो३म्**

**प्र देवं देव्या धिया भरता जातवेदसम् । हव्या नो वक्षदानुषो३म्** [१० ।१७६ ।२]

**प्र देवं देव्या धिया भरता जातवेदसम् । हव्या नो वक्षदानुषो३म्**

**प्र देवं देव्या धिया भरता जातवेदसम् ।**

आसीनः प्रथमामन्वाह उपांशु सप्रणवाम् । तत्र स्थानात् स्थानसंक्रमणे प्रणवेनावसायानुच्छ्वस्योत्तरां प्रतिपद्यते । प्राणसन्ततं भवतीति विज्ञायते । उत्तरमग्निमनुव्रजन्नुत्तराः ।

**हव्या नो वक्षदानुषो३**

**मयमुष्य प्र देवयुर्होता यज्ञाय नीयते ।**

**रथो न योरभीवृतो घृणीवान् चेतति त्मनो३** [१० ।१७६ ।३]

**मयमग्निरुरुष्यत्यमृतादिव जन्मनः ।**

**सहसश्चित् सहीयान् देवो जीवातवे कृतो३** [१० ।१७६ ।४]

**मिळायास्त्वा पदे वयं नाभापृथिव्या अधि ।**

**जातवेदो निधीमह्यग्ने हव्याय वोह्ळवो३** [३ ।२९ ।४]

**मग्ने विश्वेभिः स्वनीकदेवैरूर्णावन्तं प्रथमः सीद योनिम् ।**

अर्धर्चेऽवसाय पश्चादुत्तरस्या वेदेरवस्थाय समापयेत् । निहितेऽग्नौ–

**कुलायिनं घृतवन्तं सवित्रे यज्ञं नय यजमानाय साधो३ं** [६ ।१५ ।१६]

**सीद होतः स्वमु लोके चिकित्वान् त्सादया यज्ञं सुकृतस्य योनौ ।**

**देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयोधो३ं** [३ ।२९ ।८]

**नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत् सुदक्षः ।**

**अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्नो३ं** [२ ।९ ।१]

**त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता ।**

**अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन् दीद्यद्बोधि गोपो३ं** [२ ।९ ।२]

**त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता ।**

**अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन् दीद्यद्बोधि गोपो३ं**

**त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता ।**

**अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन् दीद्यद्बोधि गोपो३म्** इति परिसमाप्य पूर्वस्मिन्नेवासने उपविश्य **भूर्भुवःस्वरिति** वाचं विसृजते । अग्निमन्थनं वैश्वदेवपर्ववत् करणीयम् ।

अस्या इष्टेः सप्तदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । नवप्रयाजा नवानूयाजाः । अग्निः, सोमः, सविता, सरस्वती, पूषा, इन्द्राग्नी, मरुतः, वरुणः, कश्च प्रधानदेवताः । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

**नमः प्रवक्त्रे** इत्यादि सामिधेन्यां **पृथुपाजा अमर्त्यः** इति द्वे धाय्ये आवपेत–

**शोचिष्केशस्तमीमहो३ं**

**पृथुपाजा अमर्त्यो घृतनिर्णिक् स्वाहुतः । अग्निर्यज्ञस्य हव्यवो३ं** [३ ।२७ ।५]

**तं सबाधो यतस्रुच इत्था धिया यज्ञवन्तः । आ चक्रुरग्निमूतयो३ं** [३ ।२७ ।६]

**समिद्धो अग्न आहुत** इत्यादि ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । अग्निमा३वह । सोममा३वह । सवितारम्** (उपांशु) **आ३वह । सरस्वतीमा३वह । पूषणमा३वह । इन्द्राग्नी आ३वह । मरुत आ३वह । वरुणमा३वह ।** (उपांशु) **कम् आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं स्वाहा सोमं स्वाहा** (उपांशु) **सवितारं स्वाहा सरस्वतीं स्वाहा पूषणं स्वाहेन्द्राग्नी स्वाहा मरुतः स्वाहा वरुणं स्वाहा** (उपांशु) **कं स्वाहा देवा आज्यपा** इत्यादि ।

वार्त्रघ्नावाज्यभागौ– **अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः ।**

प्रधानानां पौष्णयागान्तं वैश्वदेववत् ।

इन्द्राग्न्योर्याज्यानुवाक्या–

**इन्द्राग्नी अवसागतमस्मभ्यं चर्षणीसहा । मा नो दुःशंस ईशतो३म् ॥** [७ ।९४ ।७]

**ये३ यजामह इन्द्राग्नी श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात् ।**

**इरज्यन्ता वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता३ वौ३षट् ॥** [६ ।६० ।१]

मरुतां याज्यानुवाक्या–

**मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनो३म् ॥** [१ ।८१ ।१]

**ये३ यजामहे मरुतोऽरा इवेदचरमा अहेव प्रप्र जायन्ते अकवा महोभिः ।**

**पृश्नेः पुत्रा उपमासो रभिष्ठाः स्वया मत्या मरुतः सम्मिमिक्षू३र् वौ३षट् ॥** [५ ।५८ ।५]

वरुणस्य याज्यानुवाक्या–

**इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युराचकोऽ३म् ॥** [१ ।२५ ।१९]

**ये३ यजामहे वरुणं तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।**

**अहेळमानो वरुणेह बोध्युरुशंसमान आयुः प्रमोषी३र् वौ३षट् ॥** [१ ।२४ ।११]

कस्य याज्यानुवाक्या–

(उपांशु) **कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॐ ॥** [४ ।३१ ।१]

**ये३ यजामहे**(उपांशु) **कं हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।**

**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेमा३ वौ३षट् ॥** [१० ।१२१ ।१]

स्विष्टकृतः– **प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वां शश्वन्त उपयन्ति वाजो३म् ।**

**ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाळग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाट्** (उपांशु) **सवितुः प्रियाधामान्ययाट् सरस्वत्याः प्रियाधामान्ययाट् पूष्णः प्रियाधामान्ययाळिन्द्राग्न्योः प्रियाधामान्ययाण् मरुतां प्रियाधामान्ययाड् वरुणस्य प्रियाधामान्ययाट्** (उपांशु) **कस्य प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि ।...जुषतां हवि–**

**रिमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ । प्रति न ईं सुरभीणि व्यन्तू३ वौ३षट् ।**

सूक्तवाके– **अग्निरिदं..., सोम इदं..., अग्निरिदं..., सोम इदं...,** (उपांशु)**सविता इदं..., सरस्वतीदं..., पूषेदं..., इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् । मरुत इदं हविरजुषन्तावीवृधन्त महो ज्यायोऽक्रत । वरुण इदं हविरजुषतावीवृधत महो ज्यायोऽकृत ।** (उपांशु) **कः इदं हविरजुषतावीवृधत महो ज्यायोऽकृत । देवा आज्यपा** इत्यादि ।

अनुयाजानां सूक्तवाकस्य शंयुवाकस्य वोपरिष्टाद् वाजिनप्रचारः । वाजिने प्रतिपस्थातृ तृतीयः– **अध्वर्य उपह्वयस्व । ब्रह्मन्नुपह्वयस्व । प्रतिपस्थातरुपह्वयस्व । अग्नीदुपह्वयस्व । यजमानोपह्वयस्व ।**

वेदोऽसि वेदो विदेयेत्यादि संस्थाजपान्तं प्रकृतिवत् ।

## ॥ अथावभृतेष्टिः ॥

उदकमनुस्पृशन् बहिः पश्चादवस्थाय अग्निर्होता वेत्त्वित्यादि बर्हिर्वर्जं त्रीन् प्रयाजान् यजति ।

उत्तमे प्रयाज– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहा वरुणं स्वाहा देवा आज्यपा** इत्यादि ।

अप्सुमन्तावाज्यभागौ–

**अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे । गर्भे सञ्जायसे पुनो३म् ॥** [८ ।४३ ।९]

**अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशम्भुवो३म् ॥** [१० ।९ ।६]इति पुरोनुवाक्याः ।

प्रधानस्य–

वरुणस्य याज्यानुवाक्या–

**अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ।**

**क्षयन्नस्मभ्यमसुरप्रचेता राजन्नेनांसि शिश्रथः कृतानो३म् ॥** [१ ।२४ ।१४]

**ये३ यजामहे वरुणमुदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय ।**

**अथा वयमादित्य व्रते तवानागसो अदितये स्यामा३ वौ३षट् ॥** [१ ।२४ ।१५]

आनिगदः स्विष्टकृत्–**त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळोऽव यासिसीष्ठाः ।**

**यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मो३म् ॥** [४ ।१ ।४]

**ये३ यजामहेऽग्नीवरुणौ स्विष्टकृतौ स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।**

**अव यक्ष्म नो वरुणं रराणो वीहि मृळीकं सुहवो न एधी३ वौ३षट् ॥** [४ ।१ ।५]

अनुयाजपक्षे बर्हिर्वर्जानुयाजाः ।

संस्थितायां पादानुदकान्तेव दद्युः । **नमो नरुणायाभिष्टितो वरुणस्य पाशः** । तत आचामन्ति । **भक्षस्यावभृतोऽसि** । प्रोथ्य प्रष्ठीवन्ति । **भक्षितस्यावभृतोऽसि । भक्षं कृतस्यावभृतोऽसि** । मन्त्राभ्यां प्रगिरन्ति ।

**आपो अस्मान् मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।**

**विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि ॥** [१० ।१७ ।१०]

**इदमापः प्रवहत यत्किञ्च दुरितं मयि ।**

**यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥** [१ ।२३ ।२२]

**सुमित्र्या न आप ओषधयो भवन्तु दुर्मित्रास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ।**

एभिर्मन्त्रैः स्नानं कुर्युः । अदीक्षिता एभिर्मन्त्रैरभ्युक्षेरन् स्नानं कुर्युरिति वा ।

**उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।**

**देवं देवत्रा सूर्यमगन्महि ज्योतिरुत्तमम् ॥** [१ ।५० ।१०]

इत्युदेत्य अस्पृष्ट्वा अनवेक्षमाणा असंस्पृशन्तः प्रत्यायन्तः समिधः कुर्वते तिस्रस्तिस्र एकैकः ।

**अग्नेः समिदसि तेजोऽसि तेजो मे देहि** । इति प्रथमाम् । **एधोऽस्येधिषीमहि**–द्वितीयाम् ।

**समिदसि समेधीषीमहि**–तृतीयाम् । आहवनीयमेत्योपतिष्ठन्ते–

**आपो अद्यान्वचारिषं रसेन समगस्महि ।**

**पयस्वानग्न आ गहि तं मा संसृज वर्चसा ॥** [१ ।२३ ।२३]

ततः समिधोऽभ्यादधाति यथा गृहीतम् । **अग्नेः समिदसि तेजोऽसि तेजो मेऽदा स्वाहा** । इति प्रथमाम् । **सोमस्य समिदसि दुरिष्टेर्मा पाहि स्वाहा**– द्वितीयाम् । **पितॄणां समिदसि मृत्योर्मा पाहि स्वाहा**– तृतीयाम् । ततः संस्थाजपेनोपस्थानम् ।

## ॥ इति वरुणप्रघासाः ॥

## ॥ अथ साकमेधाः ॥

**अथानीकवतीष्टिः ।**

अस्या इष्टेः पञ्चदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । अग्निरनीकवान् प्रधानदेवता । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । अग्निमनीकवन्तमा३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहाग्निमनीकवन्तं स्वाहा देवा आज्यपा** इत्यादि ।

वार्त्रघ्नावाज्यभागौ– **अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः ।**

अग्नेरनीकवतो याज्यानुवाक्याः–

**अनीकवन्तमूतयेऽग्निं गीर्भिर्हवामहे । स नः पर्षदति द्विषो३म् ॥**

**ये३ यजामहेऽग्निमनीकवन्तं सैनानीकेन सुविदत्रो अस्मे यष्टा देवाँ आयजिष्ठः स्वस्ति ।**

**अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीही३ वौ३षट् ॥** [२ ।९ ।६]

स्विष्टकृति– प्राकृते संयाज्ये । **अयाळग्नेरनीकवतः प्रियाधामानि** इत्यादि ।

सूक्तवाके– **अग्निरिदं..., सोम इदं..., अग्निरनीकवानिदं...,** इत्यादि । शेषं प्रकृतिवत् ॥

**अथ सान्तपनेष्टिः ।**

अस्या इष्टेः पञ्चदशसामिधेन्यः । वृधन्वन्तावाज्यभागौ । मरुतः सान्तपनाः प्रधानदेवता । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । मरुतः सान्तपनाना३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहा मरुतः सान्तपनान् त्स्वाहा देवा आज्यपा** इत्यादि ।

वृधन्वन्तावाज्यभागौ– **अग्निः प्रत्नेन मन्मना, सोम गीर्भिष्ट्वा वयम् ।**

मरुतां सान्तपनानां याज्यानुवाक्याः–

**सान्तपना इदं हविर्मरुतस्तज्जुजुष्टन । युष्माकोती रिशादसो३म् ॥** [७ ।५९ ।९]

**ये३ यजामहे मरुतः सान्तपनान् यो नो मरुतो अभि दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति ।**

**द्रुहः पाशान् प्रति समुचीष्ट तपिष्ठेन हन्मना हन्तना ता३ं वौ३षट् ॥** [७ ।५९ ।८ ।]

स्विष्टकृति– प्राकृते संयाज्ये । **अयाण्मरुतां स्वतवसां प्रियाधामानि** इत्यादि ।

सूक्तवाके– **अग्निरिदं..., सोम इदं..., मरुतः सान्तपना इदं हविरजुषन्तावीवृधन्त महोज्यायोक्रत ।...,** इत्यादि । शेषं प्रकृतिवत् ॥

**अथ गृहमेधीयेष्टिः ।**

आज्यभागप्रभृतीळान्ता । पुष्टिमन्तावाज्यभागौ । मरुतो गृहमेधिनः प्रधानदेवता ।

पुष्टिमन्तावाज्यभागौ–

**अग्निना रयिमश्नवत् पोषमेव दिवे दिवे । यशसं वीरवत्तमो३म् ॥** [१ ।१ ।३]

**गयस्फानो अमीवहा वसुवित् पुष्टिवर्धनः । सुमित्रः सोम नो भवो३म् ॥**[१ ।९१ ।१२]इति पुरोनुवाक्याः ।

मरुतां गृहमेधिनां याज्यानुवाक्या–

**गृहमेधास आगत मरुतो मापभूतन । युष्माकोती सुदानवो३म् ॥** [७ ।५९ ।१०]

**ये३ यजामहे मरुतो गृहमेधिनः प्र बुध्न्या व ईरते महांसि प्र नामानि प्र यज्यवस्तिरध्वम् ।**

**सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वा३ं वौ३षट् ।** ।[७ ।५६ ।१४]

अनिगदं स्विष्टकृतम्– **प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वां शश्वन्त उपयन्ति वाजो३म् ।**

**ये३ यजामहेऽग्निं स्विष्टकृतमिमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ ।**

**प्रति न ईं सुरभीणि व्यन्तू३ वौ३षट् ।**

इळामार्जनान्ते प्रायश्चित्ताहुतयः । ततः संस्थाजपं जपेत् ।

**अथ क्रीळिनेष्टिः ।**

अथ पूर्वादर्वी होमः–यदि होतारं चोदयेयुस्तस्य याज्यानुवाक्ये–

**पूर्णादर्वि परापत सुपूर्णा पुनरापत ।**

**वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो ।**

**देहि मे ददामि ते नि मे धेहि नि ते दधे ।**

**अपामिक्यमिव सम्भरकोऽन्वाददते ददत् ॥**

अस्या इष्टेः पञ्चदशसामिधेन्यः । परोक्षवार्त्रघ्नावाज्यभागौ । मरुतः क्रीळिनः प्रधानदेवता । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । मरुतः क्रीळिन आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहा मरुतः क्रीळिनः स्वाहा देवा आज्यपा** इत्यादि ।

परोक्षवार्त्रघ्नावाज्यभागौ–

**उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनञ्जयो रणे रणो३म् ॥** [१ ।७४ ।३]

**अयं कृत्नुरगृभीतो विश्वजिदुद्भिदित् सोमः । ऋषिर्विप्रः काव्येनो३म् ॥**[८ ।७९ ।१] इति पुरोनुवाक्याः ।

प्रधानस्य–

मरुतां क्रीळिनां याज्यानुवाक्या–

**क्रीळं वः शर्धो मारुतमनर्वाणं रथे शुभम् । कण्वा अभि प्र गायतो३म् ॥** [१ ।३७ ।१]

**ये३ यजामहे मरुतः क्रीळिनोऽत्यासो न ये मरुतः स्वञ्चो यक्षदृशो न शुम्भयन्त मर्याः ।**

**ते हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्रीळिनः पयोधा३ वौ३षट् ॥** [७ ।५६ ।१६]

स्विष्टकृति– **जुष्टो दमूना अतिथिर्दुराण इमं नो यज्ञमिपयाहि विद्वान् ।**

**विश्वा अग्ने अभियुजो विहत्या शत्रूयतामाभरा भोजनानो३म् ॥** [५ ।४ ।५]

**ये यजामह इत्यादि अयाण् मरुतां क्रीळिनां प्रियाधामानि..., जुषतां हविर्**

**अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।**

**सं जास्पत्यं सुयममाकृणुष्व शत्रूयतामभितिष्ठा महांसी३ वौ३षट् ॥** [५ ।२८ ।३]

सूक्तवाके– **अग्निरिदं..., सोम इदं..., मरुतः क्रीळिन इदं हविरजुषन्तावीवृधन्त महो ज्यायोऽक्रत...,** इत्यादि । शेषं प्रकृतिवत् ॥

## ॥ अथ महाहवाः ॥

अस्या इष्टेः सप्तदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । नवप्रयाजा नवानूयाजाः । अग्निः, सोमः, सविता, सरस्वती, पूषा, इन्द्राग्नी, इन्द्रो वृत्रहेन्द्रो महेन्द्रो वा, विश्वकर्मा च प्रधानदेवताः । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च । अग्निप्रणयनग्निमन्थनादि सर्वं वरुणप्रघासवत् । वाजिनावभृतवर्जम् ।

**नमः प्रवक्त्रे** इत्यादि सामिधेन्यां **पृथुपाजा अमर्त्यः** इति द्वे धाय्ये आवपेत–

**शोचिष्केशस्तमीमहो३ं**

**पृथुपाजा अमर्त्यो घृतनिर्णिक् स्वाहुतः । अग्निर्यज्ञस्य हव्यवो३ं** [३ ।२७ ।५]

**तं सबाधो यतस्रुच इत्था धिया यज्ञवन्तः । आ चक्रुरग्निमूतयो३ं** [३ ।२७ ।६]

**समिद्धो अग्न आहुत** इत्यादि ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । अग्निमा३वह । सोममा३वह । सवितारम्** (उपांशु) **आ३वह । सरस्वतीमा३वह । पूषणमा३वह । इन्द्राग्नी आ३वह । इन्द्रमा३वह [वृत्रहेन्द्रमा३वह, महेन्द्रमा३वह** इति वा] । (उपांशु) **विश्वकर्माणम् आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं स्वाहा सोमं स्वाहा** (उपांशु) **सवितारं स्वाहा सरस्वतीं स्वाहा पूषणं स्वाहेन्द्राग्नी स्वाहेन्द्रं [स्वाहा वृत्रहेन्द्रं , स्वाहा महेन्द्रम् इति वा] स्वाहा** (उपांशु) **विश्वकर्माणं स्वाहा देवा आज्यपा** इत्यादि ।

वार्त्रघ्नावाज्यभागौ– **अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः ।**

प्रधानानामैन्द्राग्नान्तं वरुणप्रघासवत् ।

इन्द्रस्य याज्यानुवाक्या–

**एन्द्र सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठमूतये भरो३म् ॥** [१ ।८ ।१]

**ये३ यजामह इन्द्रं प्र स साहिषे पुरुहूत शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु ।**

**इन्द्राभर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीना३ं वौ३षट् ॥** [१० ।१८० ।१]

वृत्रहेन्द्रस्य याज्यानुवाक्या–

**आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि । महान् महीबिरूतिभो३म् ॥** [४ ।३२ ।१]

**ये३ यजामहे वृत्रहेन्द्रमनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये ।**

**अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्या इ३ वौ३षट् ॥** [६ ।२५ ।८]

महेन्द्रस्य याज्यानुवाक्या–

**महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव । स्तोमैर्वत्सस्य वावृधो३म् ॥** [८ ।६ ।१]

**ये३ यजामहे महेन्द्रं भुवस्त्वमिन्द्र ब्रह्मणा महान् भुवो विश्वेषु सवनेषु यज्ञियः ।**

**भुवो नॄँः श्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणा इ३ वौ३षट् ॥** (वागोजः..) [१० ।५० ।४]

विश्वकर्मणो याज्यानुवाक्या–

(उपांशु) **विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।**

**मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ओ३ँ ॥** [१० ।८१ ।४]

**ये३ यजामहे** (उपांशु) **विश्वकर्माणं या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा ।**

**शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं वृधाना३ वौ३षट् ॥** [१० ।८१ ।५]

विराजौ संयाज्ये– **प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वां शश्वन्त उपयन्ति वाजो३म् ।**

**ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाळग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाट्** (उपांशु) **सवितुः प्रियाधामान्ययाट् सरस्वत्याः प्रियाधामान्ययाट् पूष्णः प्रियाधामान्ययाळिन्द्राग्न्योः प्रियाधामान्ययाळिन्द्रस्य प्रियाधामान्ययाड् [वृत्रहेन्द्रस्य, महेन्द्रस्य वा]** (उपांशु) **विश्वकर्मणः प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि ।...जुषतां हवि–**

**रिमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ । प्रति न ईं सुरभीणि व्यन्तू३ वौ३षट् ।**

सूक्तवाके– **अग्निरिदं..., सोम इदं..., अग्निरिदं..., सोम इदं...,** (उपांशु) **सविता इदं..., सरस्वतीदं..., पूषेदं..., इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् । इन्द्र [वृत्रहेन्द्रः महेन्द्रो वा]इदं हविरजुषतावीवृधत महो ज्यायोऽकृत ।** (उपांशु) **विश्वकर्मा इदं हविरजुषतावीवृधत महो ज्यायोऽकृत । देवा आज्यपा इत्यादि ।** शेषं प्रकृतिवत् ॥

**अथ पित्र्येष्टिः ।**

दक्षिणाग्नेरग्निमतिप्रणीय पित्र्या, सा शंय्वन्ता । लुप्तजपा होतारमवृथा वषट्कारानुमन्त्रणाभिहिङ्कारवर्जम् । तस्यां प्राञ्चि कर्माणि दक्षिणा ।

अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहि इत्युक्ते–**हिम्, भूर्भुवःस्वरो३**

**मुशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशत आवह पितॄन् हविषे अत्तवो३** [१० ।१६ ।१२]

**मुशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशत आवह पितॄन् हविषे अत्तवो३**

**मुशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नुशत आवह पितॄन् हविषे अत्तवो३**

**मावह देवान् पितॄन् यजमानाय । अग्निमग्न आ३वह । सोममा३वह ।** (उपांशु) **सोमं पितृमन्तम् आ३वह [पितॄन् त्सोमवतः इति वा] ।** (उपांशु) **पितॄन् बर्हिषदः आ३वह** ।(उपांशु) **पितॄनग्निष्वात्तान् आ३वह ।** (उपांशु) **यमम् आ३वह[यमं वैवस्वतमा३वह इति वा] । देवाँ आज्यपाँ आ३वह । अग्निं कव्यवाहनमा३वह** ।इत्यवसाय । सीद होतः इत्युके तूष्णीं निरसनोपवेशने कृत्वोपविशति । तूष्णीं जानुशिरसा बर्हिरुपस्पृश्य स्रुगादापनमाह– **अग्निर्होता वेत्त्वित्यादि.. ईळामहै देवान् पितॄनीळेन्यान् नमस्याम नमस्यान्यजाम यज्ञियान् ।**

बर्हिर्वर्जं चतुरः प्रयाजान् यजति ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं** [प्रधान उपांशवः] **स्वाहा सोमं पितृमन्तं [स्वाहा पितॄन् त्सोमवतः** इति वा] **स्वाहा पितॄन् बर्हिषदः स्वाहा पितॄनग्निष्वात्तान् त्स्वाहा यमं [स्वाहा यमं वैवस्वतम्** इति वा] **स्वाहाग्निं कव्यवाहनं स्वाहा देवा आज्यपा** इत्यादि ।

जीवातुमन्तावाज्यभागौ–

**आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसो३म् ॥** [१ ।७९ ।९]

**त्वं सोम महे भगं त्वं यून ऋतायते । दक्षं दधाति जीवसो३म् ॥** [१ ।९१ ।७] इति पुरोनुवाक्याः ।

सव्योत्तार्युपस्थाः प्राचीनावीतिनो हविर्भिश्चरन्ति । दक्षिण आग्नीध्र उत्तरोऽध्वर्युर्द्वे द्वे अनुवाक्ये अध्यर्धमनवानम् । ॐ स्वधा इत्याश्रावणम्, अस्तु स्वधेति प्रत्याश्रावणम्, अनुस्वधा स्वधेति सम्प्रैषः । ये स्वधेत्यागूर्य् स्वधामह इति वा स्वधा नम इति वष्ट्कारः ।

प्रधानस्य–

सोमस्य पितृमतो याज्यानुवाक्या–

**त्वं सोम प्रचिकितो मनीषा त्वं रजिष्ठमनु नेषि पन्थां**

**तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः** [१ ।९१ ।१]

**सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति ।**

**सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॐ ॥** [१ ।९१ ।२०]

**ये३ स्वधामहे सोमं पितृमन्तं त्वं सोम पितृभिः संविदानोऽनुद्यावापृथिवी आततन्थ ।**

**तस्मै त इन्दो हविषा विधेम वयं स्याम पतयो रयीणा३ं स्वधा नमः ॥** [८ ।४८ ।१३]

[पितॄणां सोमवतां याज्यानुवाक्या–

उदीरतामवर उत् परास उन्मध्यमाः पितरः सोम्यासोऽ–

सुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु [१० ।१५ ।१]

त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः ।

वन्वन्नवातः परिधीँरपोर्णु वीरेभिरश्वैर्मघवा भवा नः ३ॐ ॥ [९ ।९६ ।११]

ये३ स्वधामहे पितॄन्त्सोमवत उपहूताः पितरः सोम्यासो बर्हिष्येशेषु निधिषु प्रियेषु ।

त आगमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मा३ न्त्स्वधा नमः ॥ [१० ।१५ ।५]]

पितॄणां बर्हिषदां याज्यानुवाक्या–

बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वं

त आ गतावसा शन्तमेनाथा नः शं योररपो दधाता– [१० ।१५ ।४]

हं पितॄन् त्सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः ।

बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहा गमिष्ठाः ३ॐ ॥ [१० ।१५ ।३]

ये३ स्वधामहे पितॄन् बर्हिषद इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः ।

ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षू३ स्वधा नमः ॥ [१० ।१५ ।२]

पितॄणामग्निष्वात्तानां याज्यानुवाक्या–

अग्निष्वात्ताः पितर एह गच्छत सदः सदः सदत सुप्रणीतयोऽ–

त्ता हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं दधातन [१० ।१५ ।११]

ये चेह पितरो ये च नेह याँश्च विद्म याँ उ च न प्रविद्म ।

त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषस्व ३ॐ ॥ [१० ।१५ ।१३]

ये३ स्वधामहे पितॄनग्निष्वात्तान् ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया मादयन्ते ।

तेभिः स्वराळसुनीतिमेतां यथावशं तन्वं कल्पयस्वा३ स्वधा नमः ॥ [१० ।१५ ।१४]

यमस्य याज्यानुवाक्या–

इमं यम प्रस्तरमाहि सीदाङ्गिरोभिः पितृभिः संविदान

आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्वा– [१० ।१४ ।४]

ङ्गिरोभिरागहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व ।

विवस्वन्तं हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य ३ॐ ॥ [१० ।१४ ।५]

ये३ स्वधामहे यमं परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।

वैवस्वन्तं सङ्गमनं जनानां यमं राजानं हविषा दुवस्या३ स्वधा नमः ॥ [१० ।१४ ।१]

यमस्य वैवस्वतस्य याज्यानुवाक्या–

**इमं यम प्रस्तरमाहि सीदाङ्गिरोभिः पितृभिः संविदान**

**आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व** [१० ।१४ ।४]

**परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।**

**वैवस्वन्तं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य ॐ ॥** [१० ।१४ ।१]

**ये३ स्वधामहे यमं वैवस्वतमङ्गिरोभिरागहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व ।**

**विवस्वन्तं हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्या३ स्वधा नमः ॥** [१० ।१४ ।५]

अग्नेः कव्यवाहनस्य याज्यानुवाक्या–

**ये तातृषुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कै–**

**ेराग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिस्–** [१० ।१५ ।९]

**त्वदग्ने काव्या त्वन्मनीषास्त्वदुक्था जायन्ते राध्यानि ।**

**त्वदेति द्रविणं वीरपेशा इत्थाधिये दाशुषे मर्त्याय ॐ ॥** [४ ।११ ।३]

**ये३ स्वधामहेऽग्निं कव्यवाहनं स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा ।**

**आपश्च मित्रं धिषणा च साधन् देवा अग्निं धारयन् द्रविणोदा३ं स्वधा नमः ॥** [१ ।९६ ।१]

वषट्कार्क्रियायां याज्यानुवाक्या–

**यो अग्निः कव्यवाहनः पितॄन् यक्षदृतावृधः ।**

**प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॐ ॥** [१० ।१६ ।११]

**ये३ यजामहेऽग्निं कव्यवाहनं त्वमग्न ईळितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वी ।**

**प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषी३ वौ३षट् ॥** [१० ।१५ ।१२]

ततो यज्ञोपवीती अप उपस्पृश्य दक्षिणोत्तर्युपस्थःसन्निळामुपह्वयते । **इदं मे देवाः पितरो हविर्जुषन्तामिति तस्मिन्नुपहूतः** । भक्षेषु प्राणभक्षान् भक्षयित्वा बर्हिष्यनु प्रहरयुः । बर्हिर्वर्जं द्वावनुयाजौ । संस्थितायां प्राग्वानुयाजाभ्यां दक्षिणावृतो दक्षिणाग्निमुपतिष्ठते–

**अयाविष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः ।**

**स प्रत्युदैद्धरुणं मध्वो अग्रं स्वां यत्तनूं तत्स्वामैरयत** । इति दक्षिणाग्निम् ।

**सुसन्दृशं त्वा वयं मघवन् वन्दिषीमहि ।**

**प्र नूनं पूर्णवन्धुरं स्तुतो याहि वशाँ अनु योजान्विन्द्र ते हरी** ॥ इत्याहवनीयमुपतिष्ठते ।[१ ।८२ ।३]

**अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।**

**अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिनमिषं स्तोतृभ्य आ भर** ॥ इति गार्हपत्यम् ।[५ ।६ ।१]

अथ गार्हपत्यमभिसमायन्ति ।

**मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः । मान्तस्थुर्नो अरातयः ॥**

**यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः । तमाहुतं नशीमहि ॥**

**मनो न्वा हुवामहे नाराशंसेन सोमेन । पितॄणां च मन्मभिः ॥**

**आ त एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक्च सूर्यं दृशे ॥**

**पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातं सचेमहि ॥**

**वयं सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहि ॥** [१० ।५७ ।१–६]

**अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ॥**

**वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ॥**

**स नो बोधि श्रुधी हवमुरुष्याणो अघायतः समस्मात् ॥**

**तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥** [५ ।२४ ।१–४]

सूक्ते समाप्य ततो बर्हिर्वर्जौ द्वावनुयाजौ ।

सूक्तवाके– **अग्निरिदं..., सोम इदं..., सोमः पितृमान् इदं [पितरः सोमवन्त इदम**िति वा]..., **पितरो बर्हिषदः इदं..., पितरोऽग्निष्वात्ताः इदं..., यमः इदं [यमो वैवस्वत इदम**िति वा]..., **देवा आज्यपा आज्यम्..., अग्निः कव्यवाहन इदं...,** । अस्यामृधेद्धोत्रायाम् इत्यत्र न चात्र नामादेशः ।

पकृत्या शंयुवाकः । शंय्वन्ता सन्तिष्ठते । सव्यावृतस्त्र्यम्बकान् व्रजन्ति ।

**अथ आदित्येष्टिः ॥**

अस्या इष्टेः सप्तदशसामिधेन्यः । पुष्टिमन्तावाज्यभागौ । अदितिः प्रधानदेवता । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । अदितिमा३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहादितिं स्वाहा देवा आज्यपा** इत्यादि ।

पुष्टिमन्तावाज्यभागौ–

**अग्निना रयिमश्नवत् पोषमेव दिवे दिवे । यशसं वीरवत्तमो३म् ॥**

**गयस्फानो अमीवहा वसुवित् पुष्टिवर्धनः । सुमित्रः सोम नो भवो३म् ॥** इति पुरोनुवाक्याः ।

प्रधानस्य–

**उत त्वामदिते मह्यं देव्युपब्रुवे । सुमृळीकामभिष्टयो३म् ॥** [८ ।६७ ।१०]

**ये३ यजामहेऽदितिं मही मूषु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम ।**

**तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीती३ं वौ३षट् ॥**

विराजौ संयाज्ये । **अयाळदित्याः प्रियाधामानि** इत्यादिसंस्थाजपान्तं प्रकृतिवत् ॥

## ॥ इति साकमेधाः ॥

## ॥ अथ शुनासीरीय पर्व ॥

अस्या इष्टेः सप्तदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । नवप्रयाजा नवानूयाजाः । अग्निः, सोमः, सविता, सरस्वती, पूषा, इन्द्राग्नी, विश्वे देवाः, इन्द्रः शुनासीरः [शुनासीरौ, इन्द्रः शुनो वा], वायुः [वायुर्नियुत्वान् वा], सूर्यश्च प्रधानदेवताः । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च । अग्निमन्थनादि सर्वं वैश्वदेववत् । वाजिनवर्जम् ।

**नमः प्रवक्त्रे** इत्यादि सामिधेन्यां **पृथुपाजा अमर्त्यः** इति द्वे धाय्ये आवपेत–

**शोचिष्केशस्तमीमहो३ं**

**पृथुपाजा अमर्त्यो घृतनिर्णिक् स्वाहुतः । अग्निर्यज्ञस्य हव्यवो३ं** [३ ।२७ ।५]

**तं सबाधो यतस्रुच इत्था धिया यज्ञवन्तः । आ चक्रुरग्निमूतयो३ं** [३ ।२७ ।६]

**समिद्धो अग्न आहुत** इत्यादि ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । अग्निमा३वह । सोममा३वह । सवितारम्** (उपांशु) **आ३वह । सरस्वतीमा३वह । पूषणमा३वह । इन्द्राग्नी आ३वह । विश्वान् देवाना३वह । इन्द्रं शुनासीरमा३वह [शुनासीरावा३वह, इन्द्रं शुनमा३वह** इति वा] । **वायुमा३वह [वायुं नियुत्वन्तमा३वह** इति वा] । (उपांशु) **सूर्यम् आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं स्वाहा सोमं स्वाहा** (उपांशु) **सवितारं स्वाहा सरस्वतीं स्वाहा पूषणं स्वाहेन्द्राग्नी स्वाहा विश्वान् देवान् त्स्वाहेन्द्रं शुनासीरं [स्वाहा शुनासीरौ स्वाहेन्द्रं शुनम्** इति वा] **स्वाहा वायुं [स्वाहा वायुं नियुत्वन्तम्** इति वा] **स्वाहा** (उपांशु) **सूर्यं स्वाहा देवा आज्यपा** इत्यादि ।

वार्त्रघ्नावाज्यभागौ– **अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः ।**

प्रधानानां वैश्वदेवान्तं प्रचर्य

इन्द्रस्य शुनासीरस्य याज्यानुवाक्या–

**इन्द्रं वयं शुनासीरमस्मिन् यज्ञे हवामहे । स वाजेषु प्र नो विषो३म् ॥**

**ये३ यजामह इन्द्रं शुनासीरमश्वायन्तो गव्यन्तो वाजयन्तो हवामहे त्वोपगन्तवा उ ।**

**आ भूषन्तस्ते सुमतौ नवायां वयमिन्द्र त्वा शुनं हुवेमा३ वौ३षट् ॥** [१० ।१६० ।७]

[शुनासीरयोर्याज्यानुवाक्या–

**शुनासीराविमां वाचं जुषेथां यद् दिवि चक्रथुः पयः ।**

**तेनेमामुप सिञ्चतम् ॥** [४ ।५७ ।५]

**ये३ यजामहे शुनासीरौ शुनं नः फाला वि कृषन्तु भूमिं शुनं कीनाशा अभि यन्तु वाहैः ।**

**शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्ताइं वौ३षट् ॥** [४ ।५७ ।८]

इन्द्रस्य शुनस्य याज्यानुवाक्या–

**शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।**

**शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि सञ्जितं धनानो३म् ॥** [३ ।३० ।२२]

**ये३ यजामह इन्द्रं शुनमश्वायन्तो गव्यन्तो वाजयन्तो हवामहे त्वोपगन्तवा उ ।**

**आ भूषन्तस्ते सुमतौ नवायां वयमिन्द्र त्वा शुनं हुवेमा३ वौ३षट् ॥** [१० ।१६० ।७]]

वायोर्याज्यानुवाक्या–

**स त्वं नो देव मवसा वायो मन्दानो अग्रियः । कृधि वाजाँ अपो धियो३म् ॥** [८ ।२६ ।२५]

**ये३ यजामहे वायुमीशानाय प्र हुतिं यस्त आनट्च्छुचिं सोमं शुचिपास्तुभ्यं वायो ।**

**कृणोषि तं मर्त्येषु प्रशस्तं जातो जातो जायते वाज्यस्या३ वौ३षट् ॥** [७ ।९० ।२]

वायोर्नियुत्वतो याज्यानुवाक्या–

**आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार ।**

**उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयो३म् ॥** [७ ।९२ ।१]

**ये३ यजामहे वायुं नियुत्वन्तं प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे ।**

**नि नो रयिं सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधा३ वौ३षट् ॥** [७ ।९२ ।३]

सूर्यस्य याज्यानुवाक्या–

(उपांशु) **तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रोचनम् ॐ ॥** [१ ।५० ।४]

**ये३ यजामहे** (उपांशु) **सूर्यं चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।**

**आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तथुषश्चा३ वौ३षट् ॥** [१ ।११५ ।१]

विराजौ संयाज्ये– **प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वां शश्वन्त उपयन्ति वाजो३म् । ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाळग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाट्** (उपांशु) **सवितुः प्रियाधामान्ययाट् सरस्वत्याः प्रियाधामान्ययाट् पूष्णः प्रियाधामान्ययाळिन्द्राग्न्योः प्रियाधामान्ययाड् विश्वेषां देवानां प्रियाधामान्ययाळिन्द्रस्य शुनासीरस्य प्रियाधामान्ययाड् [शुनासीरयोः, इन्द्रस्य शुनस्य वा] वायोः प्रियाधामान्ययाट् [वायोर्नियुत्वतः वा]** (उपांशु) **सूर्यस्य प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि ।...जुषतां हवि–**

**रिमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ । प्रति न ईं सुरभीणि व्यन्तू३ वौ३षट् ।**

सूक्तवाके– **अग्निरिदं..., सोम इदं..., अग्निरिदं..., सोम इदं...,** ˋ(उपांशु) **सविता इदं..., सरस्वतीदं..., पूषेदं..., इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् । विश्वे देवा इदं हविरजुषन्तावीवृधन्त महो ज्यायोऽक्रत । इन्द्रः शुनासीर इदं हविरजुषतावीवृधत महोज्यायोऽकृत [शुनासीरौ, इन्द्रः शुनो वा] । वायुरिदं**

**हविरजुषतावीवृधत महोज्यायोऽकृत [वायुर्नियुत्वान् वा]** । (उपांशु) **सूर्यः इदं हविरजुषतावीवृधत महोज्यायोऽकृत । देवाआज्यपा** इत्यादि । संस्थाजपान्तं वैश्वदेववत् ॥

## दीक्षणीयेष्टिः

अस्या इष्टेः सप्तदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । अग्नाविष्णू प्रधानदेवता । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

**नमः प्रवक्त्रे** इत्यादि । सामिधेन्यां **पृथुपाजा अमर्त्यः** इति द्वे धाय्ये आवपेत–

**शोचिष्केशस्तमीमहो३ं**

**पृथुपाजा अमर्त्यो घृतनिर्णिक् स्वाहुतः । अग्निर्यज्ञस्य हव्यवो३ं** [३ ।२७ ।५]

**तं सबाधो यतस्रुच इत्था धिया यज्ञवन्तः । आ चक्रुरग्निमूतयो३ं** [३ ।२७ ।६]

**समिद्धो अग्न आहुत** इत्यादि ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह** । (उपांशु) **अग्नाविष्णू आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहा** (उपांशु) **अग्नाविष्णू स्वाहा देवा आज्यपा** इत्यादि ।

वार्त्रघ्नावाज्यभागौ– **अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः ।**

अग्नाविष्ण्वोर्याज्यानुवाक्या–

(उपांशु) **अग्निर्मुखं प्रथमो देवतानां सङ्गतानामुत्तमो विष्णुरासीत् ।**

**यजमानाय परिगृह्य देवान् दीक्षयेदं हविरागच्छतं नः ओ३म् ॥**

**ये३ यजामहे (उपांशु) अग्नाविष्णू अग्निश्च विष्णो तप उत्तमं महो दीक्षापालाय वनतं हि शक्रा ।**

**विश्वैर्देवैर्यज्ञियैः संविदानौ दीक्षामस्मै यजमानाय धत्ता३ं वौ३षट् ॥**

स्विष्टकृतः याज्यानुवाक्या–

**प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वां शश्वन्त उपयन्ति वाजो३म् ॥**[७ ।१ ।३]

**ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाट्** (उपांशु) **अग्नाविष्ण्वोः प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि ।...जुषतां हवि–**

**रिमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ । प्रति न ईं सुरभीणि व्यन्तू३ वौ३षट् ॥** [७ ।१ ।१८]

**वाचस्पतिना** इत्यादि । इळायाम् **उपहूतोऽयं यजमानोऽस्य यज्ञस्यागुर उदृचमशीयेति तस्मिन्नुपहूतः** । अवान्तरेळां प्राश्नीयात् । नेदमादिषु मार्जनमर्वागुदयनीयायाः । त्रयोऽनुयाजाः ।

सूक्तवाके– **अग्निरिदं..., सोम इदं...,** (उपांशु) **अग्नाविष्णू इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम् । देवा आज्यपा** इत्यादि । **अस्यामृधेद्धोत्रायां देवङ्गमायामाशास्तेऽयं यजमानोऽस्य यज्ञस्यागुर उदृचमशीयेत्याशास्ते यदनेन हविषाशास्ते** इत्यादि । इदमादीळायां सूक्तवाके चागुराशीस्थाने । न चात्र नामादेशः । प्रकृत्यान्त ऊर्ध्वं पश्चिळायाः । वेदग्रहणादिकं प्रकृतिवत् । आज्येडान्ता दीक्षणीया सन्तिष्ठते ।

## प्रायणीयेष्टिः

अस्या इष्टेः पञ्चदशसामिधेन्यः । नाज्यभागौ । पथ्या स्वस्तिः, अग्निः, सोमः, सविता, अदितिश्च प्रधानदेवताः । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

**नमः प्रवक्त्रे** इत्यादि प्रकृतिवत् सामिधेन्यः ।

आवाहने– (उपांशु) **पथ्यां स्वस्तिम्** (उच्चैः) **अग्न आ३वह** । (उपांशु) **अग्निम् आ३वह** । (उपांशु) **सोमम् आ३वह** । (उपांशु) **सवितारम् आ३वह** । (उपांशु) **अदितिम् आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहा** (उपांशु) **पथ्यां स्वस्तिं स्वाहा** (उपांशु) **अग्निं स्वाहा** (उपांशु) **सोमं स्वाहा** (उपांशु) **सवितारं स्वाहा** (उपांशु) **अदितिं स्वाहा देवा आज्यपा** इत्यादि ।

प्रधानानां याज्यानुवाक्याः–

(उपांशु) **स्वस्ति नः पथ्यासु धन्वसु स्वस्त्यप्सु वृजने स्वर्वति ।**

**स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ओ३म् ॥**

**ये३ यजामहे** (उपांशु) **पथ्यां स्वस्तिं स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।**

**सा नो अमा सो अरणो निपातु स्वावेशा भवतु देवगोपा३ वौ३षट् ॥**

(उपांशु) **अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।**

**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ओ३म् ॥**

**ये३ यजामहे** (उपांशु) **अग्निमा देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोह्ळुम् ।**

**अग्निर्विद्वान् त्स यजात् सेदु होता सो अध्वरान् त्स ऋतून् कल्पयाती३ वौ३षट् ॥**

(उपांशु) **त्वं सोम प्रचिकितो मनीषा त्वं रजिष्ठमनुनेषि पन्थाम् ।**

**तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ओ३म् ॥**

**ये३ यजामहे** (उपांशु) **सोमं या ते धामानि दिवि या पृथिव्यां या पर्वतेष्योषधीष्वप्सु ।**

**तेभिर्नो विश्वैः सुमना अहेळन् राजन् त्सोम प्रति हव्या गृभाया वौ३षट् ॥**

(उपांशु) **आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे । सत्यसवं सवितारम् ओ३म् ॥**

**ये३ यजामहे** (उपांशु) **सवितारं य इमा विश्वा जातान्या श्रावयति श्लोकेन ।**

**प्र च सुवाति सविता३ वौ३षट् ॥**

(उपांशु) **सुत्रामाणं पृथिवींद्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।**

**दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ओ३म् ॥**

**ये३ यजामहे** (उपांशु) **अदितिं महीमूषु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम ।**

**तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीती३ं वौ३षट् ॥**

स्विष्टकृदि–

**सेदग्निरग्नीँरत्यस्त्वन्यान् यत्र वाजी तनयो वीळुपाणिः । सहस्रपाथा अक्षरा समोतो३म् ॥**

**ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निः** (उपांशु) **पथ्याः स्वस्तेः प्रियाधामान्ययाट्** (उपांशु) **अग्नेः प्रियाधामान्ययाट्** (उपांशु) **सोमस्य प्रियाधामान्ययाट्** (उपांशु) **सवितुः प्रियाधामान्ययाट्** (उपांशु) **अदितेः प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि ।...जुषतां हविः**

**सेदग्निर्यो वनुष्यतो निपाति समेद्धारमंहस उरुष्यात् । सुजातासः परिचरन्ति वीरा३ वौ३षट् ॥**

इळासूक्तवाकौ दीक्षणीयावत् । सूक्तवाके विशेषः– (उपांशु) **पथ्या स्वस्तिः इदं...,** (उपांशु) **अग्निः इदं...,** (उपांशु) **सोमः इदं...,** (उपांशु) **सविता इदम्...,** (उपांशु) **अदितिः इदं...,** **देवा आज्यपा** इत्यादि । शंय्वन्ता प्रायणीया सन्तिष्ठते ।

**सोमप्रवहणम्**

संस्थितायां राजानं क्रीणन्ति तं प्रवक्ष्यत्सु पश्चादनसस्त्रिपदमात्रेऽन्तरेण वर्त्मनी अवस्थाय **सोमाय राज्ञे क्रीताय प्रोह्यमाणाय** इत्यादि प्रेषितोऽग्रेऽभिहिङ्कारात्–

**त्वं विप्रस्त्वं कविस्त्वं विश्वानि धारयन् अप जन्यं भयं नुद** इत्यस्पन्दयन् पार्ष्णीं प्रपदेन दक्षिणा पांसून् सकृन्मन्त्रेण द्विस्तूष्णीं त्रिरुदुप्यानुब्रूयात्– **हिम्, भूर्भुवःस्वरो३म्**

**भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुर एता ते अस्तु ।**

**अथेमवस्य वर आ पृथिव्या आरे शत्रून् कृणुहि सर्ववीरो३म्** इति त्रिः तिष्ठन्ननुव्रजन्नुत्तरा अन्तरेणैव वर्त्मनी

**सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे ताभिर्नोऽविता भवो३**

**मिमं यज्ञमिदं वचो जुजुषाणा उपागहि सोम त्वं नो वृधे भवो३ं**

**सोम गीर्भिष्ट्वा वयं वर्धयामो वचो विदः सुमृळीको न आ विशो३ं**

**सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः**

**किल्बिषस्पृत्पितुषणिर्ह्येषामरं हितो भवति वाजिनायो३**

**मागन्देव ऋतुभिर्वर्धतु क्षयं दधातु नः सविता सुप्रजामिषम्** इत्यर्धर्च आरमेत् अवस्थितेऽनसि दक्षिणात् पक्षादभिक्रम्य राजानमभिमुखोऽवतिष्ठते प्रपाद्यमाने राजनि अग्रेणानोऽनुसंव्रजेत्

**स नः क्षपाभिरहभिश्च जिन्वतु प्रजावन्तं रयिमस्मे समिन्वतो३ं**

**या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम्**

**गयस्फानः प्रतरणः सुवीरो वीरहा प्रचरा सोम दुर्यो३**

**मिमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण संशिशाधि**

**ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेमो३म्** इति त्रिः निहिते परिदध्याद्राजानमुपस्पृशन् वसनेऽंशुषु वा प्रक्रमस्थाने तिष्ठत्संप्रैषेषु तथैव **भूर्भुवःस्वः** इति वाग्विसर्गः

## आतिथ्येष्टिः

अस्या इष्टेः सप्तदशसामिधेन्यः । अतिथिमन्तावाज्यभागौ । विष्णुः प्रधानदेवता । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

अग्निमन्थनम् ।

**अग्नये मथ्यमानायानुब्रूहि** इति प्रेषितः पश्चात् सामिधेनीस्थानस्य पदमात्रेऽवस्थायाभि हिंकृत्य ।

**हिम्, भूर्भुवःस्वरो३**

**मभि त्वा देव सवितरिशानं वार्याणाम् । सदावन् भागमीमहो३ं** इति त्रिः [१ ।२४ ।३]

**मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभो३ं** [१ ।२२ ।१३]

**त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतो३ं** [६ ।१६ ।१३]

**तमु त्वा दध्यङ् ऋषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरन्दरो३ं** [६ ।१६ ।१४]

**तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् ।** इत्यवसाय, [६ ।१६ ।१५]

अजायमाने त्वेतस्मिन्नेवावसाने राक्षोघ्नीरनुब्रूयात् पुनः पुनराजन्मनः ।

**अग्ने हंसि न्यत्रिणं दीद्यन्मर्त्येष्वा स्वे क्षये शुचिव्रतो३**

**मुत्तिष्ठसि स्वाहुतो घृतानि प्रतिमोदसे यत् त्वा स्रुचः समस्थिरो३ं**

**स आहुतो विरोचतेऽग्निरीळेन्यो गिरा स्रुचा प्रतीकमज्यतो३ं**

**घृतेनाग्निः समज्यते मधुप्रतीक आहुतः रोचमानो विभावसो३ं**

**जरमाणः समिध्यसे देवेभ्यो हव्यवाहन तं त्वा हवन्त मर्त्यो३ं**

**तं मर्ता अमर्त्यं घृतेनाग्निं सपर्यत अदाभ्यं गृहपतो३**

**मदाभ्येन शोचिषाऽग्ने रक्षस्त्वं दह गोपा ऋतस्य दीदिहो३ं**

**स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः उरुक्षयेषु दीद्यो३ं**

**तं त्वा गीर्भिरुरुक्षया हव्यवाहं समीधिरे यजिष्ठं मानुषे जनो३म्** इत्येता राक्षोघ्न्यः

**जातायानुब्रूहि** इत्युक्ते–

**धनञ्जयं रणे रणो३**

**मुत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनञ्जयो रणे रणो३** [१ ।७४ ।३]

**मायं हस्ते न खादिनं शिशुं जातं न बिभ्रति ।** इत्यर्धर्च आरमेत् [६ ।१६ ।४०]

**प्रह्रियमाणाय** प्रेषितः कुण्डे निधीयमाने–

**विशामग्निं स्वध्वरो३म्**

**प्र देवं देववीतये भरता वसुवित्तमम् । आ स्वे योनौ निषीदतो३** [६ ।१६ ।४१]

**मा जातं जातवेदसि प्रियं शिशीताथितिम् । स्योन आ गृहपतो३** [६ ।१६ ।४२]

**मग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यो३ं** [१ ।१२ ।६]

**त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन् त्सता । सखा सख्या समिध्यसो३ं** [८ ।४३ ।१४]

**तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनो३ं** [८ ।८४ ।८]

**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।**

**ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवो३म् ॥** इति त्रिः परिदध्यात् [१० ।९० ।१६]

प्रक्रमस्थाने भूर्भुवःस्वरोमिति वाचं विसृजते ।

**नमः प्रवक्त्रे** इत्यादि सामिधेन्यां **पृथुपाजा अमर्त्यः** इति द्वे धाय्ये आवपेत–

**शोचिष्केशस्तमीमहो३ं**

**पृथुपाजा अमर्त्यो घृतनिर्णिक् स्वाहुतः । अग्निर्यज्ञस्य हव्यवो३ं** [३ ।२७ ।५]

**तं सबाधो यतस्रुच इत्था धिया यज्ञवन्तः । आ चक्रुरग्निमूतयो३ं** [३ ।२७ ।६]

**समिद्धो अग्न आहुत** इत्यादि ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह ।** (उपांशु) **विष्णुम् आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहा** (उपांशु) **विष्णुं स्वाहा देवा आज्यपा** इत्यादि ।

अतिथिमन्तावज्यभागौ–

**समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् आस्मिन् हव्या जुहोतनो३म्**

**आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् भवा वाजस्य सङ्गथो३म्** इति पुरोनुवाक्या

प्रधानस्य याज्यानुवाक्या–

(उपांशु)**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूहळमस्य पांसुरे ओ३म्**

**ये३ यजामहे** (उपांशु) **विष्णुं तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति**

**उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सा३ वौ३षट्**

स्विष्टकृदि–

**होतारंचित्ररथमध्वरस्य यज्ञस्य यज्ञस्य केतुं रुशन्तम्**

**प्रत्यर्धिं देवस्य देवस्य मह्ना श्रिया त्वग्निमतिथिं जनानो३म्**

**ये३ यजामहेऽग्निंस्विष्टकृतमयाळग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाट्** (उपांशु) **विष्णोः प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि जुषतां हविः**

**प्रप्रायमग्निर्भरतस्य शृण्वे वियत्सूर्यो न रोचते बृहद्भाः**

**अभि यः पूरुं पृतनासु तस्थौ द्युतानो दैव्यो अतिथिः शुशोचा३ वौ३षट्**

पूर्ववदिळायामागूः इळामार्जनान्तातिथ्या सन्तिष्ठते

संस्थितायामाज्यं तानूनप्त्रं करिष्यन्तोऽभिमृशन्ति सर्वे होत्रकाः – **अनाधृष्टमस्यनाधृष्यं देवानामोजो अभिशस्तिपाः अनभिशस्त्यञ्जसा सत्यमुपगेषां स्विते माधाः** इति स्पृष्टोदकं राजानमाप्याययन्ति इदमादि मदन्तीरबर्थ उपसत्सु– **अंशुरंशुष्टे देव सोमाप्यायतामिन्द्रायैकधन आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वाप्याययास्मान् त्सखीन् सन्या मेधया स्वस्ति ते देव सोम सुत्यामुदृचमशीय** इति स्पृष्टोदकं निह्नवन्ते प्रस्तरे पाणीन्निधायोत्तानान् दक्षिणान् त्सव्यान्नीचः– **एष्टा रायः एष्टा वामानि प्रेषे भगाय ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्यै** इति

## प्रवर्ग्यः

### पूर्वं पटलम्

स्पृष्टोदकं प्रवर्ग्येण चरुष्यत्सु आचम्य तीर्थेन प्रविश्य उत्तरेण खरं परिव्रज्य पश्चान्महावीरस्योपविश्य निरसनोपवेशने कृत्वा **होतर्घर्ममभिष्टुहि** इति प्रेषितोऽभिष्टुयात् ऋगावानमृचमृचमनवानमुक्त्वा प्रणुत्यावस्येत्

[महावीरस्योत्तरत आग्नीध्र उपविश्य मन्दन्तीरुपस्पृश्य पूर्वशान्तिपाठं कुर्वन्ति

**नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माहमृषीन्मन्त्रकृतो मन्त्रपतीन् परादां वैश्वदेवीं**

वाचमुद्यास७शिवामदस्तां जुष्टां देवेभ्यः शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत् शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यास७ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनु मदन्तु इति]

हिम्, भूर्भुवःस्वरोइँ

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः

स बुध्निया उपमा अस्य विष्ठाघ् सतश्च योनिमसतश्च विवो३म् ॥ इति त्रिः

इयं पित्रे राष्ट्रेत्यग्रे प्रथमाय जनुषे भूमनेष्ठास्तस्मा एतं सुरुचं ह्वारमह्यं घर्मं श्रीणन्ति प्रथमस्य धासो३म् ॥

महान्मही अस्तभाय द्विजातो द्यां पिता स्द्म पार्थिवं च रजः

सुबुध्नादाष्ट जनुषाभ्युग्रं बृहस्पतिर्देवता तस्य सम्रो३म् ॥

अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभिप्रियं मतिं कविमूर्ध्वा यस्या मतिर्भा अदिद्युतत् सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वो३म् तृपा स्वो३म् ॥ इति वा

संसीदस्व महाँ असि शोचस्व देववीतमो वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतो३म् ॥ इति संसाद्यमाने

अञ्जन्ति यं प्रथयन्तो न विप्रा वपावन्तं नाग्निना तपन्तः

पितुर्न पुत्र उपसि प्रेष्ठ आ घर्मो अग्निमृतयन्नसादो३म् ॥ इत्यज्यमाने

पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः

समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसो३म् ॥

पतङ्गो वाचं मनसा बिभर्ति तां गन्धर्वो वदद्गर्भे अन्तस्तां द्योतमानां स्वर्यं मनीषामृतस्य पदे कवयो निपन्तो३म् ॥

यो नः सनुत्यो अभिदासग्ने यो अन्तरो मित्रमहो वनुष्यात्

तमजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वो३म् ॥

यस्ते यज्ञेन तपसा य उक्थैरर्केभिः सूनो सहसो ददाशत्

स मर्त्येष्वमृतप्रचेता राया द्युम्नेन श्रवसा विभातो३म् ॥

भवा नो अग्ने सुमना उपेतौ सखेव सख्ये पितरेव साधुः

पुरुद्रुहो हि क्षितयो जनानां प्रति प्रतीचीर्दहतादरातो३म् ॥

तपोष्वग्ने अन्तराँ अमित्रान् तपाशंसमररुषः परस्य

तपो वसो चिकितानो अचित्तन् वि ते तिष्ठन्तामजरा अयासो३म् ॥

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन

तृष्वीमनु प्रसितिं दूणानोऽस्तासि विध्य रक्षसस्तपिष्ठो३म् ॥

तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानस्
तपूंष्यग्ने जुह्वा पतङ्गानसंदितो वि सृज विश्वगुल्को३म् ॥
प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धो
यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षो३म् ॥
उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राँ ओषतात् तिग्महेते
यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्को३म् ॥
ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्नेऽ
व स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रो३म् ॥ ४ ४ १–५
परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयो३म् ॥
अधि द्वयोरदधा उक्थ्यं वचो यतः स्रुचा मिथुना या सपर्यतोऽ
संयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वतो३म् ॥
शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तो३म् ॥
अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तं
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तो३म् ॥
स्रक्वे द्रप्सस्य धमतः समस्वरन्नृतस्य योना समरन्त नाभयस्
त्रीन् त्स मूर्ध्नो असुरश्चक्र आरभे सत्यस्य नावः सुकृतमपीपरो३म् ॥
सम्यक् सम्यञ्चो महिषा अहेषत सिन्धोरूर्मावधि वेना अवीविपन्
मधोर्धाराभिर्जनयन्तो अर्कमित् प्रियामिन्द्रस्य तन्वमवीवृधो३म् ॥
पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षतु व्रतम्
महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभो३म् ॥
सहस्र धारेऽव ते समस्वरन् दिवो नाके मधुजिह्वा असश्चतोऽ
स्य स्पशो न नि मिषन्ति भूर्णयः पदे पदे पाशिनः सन्ति सेतवो३म् ॥
पितुर्मातुरध्या ये समस्वरन्नृचा शोचन्तः सन्दहन्तो अव्रता
निन्द्रद्विष्टामप धमन्ति मायया त्वचमसिक्नीं भूमनो दिवस्परो३म् ॥
प्रत्नान्मानादध्या ये समस्वरञ्छलोकयन्त्रासो रभसस्य मन्तवोऽ
पानक्षासो बधिरा अहासत ऋतस्य पन्थां न तरन्ति दुष्कृतो३म् ॥
सहस्रधारे वितते पवित्र आ वाचं पुनन्ति कवयो मनीषिणो
रुद्रास एषामिषिरासो अद्रुहः स्पशः स्वञ्चः सुदृशो नृचक्षसो३म् ॥

ऋतस्य गोपा न दभाय सुक्रतुस्त्री ष पवित्रा हृद्यन्तरा दधे
विद्वान् त्स विश्वा भुवनाभि पश्यत्यवाजुष्टान् विध्यति कर्ते अव्रतो३म् ॥
ऋतस्य तन्तुर्विततः पवित्र आ जिह्वाया अग्रे वरुणस्य मायया
धीराश्चित् तत् समिनक्षन्त आशतात्रा कर्तमव पदात्यप्रभो३म् ॥
अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमान
इममपां सङ्गमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्तो३म् ॥
पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतोऽ
तप्ततनूर्न तदामो अश्नुते श्रुतास इद्वहन्तस्तत् समाशतो३म् ॥
तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिर
न्नवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधि तिष्ठन्ति चेतसो३म् ॥
वियत् पवित्रं धिषणा अतन्वत घर्मं शोचन्तं प्रणवेषु बिभ्रतः
समुद्रे अन्तरायवो विचक्षणं त्रिरह्नो नाम सूर्यस्य मन्वतो३म् ॥
गणानां त्वा गणपतिं हवामहे कविंकवीनामुपमश्रवस्तमं
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनो३म् ॥
देवाश्चित्ते असुर प्रचेतसो बृहस्पते यज्ञियं भागमानशु
रुस्रा इव सूर्यो ज्योतिषा महो विश्वेषामिज्जनिता ब्रह्मणामसो३म् ॥
आ विबाध्या परिरापस्तमांसि च ज्योतिष्मन्तं रथमृतस्य तिष्ठसि
बृहस्पते भीमममित्रदम्भनं रक्षोहणं गोत्रभिदं स्वर्विदो३म् ॥
सुनीतिभिर्नयसि त्रायसे जनं यस्तुभ्यं दाशान्न तमंहो अश्नवद्
ब्रह्मद्विषस्तपनो मन्युमीरसि ब्रुहस्पते महि तत्ते महित्वनो३म् ॥
न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनो
विश्वा इदस्माद् ध्वरसो वि बाधसे यं सुगोपा रक्षसि ब्रह्मणस्पतो३म् ॥
त्वं नो गोपाः पथिकृद् विचक्षणस्तव व्रताय मतिभिर्जरामहे
बृहस्पते यो नो अभि ह्वरो दधे स्वा तं मर्मर्तु दुच्छुना हरस्वतो३म् ॥
उत वा यो नो मर्चयादनागसोऽरातीवा मर्तः सानुको वृको
बृहस्पते अप तं वर्तया पथः सुगं नो अस्यै देववीतये कृधो३म् ॥
त्रातारं त्वा तनूनां हवामहेऽवस्पर्तारमधिवक्तारमस्मयुम्
बृहस्पते देवनिदो नि बर्हय मा दुरेवा उत्तरं सुम्नमुन्नशो३म् ॥
त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि

या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसो३म् ॥
त्वया वयमुत्तमं धीमहे वयो बृहस्पते पप्रिणा सस्निना युजा
मा नो दुःशंसो अभिदिप्सुरीशत प्र सुशंसा मतिभिस्तारिषीमहो३म् ॥
अनानुदो वृषभं जग्मिराहवं निष्टप्ता शत्रुं पृतनासु सासहि-
रसि सत्य ऋणया ब्रह्मणस्पत उग्रस्य चिद् दमिता वीळुहर्षिणो३म् ॥
अदेवेन मनसा यो रिषण्यति शासामुग्रो मन्यमानो जिघांसति
बृहस्पते मा प्रणक् तस्य नो वधो नि कर्म मन्युं दुरेवस्य शर्धतो३म् ॥
भरेषु हव्यो नमसोपसद्यो गन्ता वाजेषु सनिता धनंधनं
विश्वा इदर्यो अभिदिप्स्वो मृधो बृहस्पतिर्वि ववर्हा रथाँ इवो३म् ॥
तेजिष्ठया तपनी रक्षसस्पत ये त्वा निदे दधिरे दृष्टवीर्य-
माविस्तत् कृष्व यदसत् त उक्थ्यं बृहस्पते वि परिरापो अर्दयो३म् ॥
बृहस्पते अधि यदर्यो अर्हाद् द्युमद् विभाति क्रतुमज्जनेषु
यद् दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रो३म् ॥
मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधु-
रा देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदो३म् ॥
विश्वेभ्यो हि त्वा भुवनेभ्यस्परि त्वष्टाजनत् साम्नः साम्नः कविः
स ऋणचिदृणया ब्रह्मणस्पतिर्द्रुहो हन्ता मह ऋतस्य धर्तरो३म् ॥
तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिर
इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवो३म् ॥
ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व
विश्वं तद् भद्रं यदवन्ति देवा बृहद् वदेम विदथे सुवीरो३म् ॥
प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यद्
धातुर्द्युतानात् सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठो३म् ॥
अविन्दन्ते अतिहितं यदासीद्यज्ञस्य धाम परमं गुहा यद्
धातुर्द्युतानात् सवितुश्च विष्णोर्भरद्वाजो बृहदा चक्रे अग्नो३म् ॥
तेऽविन्दन् मनसा दीध्याना यजुः ष्कन्नं प्रथमं देवयानं
धातुर्द्युतानात् सवितुश्च विष्णोरा सूर्यादभरन् घर्ममेतो३म् ॥
अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूत-
मिह प्रजामिह रयिं रराणाः प्र जायस्व प्रजया पुत्रकामो३म् ॥ इति यजमानमीक्षते

अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमाना-
मुप मामुच्चा युवतिर्बभूयाः प्र जायस्व प्रजया पुत्रकामो३म् ॥ इति पत्नीमीक्षेत
अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्त-
रहं पोरजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रो३म् ॥ इति स्वमात्मानमीक्षेत
का राधद्धोत्राश्विना वां को वां जोष उभ्योः कथा विधात्यप्रचेतो३म् ॥
विद्वांसाविद्दुरः पृच्छेदविद्वानित्थापरो अचेता नूचिन्नु मर्ते अक्रो३म् ॥
ता विद्वांसा हवामहे वां ता नो विद्वांसा मन्मवोचेतमद्य प्रार्चद् दयमानो युवाको३म् ॥
वि पृच्छामि पाक्या न देवान् वषट्कृतस्याद्भुतस्य दस्रा पातं च सह्यसो युवं च रभ्यसो नो३म् ॥
प्र या घोषे भृगवाणे न शोभे यया वाचा यजति पज्रियो वां प्रैषयुर्न विद्वो३म् ॥
श्रुतं गायत्रं तकवानस्याहं चिद्धि रिरेभाश्विना वामाक्षी शुभस्पती दो३म् ॥
युवं ह्यास्तं महो रन् युवं वा यन्निरततंसतं ता नो वसू सुगोपा स्यातं पातं नो वृकादघायो३म् ॥
मा कस्मै धातमभ्यमित्रिणे नो मा कुत्रा नो गृहेभ्यो धेनवो गुः स्तनाभुजो अशिश्वो३म् ॥
दुहीयन् मित्रधितये युवाकु राये च नो मिमीतं वाजवत्या इषे च नो मिमीतं धेनुमत्यो३म् ॥
आ भात्यग्निरुषसामनीकमुद् विप्राणां देवया वाचो अस्थु-
रर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छो३म् ॥
न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह
दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शम्भविष्ठो३म् ॥
उता यातं सङ्गवे प्रातरह्नो मध्यन्दिन उदिता सूर्यस्य
दिवा नक्तमवसा शन्तमेन नेदानीं पीतिरश्विना ततानो३म् ॥
इदं हि वां प्रदिवि स्थानमोक इमे गृहा अश्विनेदं दुरोण-
मा नो दिवो बृहतः पर्वतादाद्भ्यो यातमिषमूर्जं वहन्तो३म् ॥
समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेमा-
नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानो३म् ॥
ग्रावाणेव तदिदर्थं जरेथे गृध्रेव वृक्षं निधिमन्तमच्छ
ब्रह्माणेव विदथ उक्थशासा दूतेव हव्या जन्या पुरुत्रो३म् ॥
प्रात्यावाणा रथ्येव वीराऽजेव यमा वरमा सवेथे
मेने इव तन्वा शुम्भमाने दम्पतीव क्रतुविदा जनेषो३म् ॥
शृङ्गेव नः प्रथमा गन्तमर्वाक् छफाविव जर्भुराणा तरोभि-
श्चक्रवाकेव प्रति वस्तोरुस्राऽर्वाञ्चा यातं रथ्येव शक्रो३म् ॥

नावेव नः पारयतं युगेव नभ्येव न उपधीव प्रधीव
श्वानेव नो अरिषण्या तनूनां खृगलेव विस्रसः पातमस्मो३म् ॥
वातेवाजुर्या नद्येव रीतिरक्षी इव चक्षुषा यातमर्वा–
ग्घस्ताविव तन्वे शम्भविष्ठा पादेव नो नयतं वस्यो अच्छो३म् ॥
ओष्ठाविव मध्वास्ने वदन्ता स्तनाविव पिप्यतं जीवसे नो
नासेव नस्तन्वो रक्षितारा कर्णाविव सुश्रुता भूतमस्मो३म् ॥
हस्तेव शक्तिमभि सन्ददी नः क्षामेव नः समजतं रजांसी–
मा गिरो अश्विना युष्मयन्तीः क्ष्णोत्रेणैव स्वधितिं सं शिशीतो३म् ॥
एतानि वामश्विना वर्धनानि ब्रह्म स्तोमं गृत्समदो अक्रँस्तानि
नरा जुजुषाणोप यातं बृहद् वदेम विदथे सुवीरो३म् ॥
ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये
याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे
याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना
याभिर्धेनुमस्वं पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति
याभिस्त्रिमन्तुरभवद् विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभी रेभं निवृतं सितमद्भ्य उद् वन्दनमैरयतं स्वर्दृशे
याभिः कण्वं प्र सिषासन्तमावतं ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिरन्तकं जसमानमारणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुर्
याभिः कर्कन्धुं वय्यं च जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिः शुचन्ति धनसां सुषंसदं तप्तं घर्ममोम्यावन्तमत्रये
याभिःपृश्निगुं पुरुकुत्समावतं ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिः शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथो
याभिर्वर्तिकां ग्रसितामुञ्चतं ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतं
याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिर्विश्पलां धनसामथर्व्यं सहस्रमीहळ् आजावजिन्वतं

याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत्
कक्षीवन्तं स्तोतारं याभिरावतं ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे
याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतं
याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतं
याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथो
याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुर्–
याभिः शारीराजतं स्यूमरश्मये ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना
याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिरङ्गिरो मनसा निरण्यतोऽग्रं गच्छतो विवरे गो अर्णसो
याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षितं
याभिः सुदास ऊहथुः सुदेव्यं ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिः शन्ताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगु–
मोम्यावतीं सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतम्
मधु प्रियं भरथो यत् सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथो
याभी रथाँ अवथो याभिरर्वतस्ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतं
याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरू षु ऊतिभिरश्विना गतो३म् ॥
अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषा–
मद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातो३म् ॥

**अरूरुचदुषसः पृश्निरग्रिय उक्षा बिभर्ति भुवनानि वाजयु–**
**र्मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा दधो३म् ॥** उत्तरेणार्धर्चेन पत्नीमीक्षेत
**द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभि–**
**स्तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यो३म् ॥** इति त्रिः परिदध्यात्
ततः समुत्थाप्यैनानध्वर्यवो वाचयन्ति इति पूर्वं पटलम्
**अपश्यं गोपामनिपद्यमानम् आ च परा च पथिभिश्चरन्तम्**
**स सध्रीचीः स विषूचीर्वसानः आ वरीवर्ति भुवनेष्वन्तः**
**अत्र प्रावीः मधु माध्वीभ्यां मधु माधूचीभ्याम् अनु वां देववीतये समग्निरग्निनागत सं देवेन सवित्रा स७ सूर्येण रोचते स्वाहा समग्निस्तपसागत सं देवेन सवित्रा स७ सूर्येणा रोचिष्ट धर्ता दिवो विभासि रजसः पृथिव्या धर्ता उरोरन्तरिक्षस्य धर्ता शर्ता देवो देवानाम् अमर्त्यस्तपोजाः हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ऊर्ध्वमिममध्वरं कृधि दिवि देवेषु होत्रा यच्छ विश्वासां भुवाम्पते विश्वस्य भुवनस्पते विश्वस्य मनसस्पते विश्वस्य वचसस्पते विश्वस्य तपसस्पते विश्वस्यब्रह्मणस्पते देवश्रूस्त्वं देवघर्ह देवान् पाहि तपोजां वाचमस्मे नियच्छ देवायुवम् गर्भो देवानाम् पिता मतीनाम् पतिः प्रजानाम् मतिः कवीनाम् सं देवो देवेन सवित्रायतिष्ठ स७सूर्येणारुक्त आयुर्दास्त्वमस्मभ्यं घर्म वर्चोदा असि पिता नोऽसि पिता नो बोध आयुर्धास्तनूधाः पयोधाः वर्चोदा वरिवोदा द्रविणोदाः अन्तरिक्षप्र उरोर्वरीयान् अशीमहि त्वा मा मा हि७सीः त्वमग्ने गृहपतिर्विशामसि विश्वासां मानुषीणाम्शतं पूर्भिर्यविष्ठ पाह्य७हसः समेद्धार७ शत७ हिमाः तन्द्राविण७ हार्दिवानम् इहैव रातयः सन्तु ॥**
**उत्तरं पटलम्**
तूष्णीमुपविश्य अध्वर्युर्घर्मदुघामाह्वयति **गङ्ग एहि** इति स सम्प्रैष उत्तरस्य अनभिहिंकृत्य
**उपह्वये सुदुघां धेनुमेतांसुहस्तो गोधुगुतदोहदेनां श्रेष्ठं सविता साविषन्नोऽभीद्धो घर्मस्तदुषु प्रवोचो३म् ॥** इतित्रिः
**हिङ्कृण्वती वसुपत्नी वसॊनां वत्सिमच्छन्ती मनसाभ्यागाद्दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगायो३म् ॥** १ १६४ २६२७
**अभि त्वा देव सवितरीशानं वार्याणां सदावन् भागमीमहो३म् ॥** १ २४ ३
**समी वत्सं न मातृभिः सृजता गयसाधनं देवाव्यं मदमभि द्विशवसो३म् ॥** ९ १०४ २
**सं वत्सइव मातृभिरिन्दुर्हिन्वानो अज्यते देवावीर्मदो मतिभिः परिष्कृतो३म् ॥** ९ १०५ २
**यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे को३म् ॥** १ १६४ ४९
**गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङ्कृणोन्मातवा उ सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभो३म्** १ १६४ २८
**नमसेदुप सीदत दध्नेदभि श्रीणीतनेन्दुमिन्द्रे दधातनो३म्** ९ ११ ६

**संजानाना उप सीदन्नभिज्ञु पत्नीवन्तो नमस्यं नमस्यन् रिरिक्वांसस्तन्वः कृण्वत स्वाः सखा सख्युर्निमिषि रक्षमाणो३म्   १ ७२ ५**

**आ दशभिर्विवस्वत इन्द्रः कोशमचुच्यवीत् खेदया त्रिवृता दिवो३म्   ८ ७२ ८**

**दुहन्ति सप्तैकामुप द्वा पञ्च सृजतस्तीर्थे सिन्धोरधि स्वरो३म्    ८ ७२ ७**

**समिद्धो अग्निरश्विना तप्तो वां घर्म आगतं दुह्यन्ते गावो वृषणेव धेनवो दस्रा मदन्ति कारवो३म्**

**समिद्धो अग्निर्वृषणारतिर्दिवस्तप्तो घर्मो दुह्यते वामिषे मधु वयं हि वां पुरुतमासो अश्विना हवामहे सधमादेषु कारवो३म्**

**तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंस उपह्वरे यदुपरा अपिन्वन् मध्वर्णसो नद्यश्चतस्रो३म् १ ६२ ६**

**आत्मवन्नभो दुह्यते घृतं पय ऋतस्य नाभिरमृतं विजायते समीचीनाः सुदानवः प्रीणन्ति तं नरो हितमव मेहन्ति पेरवो३म्   ९ ७४ ४**

**उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमह उप प्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचो३म् १ ४० १**

इत्येतामृचमुक्त्वावतिष्ठते दुग्धायाम्–

**अधुक्षत् पिप्युषीमिषमूर्जं सप्तपदीमरिः सूर्यस्य सप्त रश्मिभो३म्  ८ ७२ १६**

आह्रियमाणे पयसि–

**उप द्रव पयसा गोधिगोषमा घर्मे सिञ्च पय उस्रियाया वि नाकमख्यत् सविता वरेण्योऽनु द्यावापृथिवी सुप्रणीतो३म्**

आसिच्यमाने गव्ये पयसि–

**आ नूनमश्विनोर्ऋषिः स्तोमं चिकेत वामया सोमं मधुमत्तमं घर्मं सिञ्चादथर्वणो३म् ८ ९ ७**

आजे पयसि– **आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियं रसा दधीत वृषभो३म्   ८ ७२ १३**

आसिक्तयोः–**समु त्ये महतीरपः सं क्षोणी समु सूर्यं सं वज्रं पर्वशो दधो३म्  ८ ७ २२**

महावीरमादायोत्तिष्ठत्सु– **उदु ष्य देवः सविता हिरण्यया बाहू अयंस्त सवनाय सुक्रतुर्घृतेन पाणी अभि प्रुष्णुते मखो युवा सुदक्षा रजसो विधर्मणो३म् ६ ७१ १** इत्यभिष्टुत्यानूत्तिष्ठेत्

**प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृताच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नो३म् १ ४० ३** इति तिष्ठन्नेवोक्त्वानुव्रजेत्

**गन्धर्व इत्था पदमस्य रक्षति पाति देवानां जनिमान्यद्भुतो गृभ्णामि रिपुं निधया निधापतिः सुकृत्तमा मधुनो भक्षमाशतो३म् ९ ८३ ४**  इति खरस्य पश्चात् प्राङ्मुखस्तिष्ठन् तमवेक्षेत पुनस्तमतिक्रम्यानुव्रजेत्

श्रोणि देशं प्राप्य– **नाके सुपर्णमुप यत् पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्यो३म्  १० १२३ ६** इति प्रणवोच्चारणेन सहानिरस्य तृणं तत्रैवोपविशेत्

**घर्मस्य यज** इति प्रेषितः पौर्वाह्णिके प्रवर्ग्ये–

**ये३ यजामहे तप्तो वां घर्मो नक्षति स्वहोता प्र वामध्वुर्यश्चरति प्रयस्वान्मधोर्दुग्धस्याश्विना तनाया वीतं पातं पय उस्रियाया उभा पिबतमश्विनोभा नः शर्म यच्छातमविद्रियाभिरूतिभी३ वौ३षट्** १ ४६ १५ उभाभ्यामृग्भ्यामनवानं यष्ट्वानुवषट्करोति– **अग्ने वीही३ वौ३षट्, घर्मस्याग्ने वीही३ वौ३षट्** इति वा द्विर्वागोजः आपराह्णिके तु–
**ये३ यजामहे यदुस्रिया स्वाहुतं घृतं पयो यं सवामश्विना भाग आगतं माध्वी धर्तारा विदथस्य सत्पती तप्तं घर्मं पिबतं सोम्यं मध्वस्य पिबतमश्विना युवं मदस्य चारुणो मध्वो रातस्य धिष्ण्या३ वौ३षट्** समानमनुवषट्कारम् द्विर्वागोजः

[ब्रह्मा वषट्कृतेऽनुवषट्कृते च जपति–

**विश्वा आशा दक्षिणासद्विश्वान् देवानयाळिह स्वाहाकृतस्य घर्मस्य मध्वः पिबतमश्विना** इति]

अप्रेषितो होतानुवषट्कृतेऽभिष्टवनशेषं ब्रूयात्–

**स्वाहाकृतः शुचिर्देवेषु घर्मो यो अश्विनोश्चमसो देवपानस्तमीं विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्यास्ना रिहन्तो३म्**

**समुद्रादूर्मिमुदियर्ति वेनो नभोजाः पृष्ठं हर्यतस्य दर्शयृतस्य सानवधि विष्टपि भ्राट् समानं योनिमभ्यनूषत व्रो३म् १० १२३ २**

**द्रप्सः समुद्रमभि यज्जिगाति पश्यन् गृध्रस्य चक्षसा विधर्मन् भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणो३म् १० १२३ ८**

**सखे सखायमभ्या ववृत्स्वाशुं न चक्रं रथ्येव रंह्यास्मभ्यं दस्म रंह्याग्ने मृळीकं वरुणे सचा विदो मरुत्सु विश्वभानुषु तोकाय तुजे शुशुचान शं कृध्यस्मभ्यं दस्म शं कृधो३म् ४ १ ३**

**ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सवितोर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहो३म्**

**ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवो३म् १ ३६ १३–१४**

**तं घेमित्था नमस्विन उप स्वराजमासतेऽर्थं चिदस्य सुधितं यदेतव आवर्तयन्ति दावनो३म् ८ ६९ १७** इति प्रागाथीं पूर्वाह्णे

**तं घेमित्था नमस्विन उप स्वराजमासते होत्राभिरग्निं मनुषः समिन्धते तितिर्वांसो अतिस्रिधो३म्** इति काण्वीमपराह्णे अनयोरन्यतरामेव वा सर्वेषु प्रवर्ग्येषु ब्रूयात् परन्तूत्तमे प्रवर्ग्ये काणीमेव ब्रूयादिति पक्षान्तरम्

**पावकशोचे तव हि क्षयं परि होतर्यज्ञेषु वृक्तबर्हिषो नरोऽग्ने दुव इच्छमानास आप्यमुपासते द्रविणं धेहि तेभ्यो३म्** इति भक्षमाकाङ्क्षेत् इडावदुपयमनीं प्रतिगृह्य– **अध्वर्य उपह्वयस्व । ब्रह्मन्नुपह्वयस्व । प्रतिपस्थातरुपह्वयस्व । अग्नीदुपह्वयस्व । यजमानोपह्वयस्व**

**हुतं हविर्मधुहविरिन्द्रतमेऽग्नावश्याम ते देवघर्म**

**मधुमतः पितुमतो वाजवतोऽङ्गिरस्वतो नमस्ते अस्तु मा मा हिंसी** इति दीक्षितवर्जमितरे प्राणभक्षं भक्षयेयुः

**घर्माय संसाद्यमानायानुब्रूहि** इति संप्रेषितः–

**श्येनो न योनिं सदनं धिया कृतं हिरण्ययमासदं देव एषत्येरिणन्ति बर्हिषि प्रियं गिराश्वो न देवाँ अप्येति यज्ञियो३म्**

**९ ७१ ६**

**आ यस्मिन् त्सप्त वासवा रोहन्तु पूर्व्या रुह ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथो३म्**

उत्तमे प्रवर्ग्येऽस्मिन् काले– **हविर्हविष्मो महि सद्म दैव्यं नभो वसानः परियास्यध्वरं राजा पवित्ररथो वाजमारुहः सहस्रभृष्टिर्जयसि श्रवो बृहो३म्** इत्यावपेत

**सूयवसाद् भगवती हि भूया अथो वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्तो३म् १ १६४ ४** इति त्रिः परिदध्यात्

## अथोपसत्

तस्यां पित्र्यावज्ञपलोपः प्रेषितोऽभिहिंकृत्य सामिधेनीरन्वाह तिस्र ऋच एकैकां त्रिरनवानम्

**हिम्, भूर्भुवःस्वरो३मुपसद्याय मीह्ळुष आस्ये जुहुता हविर्यो नो नेदिष्ठमाप्यो३म्** इति त्रिः

**यः पञ्चचर्षणीरभि निषसाद दमे दमे कविर्गृहपतिर्युवो३म्** त्रिरनवानम्

**स नो वेदो अमात्यमग्नी रक्षतु विश्वत उतास्मान् पात्वंहसो३म्** त्रिरनवानमेतस्या उत्तमेन प्रणवेन देवतामावाहयेत्–

**उतास्मान् पात्वंहसो३** (उपांशु) **मग्निमग्न आ३वह** (उपांशु) **सोमम् आ३वह** (उपांशु) **विष्णुम् आ३वह** इत्यावाहनम् नावाहयेदित्येकेऽनावाहनेऽप्येता एव देवताः ईक्षितः सीद होतरिति वोक्तः सन् तूष्णीं निरसनोपवेशनबर्हिरुपस्पर्शनानि कुर्यात् प्रकृत्येहोपस्थः प्रयाजाज्यभागवर्जम्

प्रधानानां याज्यानुवाक्या–

(उपांशु) **अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः** (मन्द्रेण) **ओ३म्** ॥[६ ।१६ ।३४]

(मन्द्रेण) **ये३ यजामहे** (उपांशु) **अग्निं य उग्र इव शर्यहा तिग्मशृङ्गो न वंसगः**

**अग्ने पुरो रुरोजिथा३** (मन्द्रेण) **वौ३षट्**

(उपांशु) **त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो असि क्रतुः** (मन्द्रेण) **ओ३म्** ॥[१ ।९१ ।५]

(मन्द्रेण) **ये३ यजामहे** (उपांशु) **सोमं गयस्फानो अमीवहा वसुवित् पुष्टिवर्धनः**

**सुमित्रः सोम नो भवा३** (मन्द्रेण) **वौ३षट्**

(उपांशु) **इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूह्ळमस्य पांसुरे** (मन्द्रेण) **ओ३म्** ॥[१ ।२२ ।१७]

(मन्द्रेण) **ये३ यजामहे** (उपांशु) **विष्णुं त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः**

**अतो धर्माणि धारया३** (मन्द्रेण) **न्वौ३षट्**

स्विष्टकृदादिकं लुप्यते नित्यमाप्यायनं निह्नवश्च

**आपराह्णिके विशेषः–**

**हिम्, भूर्भुवःस्वरो३मिमां मे अग्ने समिधमिमामुपसदं वनेरिमा उ षु श्रुधीगिरो३म्** त्रिरनवानम्

**अयाते अग्ने विधेमोर्जो नपादश्वमिष्ट एना सूक्तेन सुजातो३म्** त्रिरनवानम्

**तं त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः सपर्येम सपर्यवो३म्** त्रिरनवानम् इति सामिधेन्यः

**सपर्यवो३** (उपांशु) **मग्निमग्न आ३वह** (उपांशु) **सोमम् आ३वह** (उपांशु) **विष्णुम् आ३वह** इत्यावाहनम्

याज्यानुवाक्यानां विपर्यासः–

(उपांशु) **य उग्र इव शर्यहा तिग्मशृङ्गो न वंसगः अग्ने पुरो रुरोजिथ** (मन्द्रेण) **ओ३म्** ॥[६ ।१६ ।३४]

(मन्द्रेण) **ये३ यजामहे** (उपांशु) **अग्निमग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया ।**

**समिद्धः शुक्र आहुता३** (मन्द्रेण) **वौ३षट्**

(उपांशु) **गयस्फानो अमीवहा वसुवित् पुष्टिवर्धनः सुमित्रः सोम नो भव** (मन्द्रेण) **ओ३म्** ॥[१ ।९१ ।५]

(मन्द्रेण) **ये३ यजामहे** (उपांशु) **सोमं त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा ।**

**त्वं भद्रो असि क्रतू३** (मन्द्रेण) **वौं३षट्**

(उपांशु) **त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः अतो धर्माणि धारयन्** (मन्द्रेण) **ओ३म्** ॥[१ ।२२ ।१७]

(मन्द्रेण) **ये३ यजामहे** (उपांशु) **विष्णुमिदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।**

**समूह्ळमस्य पांसुरा३ इ** (मन्द्रेण) **वौ३षट्**

नित्यमाप्यायनम् निह्नवे उत्तानान् त्सव्यान् दक्षिणान्नीच इति पाण्योर्विपर्यासः अन्यत् सर्वं पूर्वाह्णवत्

प्रवर्ग्यमुद्वास्याग्निं प्रणयन्ति

पश्चाद्दार्शपौर्णमासिकाया वेदेरुपविश्य निरसनोपवेशने कृत्वा प्रेषितोऽग्निप्रणयनीयाः प्रतिपद्यते ।

अग्नये प्रणीयमानायानुब्रूहि इत्युक्ते–**हिम्, भूर्भुवःस्वरो३म्**

**प्र देवं देव्या धिया भरता जातवेदसम् । हव्या नो वक्षदानुषो३म्** [१० ।१७६ ।२]

**प्र देवं देव्या धिया भरता जातवेदसम् । हव्या नो वक्षदानुषो३म्**

**प्र देवं देव्या धिया भरता जातवेदसम् ।**

आसीनः प्रथमामन्वाह उपांशु सप्रणवाम् । तत्र स्थानात् स्थानसंक्रमणे प्रणवेनावसायानुच्छवस्योत्तरां प्रतिपद्यते ।

प्राणसन्ततं भवतीति विज्ञायते । उत्तरमग्निमनुव्रजन्नुत्तराः ।

**हव्या नो वक्षदानुषो३**

**मयमुष्य प्र देवयुर्होता यज्ञाय नीयते ।**

**रथो न योरभीवृतो घृणीवान् चेतति त्मनो३** [१० ।१७६ ।३]

**मयमग्निरुरुष्यत्यमृतादिव जन्मनः ।**

**सहसश्चित् सहीयान् देवो जीवातवे कृतो३** [१० ।१७६ ।४]

**मिळायास्त्वा पदे वयं नाभापृथिव्या अधि ।**

**जातवेदो निधीमह्यग्ने हव्याय वोह्ळवो३** [३ ।२९ ।४]

**मग्ने विश्वेभिः स्वनीकदेवैरूर्णावन्तं प्रथमः सीद योनिम् ।**

अर्धर्चेऽवसाय पश्चादुत्तरस्या वेदेरवस्थाय समापयेत् । निहितेऽग्नौ–

**कुलायिनं घृतवन्तं सवित्रे यज्ञं नय यजमानाय साधो३ं** [६ ।१५ ।१६]

**सीद होतः स्वमु लोके चिकित्वान् त्सादया यज्ञं सुकृतस्य योनौ ।**

**देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयोधो३ं** [३ ।२९ ।८]

**नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत् सुदक्षः ।**

**अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्नो३ं** [२ ।९ ।१]

**त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता ।**

**अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन् दीद्यद्बोधि गोपो३म्** इति त्रिः परिदध्यात् [२ ।९ ।२]

इति परिसमाप्य पूर्वस्मिन्नेवासने उपविश्य **भूर्भुवःस्वरिति** वाचं विसृजते ।

**हविर्धानप्रवर्तनम्**

दक्षिणस्य हविर्धानस्योत्तरस्य चक्रस्य यद्वर्त्म तत्पादयोरन्तरा यथा भवति तथा पश्चादनसस्त्रिपदमात्रेऽवस्थाय हविर्धानाभ्यां पवर्त्यमानाभ्यामनुब्रूहि इति प्रेषितः सोमप्रवहणवदग्रेऽभिहिङ्कारात्–

**त्वं विप्रस्त्वं कविस्त्वं विश्वानि धारयन् अप जन्यं भयं नुद** इत्यस्पन्दयन् पार्ष्णीं प्रपदेन दक्षिणा पांसून् त्सकृन्मन्त्रेण द्विस्तूष्णीं त्रिरुदुप्यानुब्रूयात्– **हिम्, भूर्भुवःस्वरो३म्**

**युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एतु पथेव सूरेः**

**शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थो३म्** [१० १३ १] इति त्रिः

**प्रेतां यज्ञस्य शम्भुवा युवामिदा वृणीमहे अग्निं व हव्यवाहनो३ं**

**द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् यज्ञं देवेषु यच्छतो३**

**मा वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः इहाद्य सोमपीतयो३ं** [२ ४१ १९–२१]

**यमे इव यतमाने यदैयं प्र वां भरन् मानुषा देवयन्तः**

**आ सीदतं स्वमु लोके विदाने स्वासस्थे भवतमिन्दवे नो३** [१० १३ २]

**मधि द्वयोरदधा उक्थ्यं वचो यतस्रुचा मिथुना या सपर्यतः** इत्यर्धर्चं आरमेदव्यवस्था चेद्रराटी व्यवस्थायां तामीक्षमाणः– **असंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वतो३ं** [१ ८३ ३]

**विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे** इत्यर्धर्चं आरमेद्यदि मेथ्यौ न निहते स्याताम् मेथ्योरुपनिहतयोः–**वि नाकमख्यत् सविता वरेण्योऽनु प्रयाणमुषसो वि राजतो३ं** [५ ८१ २]

**परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयो३म्** [१ १० १२] इति त्रिः परिदध्यात् अत्र यद्यध्वर्यवः पूर्वमेव मेथीनिहननं कृत्वा पश्चाद्रराटीं बध्नन्ति तथापि यथासूत्रमेवेदमनुवचनं वक्तव्यं नर्चोर्विपर्यासः

**अग्नीषोमीयप्रणयनम्**

अग्नीषोमौ प्रणेष्यत्सु तीर्थेन प्रपद्योत्तरेणाग्नीध्रीयायतनं सदश्च पूर्वय द्वारा पत्नीशालां प्रपद्योत्तरेण शालामुखीयमतिव्रज्य पश्चाच्छालामुखीयस्य निरसनोपवशने कृत्वोपविशति अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहि इति प्रेषितः– **हिम्, भूर्भुवःस्वरो३ं**

**सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै**

**अथास्मभ्यं सवितः सर्वताता दिवे दिव आसुवा भूरि पश्वो३म्** इति त्रिः आसीनोऽनुव्रजन्नुत्तरा अनुब्रूयात्–

**प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नो३म्** १ ४० ३

**होता देवो अमर्त्यः पुरस्तादेति मायया विदथानि प्रचोदयो३ं**

**वाजी वाजेषु धीयतेऽध्वरेषु प्रणीयते विप्रो यज्ञस्य साधनो३ं**

**धिया चक्रे वरेण्यो भूतानां गर्भमा दधे दक्षस्य पितरं तनो३** ३ २७ ७–९

**मुप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् नमो भरन्त एमसो३ं**

**राजन्तामध्वराणां गोपामृतस्य दीदिविम् वर्धमानं स्वे दमो३ं**

**स नः पितेव सूनवेऽग्ने सूपायनो भव सचस्वा नः स्वस्तयो३** १ १ ७–९

**मुप प्रियं पनिप्नतं युवानमाहुती वृधम्** इत्यर्धर्च आरमेत् आग्नीध्रीये निहितेऽभिहूयमाने

**अगन्म बिभ्रतो नमो३** ९ ६७ २९

**मग्ने जुषस्व प्रति हर्य तद्वचो मन्द्रः स्वधाव ऋतजात सुक्रतो**

**यो विश्वतः प्रत्यङ्ङसि दर्शतो रण्वः सन्दृष्टौ पितुमाँ इव क्षयो४म्** १ १४४ ७ समाप्य प्रणवेनोपरमेत् उत्तरेणाग्नीध्रीयमतिव्रजत्स्वतिव्रज्य–

**सोमो जिगाति गातुविद्देवानामेति निष्कृतम् ऋतस्य योनिमासदो३ं**

**सोमो अस्मभ्यं द्विपदे चतुष्पदे च पशवे अनमीवा इषस्करो३**

**मस्माकमायुर्वर्धयन्नभिमातीः सहमानः सोमः सधस्थमासदो३ं** ३ ६२ १३–१५

**तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसः** इत्यर्धर्च आरमेत् प्रपाद्यमानं राजानमनुप्रपद्येत–

**दधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुतो३** १ १५६ ४

**मन्तश्च प्रागा अदितिर्भवास्यवयाता हरसो दैव्यस्य**

**इन्द्रविन्द्रस्य सख्यं जुषाणः श्रौष्टीव धुरमनु राय ऋध्यो३ं** ८ ४७ २

**श्येनो न योनिं सदनं धिया कृतं हिरण्ययमासदं देव एषति**

**एरिणन्ति बर्हिषि प्रियं गिराश्वो न देवाँ अप्येति यज्ञियो३** ९ ७१ ६

**मस्तभ्नाद्यामसुरो विश्ववेदा अमिमीत वरिमाणं पृथिव्याः**

**आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानो३म्** ८ ४२ १ इति परिदध्यात्

यदि यजमानाय भयं जायते तदा– **एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम्**

**स नः शर्म त्रिवरूथं वियंसत् पातं मा द्यावापृथिवी उपस्थो४म्** ८ ४२ २ एतया त्रिः परिदध्यात् इति परिसमाप्य प्रक्रमस्थाने पूर्वस्मिन्नेवासने उपविश्य **भूर्भुवःस्वरिति** वाचं विसृजते ।

## अथाग्नीषोमीयः पशुः

पशुतन्त्रस्य सप्तदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । एकादशप्रयाजानूयाजाः । अग्नीषोमौ प्रधानपशुदेवता । वनस्पतिः पृषदाज्यदेवता स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

तीर्थेन प्रपद्य हविर्धानस्य पूर्वद्वारोत्तरस्थूणपूर्वभागे उत्तरवेद्याः पश्चान्निरसनोपवेशने कृत्वोपविश्य **यूपायाज्यमानायानुब्रूहि** इति प्रेषितः– **हिम्, भूर्भुवःस्वरो३म्**

**अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन ।**

**यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थो३म्** [३ ।८ ।१]

**अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन ।**

**यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थो३म्**

**अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन ।** इत्युत्तमेन वचनेनार्धर्च आरमेत् ।

यूपायोच्छ्रीयमाणायानुब्रूहि इति प्रेषितः–

**यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थो३म्**

**उच्छ्रयस्व वनस्पते वर्ष्मन् पृथिव्या अधि । सुमिती मीयमानो वर्चोधा यज्ञवाहसो३ं** [३ ।८ ।३]

**समिद्धस्य श्रयमाणह् पुरस्ताद् ब्रह्म वन्वानो अजरं सुवीरम् ।**

**आरे अस्मदमतिं बाधमान उच्छ्रयस्व महते सौभगायो३म्**

**ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहो३म्**

**ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह ।**

**कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवो३ं** १ ३६ १३–१४

**जातो जायते सुदिनत्वे अह्नां समर्य आविदथे वर्धमानः ।** इत्यर्धर्च आरमेत् ।

यूपाय परिवीयमाणायानुब्रूहि इति प्रेषितः–

**पुनन्ति धीरा अपसो मनीषा देवया विप्र उदियर्ति वाचो३ं** ३ ८ ५

**युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः ।**

**तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तो३म् ॥** ३८४ इति त्रिः परिदध्यात् ।

आतिथ्यवदग्निमन्थनम् कृताकृतावाज्यभगौ **होतरेहि** इत्युक्ते **नमः प्रवक्त्रे** इत्यादि सामिधेन्यां **पृथुपाजा अमर्त्यः** इति द्वे धाय्ये आवपेत्–

**शोचिष्केशस्तमीमहो३ं**

**पृथुपाजा अमर्त्यो घृतनिर्णिक् स्वाहुतः । अग्निर्यज्ञस्य हव्यवो३ं** [३ ।२७ ।५]

**तं सबाधो यतस्रुच इत्था धिया यज्ञवन्तः । आ चक्रुरग्निमूतयो३ं** [३ ।२७ ।६]

**समिद्धो अग्न आहुत** इत्यादि ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । अग्नीषोमावा३वह वनस्पतिमा३वह देवाँ आज्यपाँ आ३वहे**त्यादि । समानमा संमार्गतृणैः संमार्जनात् सम्मार्गैः सम्मृज्याप उपस्पृश्य प्रवृताहुतीर्जुहुयात्–

**जुष्टो वाचे भूयासं जुष्टो वाचस्पतये देवि वाक् ।**

**यद्वाचो मधुमत्तमं तस्मिन्माधाः सरस्वत्यै वाचे स्वाहा ॥**

पुनरादाय पञ्चविग्रायं जुहोति– **स्वाहा वाचे । स्वाहा वाचस्पतये । स्वाहा सरस्वत्यै । स्वाहा सरस्वते । महोभ्यः संमहोभ्यः स्वाहा ।** सौत्येऽहन्येवायं होमो नान्यस्मिन्नित्येके **प्रशास्तस्तीर्थेन प्रपद्यस्व** इति प्रशास्तारं सम्प्रेष्यति तीर्थेनागत्य प्रत्यङ्मुखायावस्थिताय प्रशास्त्रे दण्डं प्रयच्छेद्दक्षिणोत्तराभ्यां पाणिभ्याम्– **मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रयच्छामि** इति तथायुक्ताभ्यां दक्षिणोत्तराभ्यां पाणिभ्यामेव प्रशास्ता होतृपाण्योरधस्ताद्गृहीत्वा– **मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रतिगृह्णाम्यवक्रो विथुरो भूयासम्** इति प्रतिगृह्योत्तरेण होतारमतिव्रजेद्दक्षिणेन दण्डं हरेन्नचानेन संस्पृशेदात्मानं वान्यं वा प्रैषवचनात् होता दण्डं प्रदाय मैत्रावरुणमग्रतः कृत्वोत्तरेण हविर्धाने अतिव्रज्य पूर्वया द्वारा सदः प्रपद्योत्तरेणा यथा स्वं धिष्ण्यावतिव्रज्य पश्चात् स्वस्य धिष्ण्यस्य निरसनोपवेशने कृत्वोपविशति प्रशास्ता स्वस्य धिष्ण्यस्य पश्चात् प्रह्वोऽवतिष्ठते होता जानुशिरसा बर्हिरुपस्पृश्य **भूपतये नम** इत्यादि स्रुगादापनान्तं ब्रूयात् अध्वर्युणा **समिद्भ्यः प्रेष्य** इत्यादि प्रेषितः प्रशास्ता वेद्यां दण्डमवष्टभ्य प्रैषैर्होतारं प्रेष्यति होता यजत्याप्रीभिः प्रैषसलिङ्गाभिः । **समिद्धो अग्निः** इति शुनकानामाप्रीसूक्तम् **जुषस्व नः समिधम्** इति वसिष्ठानाम् **समिद्धो अद्य मनुष** इति वसिष्ठशुनकवर्जानामितरेषां सर्वेषामिदमाप्रीसूक्तम् यथाऋषि वा प्रशास्ता– **होता यक्षदग्निं समिधा सुषमिधा समिद्धं नाभापृथिव्याः सङ्गथे वामस्य ।**

**वर्ष्मन् दिव इळस्पदे वेत्वाज्यस्य होतर्यज ॥**

होता– **ये३ यजामहे समिद्धो अद्य मनुषो दुरोणे देवो देवान् यजसि जातवेदः ।**

**आ च वह मित्रमहश्चिकित्वान् त्वं दूतः कविरसि प्रचेता३ वौ३षट् ॥१ ॥**

प्रशास्ता– **होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य गोपाम् ।**

**मध्वाद्य देवो देवेभ्यो देवयानान् पथो अनक्तु वेत्वाज्यस्य होतर्यज ॥**

प्रशास्ता– **होता यक्षन्नराशंसं नृशस्त्रं नॄँःप्रणेत्रं ।**

**गोभिर्वपावान्स्याद्वीरैः शक्तीवान् रथैः प्रथमया वा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज** इति वसिष्ठशुनकात्रिवध्र्यश्वराजन्यानां प्रैषः

होता– **ये३ यजामहे तनूनपात् पथ ऋतस्य यानान्मध्वा समञ्जस्त्स्वदया सुजिह्व ।**

**मन्मानि धीभिरुत यज्ञमृन्धन् देवत्रा च कृणुह्यध्वरं ना३ वौ३षट् ॥२ ॥**

प्रशास्ता– होता यक्षदग्निमिळ ईळितो देवो देवाँ आवक्षद्दूतो हव्यवाळमूरः ।
उपेमं यज्ञमुपेमां देवो देवहूतिमवतु वेत्वाज्यस्य होतर्यज ॥
होता– ये३ यजामहे आजुह्वान ईड्यो वन्द्यश्चायाह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता स एनान् यक्षीषितो यजीया३ न्वौ३षट् ॥३ ॥
प्रशास्ता– होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदा अस्मिन् यज्ञे वि च प च प्रथतां स्वासस्थं देवेभ्यः ।
एमेनदद्य वसवो रुद्रा आदित्याः सदन्तु प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज ॥
होता– ये३ यजामहे प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।
व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योना३ं वौ३षट् ॥४ ॥
प्रशास्ता– होता यक्षद्दुर ऋष्वाः कवष्योकोषधावनीरुदाताभिर्जिहतां विपक्षोभिः श्रयन्ताम् ।
सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधो व्यन्त्वाज्यस्य होतर्यज ॥
होता– ये३ यजामहे व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणा३ वौ३षट् ॥५ ॥
प्रशास्ता– होता यक्षदुषासानक्ता बृहती सुपेशसा नॄँः पतिभ्यो योनिं कृण्वाने ।
संस्मयमाने इन्द्रेण देवैरेदं बर्हिः सीदतां वीतामाज्यस्य होतर्यज ॥
होता– ये३ यजामहे आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने३ वौ३षट् ॥६ ॥
प्रशास्ता– होता यक्षद्दैव्याहोतारा मन्द्रा पोतारा कवी प्रचेतसा ।
स्विष्टमद्यान्यः करदिषा स्वभिगूर्तमन्य ऊर्जासतवसेमं यज्ञं दिवि देवेषु धत्तां वीतामाज्यस्य होतर्यज ॥
होता– ये३ यजामहे दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता३ वौ३षट् ॥७ ॥
प्रशास्ता– होता यक्षत्तिस्रो देवीरपसामपस्तमा अच्छिद्रमद्येदमपस्तन्वताम् ।
देवेभ्यो देवीर्देवमपो व्यन्त्वाज्यस्य होतर्यज ॥
होता– ये३ यजामह आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती ।
तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु३ वौ३षट् ॥८ ॥
प्रशास्ता– होता यक्षत्त्वष्टारमचिष्टुमपाकं रेतोधां विश्रवसं यशोधाम् ।
पुरुरूपमकामकर्शनं सुपोषः पोषैः स्यात् सुवीरो वीरैर्वेत्वाज्यस्य होतर्यज ॥
होता– ये३ यजामहे य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा ।
तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वा३ न्वौ३षट् ॥९ ॥
प्रशास्ता– होता यक्षद्वनस्पतिमुपावस्रक्षद्धियो जोष्टारं शशमं नरः ।

**स्वदात्स्वधितिर् ऋतुथाद्य देवो देवेभ्यो हव्यवाड् वेत्वाज्यस्य होतर्यज ॥**

होता– **ये३ यजामह उपावसृज त्मन्या समञ्जन् देवानां पाथ ऋतुथा हवींषि ।**

**वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेना३ वौ३षट् ॥१० ॥**

**पर्यग्नये क्रियमाणायानुब्रूहि** इति प्रेषितो मैत्रावरुणः–

**अग्निर्होता नो अध्वरे वाजी सन् परिणीयते । देवो देवेषु यज्ञियों३** इति त्रिः

**परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव । आ देवेषु प्रियो दधों३**

**परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषो३म् ॥** इति त्रिः परिदध्यात् ।

**अध्रिगवे प्रेष्य** इति **उपप्रेष्य होतर्हव्या देवेभ्यः** इति वाध्वर्युणोक्ते प्रशास्ता– **अजैदग्निरसनद्वाजं नि देवो देवेभ्यो हव्यवाट् प्राञ्जोभिर्हिन्वानो धेनाभिः कल्पमानो यज्ञस्यायुः प्रतिरन्नुपप्रेष्य होतार्हव्या देवेभ्यः ।** इति प्रैषमुक्त्वान्तर्वेदि दण्डं निदध्यात्

होता– **दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेधम् । प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । उदीचीनाँ अस्य पदो निधत्तात् सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरम् । एकधास्य त्वचमाच्छयतात् पुरा नाभ्या अपिशसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वात् । श्येनमस्य वक्षः कृणुतात् प्रशसा बाहू शला दोषणी कश्यपे वांसाच्छिद्रे श्रोणी कवषोरूस्रे कपर्णाष्ठीवन्ता षड्विंशतिरस्य वंक्रयस्ता अनुष्ठ्यो च्यावयताद्गात्रं गात्रमस्यानूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् ।** (उपांशु) **अस्ना रक्षः संसृजतात् । वनिष्ठुमस्यमाराविष्ठोरूकम्मन्यमाना नेद्वस्तोके तनये रवितारवत्** (उपांशु) **शमितारः । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ** (उपांशु) **अपाप । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ** (उपांशु) **अपाप । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ** (उपांशु) **अपाप । शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद्दुष्कृतमन्यत्र तत्** इति जपित्वा दक्षिणावृदावर्तते मैत्रावरुणश्च सव्यावृतौ ब्रह्मयजमानौ संज्ञप्ते पशौ पुनरावर्तेरन् वपायां श्रप्यमाणायां **स्तोकेभ्योऽनुब्रूहि** इति प्रेषितो मैत्रावरुणस्तिष्ठन् दण्डमादाय–

**जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् । हव्या जुह्वान आसनो३म्** इति त्रिः

**इमं नो यज्ञममृतेषु धेहीमा हव्या जातवेदो जुषस्व ।**

**स्तोकानामग्ने मेदसो घृतस्य होतः प्राशान प्रथमो निषद्यो३ं**

**घृतवन्तः पावक ते स्तोकाश्चोतन्ति मेदसः ।**

**स्वधर्मं देववीतये श्रेष्ठं नो धेहि वार्यो३ं**

**तुभ्यं स्तोका घृतश्चुतोऽग्ने विप्राय सन्त्य ।**

**ऋषिःश्रेष्ठःसमिध्यसे यज्ञस्य प्राविता भवो३ं**

**तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य ।**

**कविशस्तो बृहतो भानुनागा हव्या जुषस्व मेधिरो३**

**मोजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे ।**

**श्चोतन्ति ते वसो स्तोका अधि त्वचि प्रति तान् देवशो विहो३म्** ॥ इति त्रिः परिदध्यात् ।

होता निरसनोपवेशने कृत्वा **अग्निर्होता वेतु** इत्युत्तमप्रयाजार्थं स्रुगादापनं ब्रूयात् **स्वाहाकृतीभ्यः प्रेष्य** इत्युक्ते प्रशास्ता– **होता यक्षदग्निं स्वाहाज्यस्य स्वाहा मेदसः स्वाहा स्तोकानां स्वाहा स्वाहाकृतीनां स्वाहा हव्यसूक्तीनाम् । स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तु होतर्यज ॥**

होता– **ये३ यजामहे सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत् पुरोगाः ।**

**अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवा३ वौ३षट् ॥११** ॥ इति प्रयाजाः

यथाऋषि पक्षे तु– कण्वाङ्गिरोऽगस्त्यशुनका विश्वामित्रोऽत्रिरेव च

वसिष्ठः कश्यपो वाध्र्यश्वो जमदग्निरथोत्तमः

कण्वानाम्– **ये३ यजामहे सुसमिद्धो न आवह देवाँ अग्ने हविष्मते । होतः पावक यक्षि चा३ वौ३षट् ॥**

**ये३ यजामहे मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे । अद्या कृणुहि वीतया३ इ वौ३षट् ॥**

**ये३ यजामह अग्ने सुखतमे रथे देवाँ ईळित आ वह । असि होता मनुर्हिता३ वौ३षट् ॥**

**ये३ यजामहे स्तृणीत बर्हिरानुषग्घृतपृष्ठं मनीषिणः । यत्रामृतस्य चक्षणा३ं वौ३षट् ॥**

**ये३ यजामहे वि श्रयन्तामृतावृधो द्वारो देवीरसश्चतः । अद्या नूनं च यष्टवा३ इ वौ३षट् ॥**

**ये३ यजामहे नक्तोषासा सुपेशसास्मिन् यज्ञ उप ह्वये । इदं नो बर्हिरासदा३ इ वौ३षट् ॥**

**ये३ यजामहे ता सुजिह्वा उप ह्वये होतारा दैव्या कवी । यज्ञं नो यक्षतामिमा३ं वौ३षट् ॥**

**ये३ यजामह इळा सरस्वती मही तिस्रो देवीर्मयोभुवः । बर्हिः सीदन्त्वस्रिधा३ वौ३षट् ॥**

**ये३ यजामह इह त्वष्टारमग्रियं विश्वरूपमुपह्वये । अस्माकमस्तु केवला३ वौ३षट् ॥**

**ये३ यजामह अव सृजा वनस्पते देव देवेभ्यो हविः । प्र दातुरस्तु चेतना३ं वौ३षट् ॥**

**ये३ यजामहे स्वाहा यज्ञं कृणोतनेन्द्राय यज्वनो गृहे । तत्र देवाँ उप ह्वया३ इ वौ३षट् ॥** १ १३ १–१२

अङ्गिरसाम्– **ये३ यजामहे समिद्धो अग्न आ वह देवाँ अद्य यतस्रुचे । तन्तुं तनुष्व पूर्व्यं सुतसोमाय दाशुषा३ इ वौ३षट् ॥**

**ये३ यजामहे घृतवन्तमुप मासि मधुमन्तं तनूनपात् । यज्ञं विप्रस्य मावतः शशमानस्य दाशुषा३ वौ३षट् ॥**

**ये३ यजामह ईळितो अग्न आ वहेन्द्रं चित्रमिह प्रियम् । इयं हि त्वा मतिर्ममाच्छा सुजिह्व वच्यता३ इ वौ३षट् ॥**

**ये३ यजामहे स्तृणानासो यतस्रुचो बर्हिर्यज्ञे स्वध्वरे । वृञ्जे देवव्यचस्तममिन्द्राय शर्म सप्रथा३ वौ३षट् ॥**

**ये३ यजामहे वि श्रयन्तामृतावृधः प्रयै देवेभ्यो महीः । पावकासः पुरुस्पृहो द्वारो देवीरसश्चता३ वौ३षट् ॥**

ये३ यजामह आ भन्दमाने उपाके नक्तोषासा सुपेशसा । यह्वी ऋतस्य मातरा सीदतां बर्हिरा सुमा३ द्वौ३षट् ॥
ये३ यजामहे मन्द्रजिह्वा जुगुर्वणी होतारा दैव्या कवी । यज्ञं नो यक्षतामिमं सिध्रमद्य दिविस्पृशा३ं वौ३षट् ॥
ये३ यजामहे शुचिर्देवेष्वर्पिता होत्रा मरुत्सु भारती । इळा सरस्वती मही बर्हिः सीदन्तु यज्ञिया३ वौ३षट् ॥
ये३ यजामहे तन्नस्तुरीपमद्भुतं पुरु वारं पुरु त्मना । त्वष्टा पोषाय वि ष्यतु राये नाभा नो अस्मयू३ वौ३षट् ॥
ये३ यजामह अवसृजन्नुप त्मना देवान् यक्षि वनस्पते । अग्निर्हव्या सुषूदति देवो देवेषु मेधिरा३ वौ३षट् ॥
ये३ यजामहे पूषण्वते मरुत्वते विश्वदेवाय वायवे । स्वाहा गायत्रवेपसे हव्यमिन्द्राय कर्तना३ वौ३षट् ॥ १ १४२ १–१३

अगस्त्यानाम्– ये३ यजामहे समिद्धो अद्य राजसि देवो देवैः सहस्रजित् । दूतो हव्या कविर्वहा३ वौ३षट् ॥
ये३ यजामहे तनूनपादृतं यते मद्वा यज्ञः समज्यते । दधत् सहस्रिणीरिषा३ वौ३षट् ॥
ये३ यजामह आजुह्वानो न ईड्यो देवाँ आ वक्षि यज्ञियान् । अग्ने सहस्रसा असी३ वौ३षट् ॥
ये३ यजामहे प्राचीनं बर्हिरोजसा सहस्रवीरमस्तृणन् । यत्रादित्या विराजथा३ वौ३षट् ॥
ये३ यजामहे विराट् सम्राड्विभ्वीः प्रभ्वीर्बह्वीश्च भूयसीश्च याः । दुरो घृतान्यक्षरा३ न्वौ३षट् ॥
ये३ यजामहे सुरुक्मे हि सुपेशसाधि श्रिया विराजतः । उषासावेह सीदता३ं वौ३षट् ॥
ये३ यजामहे प्रथमा हि सुवाचसा होतारा दैव्या कवी । यज्ञं नो यक्षतामिमा३ं वौ३षट् ॥
ये३ यजामहे भारतीळे सरस्वती या वः सर्वा उपब्रुवे । ता नश्चोदयत श्रिया३ इ वौ३षट् ॥
ये३ यजामहे त्वष्टा रूपाणि हि प्रभुः पशून् विश्वान् त्स्मानजे । तेषां नः स्फातिमा यजा३ वौ३षट् ॥
ये३ यजामह उप त्मना वनस्पते पाथो देवेभ्यः सृज । अग्निर्हव्यानि सिष्वदा३ द्वौ३षट् ॥
ये३ यजामहे  पुरोगा अग्निर्देवानां गायत्रेण समज्यते । स्वाहाकृतीषु रोचता३ इ वौ३षट् ॥१ १८८ १–११

शुनकानाम्– ये३ यजामहे समिद्धो अग्निर्निहितः पृथिव्यां प्रत्यङ् विश्वानि भुवनान्यस्थात् ।
होता पावकः प्रदिवः सुमेधा देवो देवान् यजत्वग्निरर्हा३ न्वौ३षट् ॥
प्रशास्ता– होता यक्षन्नराशंसं नृशस्त्रं नॄंःप्रणेत्रं ।
गोभिर्वपावान्त्स्याद्वीरैः शक्तीवान् रथैः प्रथमया वा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज इति शुनकानां द्वितीयः प्रैषः
ये३ यजामहे नराशंसः प्रति धामान्यञ्जन् तिस्रो दिवः प्रति मह्ना स्वर्चिः ।
घृतप्रुषा मनसा हव्यमुन्दन् मूर्धन् यज्ञस्य समनक्तु देवा३ न्वौ३षट् ॥
ये३ यजामह ईळितो अग्ने मनसा नो अर्हन् देवान् यक्षि मानुषात् पूर्वो अद्य ।
स आ वह मरुतां शर्धो अच्युतमिन्द्रं नरो बर्हिषदं यजध्वा३ं वौ३षट् ॥
ये३ यजामहे देव बर्हिर्वर्धमानं सुवीरं स्तीर्णं राये सुभरं वेद्यस्याम् ।

घृतेनाक्तं वसवः सीदतेदं विश्वे देवा आदित्या यज्ञियासा३ वौ३षट् ॥
ये३ यजामहे वि श्रयन्तामुर्विया हूयमाना द्वारो देवीः सुप्रायणा नमोभिः ।
व्यचस्वतीर्वि प्रथन्तामजुर्या वर्णं पुनाना यशसं सुवीरा३ं वौ३षट् ॥
ये३ यजामहे साध्वपांसि सनता न उक्षिते उषासानक्ता वय्येव रण्विते ।
तन्तुं ततं संवयन्ती समीची यज्ञस्य पेशः सुदुघे पयस्वती३ वौ३षट् ॥
ये३ यजामहे दैव्या होतारा प्रथमा विदुष्टर ऋजु यक्षतः समृचा वपुष्टरा ।
देवान् यजन्तावृतुथा समञ्जतो नाभा पृथिव्या अधि सानुषु त्रिषू३ वौ३षट् ॥
ये३ यजामहे सरस्वती साधयन्ती धियं न इळा देवी भारती विश्वतूर्तिः ।
तिस्रो देवीः स्वधया बर्हिरेदमच्छिद्रं पान्तु शरणं निषद्या३ वौ३षट् ॥
ये३ यजामहे पिशङ्गरूपः सुभरो वयोधाः श्रुष्टी वीरो जायते देवकामः ।
प्रजां त्वष्टा विष्यतु नाभिमस्मे अथा देवानामप्येतु पाथा३ वौ३षट् ॥
ये३ यजामहे वनस्पतिरवसृजन्नुप स्थादग्निर्हविः सूदयाति प्र धीभिः ।
त्रिधा समक्तं नयतु प्रजानन् देवेभ्यो दैव्यः शमितोप हव्या३ं वौ३षट् ॥ २ ३ १–११

विश्वामित्राणाम्– ये३ यजामहे समित्समित् सुमना बोध्यस्मे शुचाशुचा सुमतिं रासि वस्वः ।
आ देव देवान् यजथाय वक्षि सखा सखीन् त्सुमना यक्ष्यग्ने३ वौ३षट् ॥
ये३ यजामहे यं देवासस्त्रिरहन्नायजन्ते दिवेदिवे वरुणो मित्रो अग्निः ।
सेमं यज्ञं मधुमन्तं कृधी नस्तनूनपाद् घृतयोनिं विधन्ता३ं वौ३षट् ॥
ये३ यजामहे प्र दीधितिर्विश्ववारा जिगाति होतारमिळः प्रथमं यजध्यै ।
अच्छा नमोभिर्वृषभं वन्दध्यै स देवान् यक्षदिषितो यजीया३ न्वौ३षट् ॥
ये३ यजामह ऊर्ध्वो वां गातुरध्वरे अकार्यूर्ध्वा शोचींषि प्रस्थिता रजांसि ।
दिवो वा नाभा न्यसादि होता स्तृणीमहि देवव्यचा वि बर्ही३ वौं३षट् ॥
ये३ यजामहे सप्त होत्राणि मनसा वृणाना इन्वन्तो विश्वं प्रति यन्नृतेन ।
नृपेशसो विदथेषु प्र जाता अभी३मं यज्ञं वि चरन्त पूर्वी३ वौं३षट् ॥
ये३ यजामह आ भन्दमाने उषसा उपाके उत स्मयेते तन्वा३ विरूपे ।
यथा नो मित्रो वरुणो जुजोषदिन्द्रो मरुत्वाँ उत वा महोभी३ वौं३षट् ॥
ये३ यजामहे दैव्या होतारा प्रथमा न्यृञ्जे सप्त पृक्षासः स्वधया मदन्ति ।
ऋतं शंसन्त ऋतमित्त आहुरनु व्रतं व्रतपा दीध्याना३ वौ३षट् ॥
ये३ यजामह आ भारती भारतीभिः सजोषा इळा देवी मनुष्येभिरग्निः ।

सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदन्तू३ वौ३षट् ॥

ये३ यजामहे तन्नस्तुरीपमधपोषयित्नु देव त्वष्टर्विरराणः स्यस्व ।

यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामा३ वौ३षट् ॥

ये३ यजामहे वनस्पतेऽव सृजोप देवानग्निर्हविः शमिता सूदयाति ।

सेदु होता सत्यतरो यजाति यथा देवानां जनिमानि वेदा३ वौ३षट् ॥

ये३ यजामह आ याह्यग्ने समिधानो अर्वाङिन्द्रेण देवैः सरथं तुरेभिः ।

बर्हिर्न आस्तामदितिः सुपुत्रा स्वाहा देवा अमृता मादयन्ता३ं वौ३षट् ॥ ३ ४ १–११

अत्रीणाम्– ये३ यजामहे सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसा३ इ वौ३षट् ॥

प्रशास्ता– होता यक्षन्नराशंसं नृशस्त्रं नॄँःप्रणेत्रं ।

गोभिर्वपावान्त्स्याद्वीरैः शक्तीवान् रथैः प्रथमया वा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज इत्यत्रीणां द्वितीयः प्रैषः

ये३ यजामहे नराशंसः सुषूदतीमं यज्ञमदाभ्यः । कविर्हि मधुहस्त्या३ वौ३षट् ॥

ये३ यजामह ईळितो अग्न आ वहेन्द्रं चित्रमिह प्रियम् । सुखै रथेभिरूतया३ इ वौ३षट् ॥

ये३ यजामह ऊर्णम्रदा वि प्रथस्वाभ्य१र्का अनूषत । भवा नः शुभ्र सातया३ इ वौ३षट् ॥

ये३ यजामहे देवीर्द्वारो विश्रयध्वं सुप्रायणा न ऊतये । प्रप्र यज्ञं पृणीतना३ वौ३षट् ॥

ये३ यजामहे सुप्रतीके वयोवृधा यह्वी ऋतस्य मातरा । दोषामुषासमीमहा३ इ वौ३षट् ॥

ये३ यजामहे वातस्य पत्मन्नीळिता दैव्या होतारा मनुषः । इमं नो यज्ञमागता३ं वौ३षट् ॥

ये३ यजामह इळा सरस्वती तिस्रो देवीर्मयोभुवः । बर्हिः सीदन्त्वस्रिधा३ वौ३षट् ॥

ये३ यजामहे शिवस्त्वष्टरिहा गहि विभुः पोष उत त्मना । यज्ञेयज्ञे न उदवा३ वौ३षट् ॥

ये३ यजामहे यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामया३ वौ३षट् ॥

ये३ यजामहे स्वाहाग्नये वरुणाय स्वाहेन्द्राय मरुद्भ्यः । स्वाहा देवेभ्यो हवी३ वौँ३षट् ॥ ५ ५ १–११

वसिष्ठानाम्– ये३ यजामहे जुषस्व नः समिधमग्ने अद्य शोचा बृहद्यजतं धूममृण्वन् ।

उप स्पृश दिव्यं सानु स्तूपैः सं रश्मिभिस्ततन सूर्यस्या३ वौ३षट् ॥

प्रशास्ता– होता यक्षन्नराशंसं नृशस्त्रं नॄँः प्रणेत्रं ।

गोभिर्वपावान् त्स्याद्वीरैः शक्तीवान् रथैः प्रथमया वा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज इति वसिष्ठानां द्वितीयः प्रैषः

ये३ यजामहे नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः ।

ये सुक्रतवः शुचयो धियन्धाः स्वदन्ति देवा उभयानि हव्या३ वौ३षट् ॥

ये३ यजामह ईळेन्यं वो असुरं सुदक्षमन्तर्दूतं रोदसी सत्यवाचम् ।
मनुष्वदग्निं मनुना समिद्धं समध्वराय सदमिन्महेमाा३ वौ३षट् ॥
ये३ यजामहे सपर्यवो भरमाणा अभिज्ञु प्र वृञ्जते नमसा बर्हिरग्नौ ।
आजुह्वाना घृतपृष्ठं पृषद्वदध्वर्यवो हविषा मर्जयध्वा३ं वौ३षट् ॥
ये३ यजामहे स्वाध्यो३ वि दुरो देवयन्तोऽशिश्रयू रथयुर्देवताता ।
पूर्वी शिशुं न मातरा रिहाणे समग्रुवो न समनेष्वञ्जा३ न्वौ३षट् ॥
ये३ यजामह उत योषणे दिव्ये मही न अषासानक्ता सुदुघेव धेनुः ।
बर्हिषदा पुरुहूते मघोनी आ यज्ञिये सुविताय श्रयेता३ं वौ३षट् ॥
ये३ यजामहे विप्रा यज्ञेषु मानुषेषु कारू मन्ये वां जातव्वेदसा यजध्यै ।
ऊर्ध्वं नो अध्वरं कृतं हवेषु ता देवेषु वनथो वार्याणी३ वौ३षट् ॥
ये३ यजामह आ भारती भारतीभिः सजोषा इळा देवी मनुष्येभिरग्निः ।
सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदन्तू३ वौ३षट् ॥
ये३ यजामहे तन्नस्तुरीपमधपोषयित्नु देव त्वष्टर्विरराणः स्यस्व ।
यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामा३ वौ३षट् ॥
ये३ यजामहे वनस्पतेऽव सृजोप देवानग्निर्हविः शमिता सूदयाति ।
सेदु होता सत्यतरो यजाति यथा देवानां जनिमानि वेदा३ वौ३षट् ॥
ये३ यजामह आ याह्यग्ने समिधानो अर्वाङिन्द्रेण देवैः सरथं तुरेभिः ।
बर्हिर्न आस्तामदितिः सुपुत्रा स्वाहा देवा अमृता मादयन्ता३ं वौ३षट् ॥ ७ २ १–११

कश्यपानाम्– ये३ यजामहे समिद्धो विश्वतस्पतिः पवमानो वि राजति । प्रीणन् वृषा कनिक्रदा३ द्वौ३षट् ॥
ये३ यजामहे तनूनपात् पवमानः शृङ्गे शिशानो अर्षति । अन्तरिक्षेण ररजा३ द्वौ३षट् ॥
ये३ यजामह ईळेन्यः पवमानो रयिर्विराजति द्युमान् । मधोर्धाराभिरोजसा३ वौ३षट् ॥
ये३ यजामहे बर्हिः प्राचीनमोजसा पवमानः स्तृणन् हरिः । देवेषु देव ईयता३ इ वौ३षट् ॥
ये३ यजामह उदातैर्जिहते बृहद् द्वारो देवीर्हिरण्ययीः । पवमानेन सुष्टुता३ वौ३षट् ॥
ये३ यजामहे सुशिल्पे बृहती मही पवमानो वृषण्यति । नक्तोषासा न दर्शता३ इ वौ३षट् ॥
ये३ यजामह उभा देवा नृचक्षसा होतारा दैव्या हुवे । पवमान इन्द्रो वृषा३ वौ३षट् ॥
ये३ यजामहे भारती पवमानस्य सरस्वतीळा मही । इमं नो यज्ञमागमन् तिस्रो देवीः सुपेशसा३ वौ३षट् ॥
ये३ यजामहे त्वष्टारमग्रजां गोपां पुरोयावानमा हुवे । इदुरिन्द्रो वृषा हरिः पवमानः प्रजापती३ वौँ३षट् ॥
ये३ यजामहे वनस्पतिं पवमान मध्वा समङ्ग्धि धारया । सहस्रवल्शं हरितं भ्राजमानं हिरण्यया३ं वौ३षट् ॥

**ये३ यजामहे विश्वे देवाः स्वाहाकृतिं पवमानस्या गत ।**

**वायुर्बृहस्पतिः सूर्योऽग्निरिन्द्रः सजोषसा३ वौ३षट् ॥** ९ ५ १–११

वाध्र्यश्वानाम्– **ये३ यजामह इमां मे अग्ने समिधं जुषस्वेळस्पदे प्रति हर्या घृताचीम् ।**

**वर्ष्मन् पृथिव्याः सुदिनत्वे अह्नामूर्ध्वो भव सुक्रतो देवयज्या३ वौ३षट् ॥**

प्रशास्ता– **होता यक्षन्नराशंसं नृशस्त्रं नॄँःप्रणेत्रं ।**

**गोभिर्वपावाम् त्स्याद्वीरैः शक्तीवान् रथैः प्रथमया वा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज** इति कश्यपानां द्वितीयः प्रैषः

**ये३ यजामह आ देवानामग्रयावेह यातु नराशंसो विश्वरूपेभिरश्वैः ।**

**ऋतस्य पथा नमसा मियेभो देवेभ्यो देवतमः सुषूदा३ द्वौ३षट् ॥**

**ये३ यजामहे शश्वत्तममीळते दूत्याय हविष्मन्तो मनुष्यासो अग्निम् ।**

**वहिष्ठैरश्वैः सुवृता रथेना देवान् वक्षि नि षदेह होता३ वौ३षट् ॥**

**ये३ यजामहे वि प्रथतां देवजुष्टं तिरश्चा दीर्घं द्राघ्मा सुरभि भूत्वस्मे ।**

**अहेळता मनसा देव बर्हिरिन्द्रज्येष्ठाँ उशतो यक्षि देवा३ न्वौ३षट् ॥**

**ये३ यजामहे दिवो वा सानु स्पृशता वरीयः पृथिव्या वा मात्रया वि श्रयध्वम् ।**

**उशतीर्द्वारो महिना महद्भिर्देवं रथं रथयुर्धारयध्वा३ं वौ३षट् ॥**

**ये३ यजामहे देवी दिवो दुहितरा सुशिल्पे उषासानक्ता सदतां नि योनौ ।**

**आ वां देवास उशती उशन्त उरौ सीदन्तु सुभगे उपस्था३ इ वौ३षट् ॥**

**ये३ यजामह ऊर्ध्वो ग्रावा बृहदग्निः समिद्धः प्रिया धामान्यदितेरुपस्थे ।**

**पुरोहितावृत्विजा यज्ञे अस्मिन् विदुष्टरा द्रविणमा यजेथा३ं वौ३षट् ॥**

**ये३ यजामहे तिस्रो देवीर्बर्हिरिदं वरीय आ सीदत चकृमा वः स्योनम् ।**

**मनुष्वद्यज्ञं सुधिता हवींषीळा देवी घृतपदी जुषन्ता३ वौ३षट् ॥**

**ये३ यजामहे देव त्वष्टर्यद्ध चारुत्वमानड् यदङ्गिरसामभवघ् सचाभूः ।**

**स देवानां पाथ उप प्र विद्वानुशन् यक्षि द्रविणोदः सुरत्ना३ वौ३षट् ॥**

**ये३ यजामहे वनस्पते रशनया नियूया देवानां पाथ उप वक्षि विद्वान् ।**

**स्वदाति देवः कृणवद्धवींष्यवतां द्यावापृथिवी हवं मा३ इ वौ३षट् ॥**

**ये३ यजामह आग्ने वह वरुणमिष्टये न इन्द्रं दिवो मरुतो अन्तरिक्षात् ।**

**सीदन्तु बर्हिर्विश्व आ यजत्राः स्वाहा देवा अमृता मादयन्ता३ं वौ३षट् ॥** १० ७० १–११

जमदग्नीनां तु पूर्वमेवोक्तम् इति यथाऋषि पक्षे प्रयाजयाज्याः

आज्यभागपक्षेऽनुवाकाय प्रेषितः प्रशास्ता–

**अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतो३म् ॥**

प्रैषार्थं प्रेषितः– **होता यक्षदग्निमाज्यस्य जुषतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे जुषाणो अग्निराज्यस्य वेतू३ वौ३षट् ॥**

प्रशास्ता– **त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो असि क्रतो३म् ॥**

**होता यक्षत्सोममाज्यस्य जुषतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे जुषाणः सोम आज्यस्य हविषो वेतू३ वौ३षट् ॥**

वपायागे–

प्रशास्ता– **अग्नीषोमाविमं सु मे शृणुतं वृषणाहवम् । प्रति सूक्तानि हर्यतं भवतं दाशुषे मयो३म् ॥**

**होता यक्षदग्नीषोमौ छागस्य वपाया मेदसो जुषेतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ।**

**युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीता३ न्वौ३षट् ॥** [१ ।९३ ।५]

हुतायां वपायां सब्रह्मकाश्चात्वाले मार्जयन्ते मैत्रावरुणस्तु दण्डं निधाय मार्जयते

**इदमापः प्रवहत यत्किञ्च दुरितं मयि ।**

**यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥** [१ ।२३ ।२२]

**सुमित्र्या न आप ओषधयो भवन्तु दुर्मित्रास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ।**

तीर्थेन निष्क्रम्यासीत आ पुरोडाशश्रपणात्

पुरोळाशयागे–

प्रशास्ता– **अग्नीषोमा यो अद्य वामिदं वचः सपर्यति । तस्मै धत्तं सुवीर्यं गवां पोषं स्वश्व्यो३म् ॥**

**होता यक्षदग्नीषोमौ पुरोळाशस्य जुषेतां हविर्होतर्यज ॥**

होता– **ये३ यजामह आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परिश्येनो अद्रेः ।**

**अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोका३ं वौ३षट् ॥**

पुरोडाशस्विष्टकृदि–

प्रशास्ता– **इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।**
**स्यान्नः सूनुस्तनयो  विजावाग्ने सा ते सुमतिर्भूत्वस्मो३म् ॥**
**होता यक्षदग्निं पुरोळाशस्य जुषतां हविर्होतर्यज ॥**
होता–**ये३ यजामहे स्वदस्व हव्या समिषो दिदीह्यस्मद्र्यक् सं मिमीहि श्रवांसि ।**
**विश्वाँ अग्ने पृत्सु तां जेषि शत्रूनहा विश्वा सुमना दीदिही ना३ वौ३षट् ॥** न निगमः
**वाचस्पतिना** इत्यादि इळामुपहूय भक्षयन्ति

मनोतायै संप्रेषितः प्रशास्ता–
**त्वं ह्यग्ने प्रथमो मनोतास्या धियो अभवो दस्म होता ।**
**त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यो३म्** इति त्रिः
**अधा होता न्यसीदो यजीयानिळस्पद इषयन्नीड्यः सन् ।**
**तं त्वा नरः प्रथमं देवयन्तो महो राये चितयन्तो अनु ग्मो३ं**
**वृतेव यन्तं बहुभिर्वसव्यै३स्त्वे रयिं जागृवांसो अनु ग्मन् ।**
**रुशन्तमग्निं दर्शतं बृहन्तं वपावन्तं विश्वहा दीदिवांसो३ं**
**पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम् ।**
**नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टो३ं**
**त्वां वर्धन्ति क्षितयः पृथिव्यां त्वां राय उभयासो जनानाम् ।**
**त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन् मानुषाणो३ं**
**सपर्येण्यः स प्रियो विक्ष्व१ग्निर्होता मन्द्रो नि षसादा यजीयान् ।**
**तं त्वा वयं दम आ दीदिवांसमुप ज्ञुबाधो नमसा सदमो३ं**
**तं त्वा वयं सुध्यो३ नव्यमग्ने सुम्नायव ईमहे देवयन्तः ।**
**त्वं विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेनो३ं**
**विशां कविं विश्पतिं शश्वतीनां नितोशनं वृषभं चर्षणीनाम् ।**
**प्रेतीषणिमिषयन्तं पावकं राजन्तमग्निं यजतं रयीणो३ं**
**सो अग्न ईजे शशमे च मर्तो यस्त आनट् समिधा हव्यदातिम् ।**
**य आहुतिं परि वेदा नमोभिर्विश्वेत्स वामा दधते त्वोतो३म्**
**अस्मा उ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः ।**
**वेदी सूनो सहसो गीर्भिरुक्थैरा ते भद्रायां सुमतौ यतेमो३म्**
**आ यस्ततन्थ रोदसी वि भासा श्रवोभिश्च श्रवस्य१स्तरुत्रः ।**

बृहद्भिर्वाजैः स्थविरेभिरस्मे रेवद्भिरग्ने वितरं वि भाहो३ं

नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः ।

पूर्वीरिषो बृहतीरारे अघा अस्मे भद्रा सौश्रवसानि सन्तो३ं

पुरूण्यग्ने पुरुधा त्वाया वसूनि भद्रा राजन् वसुता ते अश्याम् ।

पुरूणि हित्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वो३म् ॥ ६ १ १–१३ इति त्रिः परिदध्यात्

हविर्यागे–

प्रशास्ता– अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृतिम् ।

स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवो३म् ॥

होता यक्षदग्नीषोमौ छागस्य हविष आत्तामद्य मध्यतो मेद उद्धृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्यागृभः । घस्तां नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाग्नीषोमौ जुषेतां हविर्होतर्यज ॥

होता– ये३ यजामहेऽग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथाम् । अत्रार्धर्चे विरमेदा वसाहोमात्

सुशर्मणा स्ववसा हि भूतमथा धत्तं यजमानाय शंयो३ वौ३षट् ॥

वनस्पतियागे–

प्रशास्ता– देवेभ्यो वनस्पते हवींषि हिरण्यपर्णप्रदिवस्ते अर्थम् ।

प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभी रजिष्ठो३म् ॥

होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्टया रशनया धित । यत्राग्नेराज्यस्य हविषः प्रियाधामानि यत्र सोमस्याज्यस्य हविषः प्रियाधामानि यत्राग्नीषोमयोश्छागस्य हविषः प्रियाधामानि यत्र वनस्पतेः प्रियापाथांसि यत्र देवानामाज्यपानां प्रियाधामानि यत्राग्नेर्होतुः प्रियाधामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद् रभीयांसमिव कृत्वीकरदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज ॥

होता– ये३ यजामहे वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान् ।

वह देवत्रा दधिषो हवींषि प्र च दातारममृतेषु वोचा३ वौ३षट् ॥

स्विष्टकृदि–

प्रशास्ता– प्रिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँर्ऋतुपते यजेह ।

ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्या यजिष्ठो३म् ॥

**होता यक्षदग्निं स्विष्टकृतमयाळग्निरग्नेराज्यस्य हविषः प्रियाधामान्ययाट् सोमस्याज्यस्य हविषः प्रियाधामान्ययाळग्नीषोमयोश्छागस्य हविषः प्रियाधामान्ययाड् वनस्पतेः प्रियापाथांस्ययाड् देवानामाज्यपानां प्रियाधामानि यक्षदग्नेर्होतुः प्रियाधामानि यक्षत्स्वं महिमानामायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविर्होतर्यज ॥**

होता– **ये३ यजामहेऽग्ने यदद्यविशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा ।**

**ऋता यजासि महिना वियद्भूर्हव्या वह यविष्ठ या ते अद्या३ वौ३षट् ॥** [६ ।१५ ।१४]

इडामुपहूय भक्षयन्ति तत अनुयाजाः–

प्रशास्ता– **देवं बर्हिः सुदेवं देवैः स्यात् सुवीरं वीरैर्वस्तोर्वृज्येताक्तोः प्रभ्रियेतात्यन्यान् राया बर्हिष्मतो मदेम वसुवने वसुधेयस्य वेतु यज ॥**

होता– **देवं बर्हिर्वसुवने वसुधेयस्य वेतू३ वौ३षट् ॥**

प्रशास्ता–**देवीर्द्वारः सङ्घाते विड्वीर्यामञ्छिथिरा ध्रुवा देवहूतौ वत्स ईमेनास्तरुण आमिमीयात् कुमारो वा नव जातो मैना अवरिणुककाटः पृणग्वसुवने वसुधेयस्य व्यन्तु यज ॥**

होता– **देवीर्द्वारो वसुवने वसुधेयस्य व्यन्तू३ वौ३षट् ॥**

प्रशास्ता– **देवी उषासानक्ताद्यास्मिन् यज्ञे प्रयत्यह्वेतामपि नूनं दैवीर्विशः प्रायासिष्टां सुप्रीते सुधिते वसुवने वसुधेयस्य वीतां यज ॥**

होता– **देवी उषासानक्ता वसुवने वसुधेयस्य वीता३ं वौ३षट् ॥**

प्रशास्ता– **देवी जोष्ट्री वसुधिती ययोरन्याघाद्वेषांसि युयवदान्यावक्षद्वसुवार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज ॥**

होता– **देवी जोष्ट्री वसुवने वसुधेयस्य वीता३ं वौ३षट् ॥**

प्रशास्ता– **देवी ऊर्जाहुती इषमूर्जमन्यावक्षत् सग्धिं सपीतिमन्यानवेनपूर्वं दयमानास्यामपुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज ॥**

होता– **देवी ऊर्जाहुती वसुवने वसुधेयस्य वीता३ं वौ३षट् ॥**

प्रशास्ता– **देवा दैव्याहोतारा पोतारा नेष्टारा हताघशंसावाभरद्वसू वसुवने वसुधेयस्य वीतां यज ॥**

होता– **देवा दैव्या होतारा वसुवने वसुधेयस्य वीता३ं वौ३षट् ॥**

प्रशास्ता– **देवीस्तिस्रस्तिस्रो देवीरिळा सरस्वती भारती द्यां भारत्यादित्यैरस्पृक्षत् सरस्वतीमं रुद्रैर्यज्ञमावीदिहैवेळया वसुमत्या सधमादं मदेम वसुवने वसुधेयस्य व्यन्तु यज ॥**

होता– **देवीस्तिस्रस्तिसो देवीर्वसुवने वसुधेयस्य व्यन्तू३ वौ३षट् ॥**

प्रशास्ता– **देवो नराशंसस्त्रिशीर्षा षळक्षः शतमिदेनं शितिपृष्ठा आदधति सहस्रमीं प्रवहन्ति मित्रावरुणे दस्युहोत्रमर्हतो बृहस्पतिस्तोत्रमश्विनाध्वर्यवं वसुवने वसुधेयस्य वेतु यज ॥**

होता– **देवो नराशंसो वसुवने वसुधेयस्य वेतू३ वौ३षट् ॥**

प्रशास्ता– **देवो वनस्पतिर्वर्षप्रावा घृतनिर्णिक् द्यामग्रेणास्पृक्षदान्तरिक्षं मध्येनाप्राः पृथिवीमपरेणादृंहीद्वसुवने वसुधेयस्य वेतु यज ॥**

होता– **देवो वनस्पतिर्वसुवने वसुधेयस्य वेतू३ वौ३षट् ॥**

प्रशास्ता– **देवं बर्हिर्वारितीनां निधेधासि प्रच्युतीनामप्रच्युतं निकामधरणं पुरुस्पार्हं यशस्विदेनां बर्हिषान्याबर्हींष्यभिष्याम वसुवने वसुधेयस्य वेतु यज ॥**

होता– **देवं बर्हिर्वारितीनां वसुवने वसुधेयस्य वेतू३ वौ३षट् ॥**

प्रशास्ता– **देवो अग्निः स्विष्टकृत् सुद्रविणा मन्द्रः कविः सत्यमन्मा यजी होता होतुर्होतुरायजीयानग्ने यान् देवानयाड्याँ अपि प्रेर्येते होत्रे अमत्सत तां ससनुषीं होत्रां देवङ्गमां दिवि देवेषु यज्ञमेरमेयं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीहि यज ॥** इत्यनवानं प्रेष्यति

होता– **देवो अग्निः स्विष्टकृत् सुद्रविणा मन्द्रः कविः सत्यमन्मायजी होता होतुर्होतुरायजीयानग्ने यान् देवानयाड्याँ अपि प्रेर्येते होत्रे अमत्सत तां ससनुषीं होत्रां देवङ्गमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीही३ वौ३षट् ॥** अनवानं यजति प्रकृत्या वा

सूक्तवाकाय संप्रेषितः प्रशास्ता– **अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोळाशं गृह्णन्नग्नय आज्यं गृह्णन् त्सोमायाज्यं बध्नन्नग्नीषोमाभ्यां छागं सूपस्था अद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनाग्नीषोमाभ्यां छागेनाघस्तांतं मेदस्तः प्रतिपचताग्रभीष्टामवीवृधेतां पुरोळाशेन त्वामद्यर्ष आर्षेय ऋषीणांनपादवृणीतायं यजमानो बहुभ्य आसङ्गतेभ्यः । एष मे देवेषु वार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रू३हि ॥**

होता– **इदं द्यावापृथिवी** इत्यदि **अग्निरिदं..., सोम इदं..., अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम् । वनस्पतिरिदं..., देवा आज्यपा** इत्यादि । **अस्यामृधेद्धोत्रायां देवङ्गमायामाशास्तेऽयं यजमानोऽस्य यज्ञस्यागुर उदृचमशीयेत्याशास्ते यदनेन हविषाशास्ते** इत्यादि । शंयुवाकः । वेदग्रहणकाले **उदयुषा** इति उपोत्थानमग्रे कृत्वा निष्क्रम्य वेदं गृह्णीयात । प्रकृतिवत् पत्नीसंयाजाः । नेदमादिषु हृदयशूलमर्वागुदयनीयायाः । आज्येडान्ताग्नीषोमीयः सन्तिष्ठते । संस्थिते वसतीवरीः परिहरन्ति । दीक्षिता अभि परिहारयेरन् ।

**प्रायश्चित्तपशुपक्षे–**

त्रिपुरुषसोमपीथविच्छेदनसन्धानार्थमैन्द्राग्नं पशुं दौर्ब्राह्मण्यनिर्हरणार्थमाश्विनं पशुमग्नीषोमीयेन सह समानतन्त्रेण प्रयोगः । **नमः प्रवक्त्रे** इत्यादि सप्तदशसामिधेन्यः ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । अग्नीषोमावा३वह । इन्द्राग्नी आ३वह । अश्विनावा३वह । वनस्पतिमा३वह । देवाँ आज्यपाँ आ३वह** इत्यादि । सम्मार्गैः सम्मृज्येत्यादि समानमाध्रिगुप्रैषान्तम् । अध्रिगौ विशेषः । होता– **दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्यादुर आशासाना मेधपतिभ्यो मेधान् । प्रैभ्यो अग्निं भरत स्तृणीत बर्हिरन्वेनान् माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । उदीचीनाँ एषां पदो निधत्तात् सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीराणि । एकधैकधैषां त्वच आच्छयतात् पुरा नाभ्या अपिशसो वपा उत्खिदतादन्तरेवोष्माणं वारयध्वात् । श्येनमेषां वक्षांसि कृणुतात् प्रशसो बाहूञ्छला दोषाणी कश्यपे वांसानच्छिद्राः श्रोणीः कवषोरूनस्रे कपर्णाष्ठीवतः षड्विंशतिः षड्विंशतिरेषां वंक्रयस्ता अनुष्ठ्यो च्यावयताद्गात्रं गात्रमेषामनूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् ।** (उपांशु) **अस्ना रक्षः संसृजतात् । वनिष्ठूनेषां माराविष्टोरूकम्मन्यमाना नेद्वस्तोके तनये रवितारवत्** (उपांशु) **शमितारः । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ** (उपांशु) **अपाप ।** इत्याद्यूहः । एकधा षड्विंशतिरिति द्विर्द्विबहूनाम् । पुरान्तरिति चैके । स्तोकानुवचनाद्याज्यभागाभ्यामिष्ट्वा वपायागेऽग्नीषोमीयेन प्रचर्य ऐन्द्राग्नाश्विनाभ्यां प्रचरन्ति–

ऐन्द्राग्नस्य पशोर्वपाया याज्यानुवाक्या–

प्रशास्ता– **आ वृत्रहणा वृत्रहभिः शुष्मैरिन्द्र यातं नमोभिरग्ने अर्वाक् ।**

**युवं राधोभिरकवेभिरिन्द्राग्ने अस्मे भवतमुत्तमेभो३म् ॥** [६ ।६० ।३]

**होता यक्षदिन्द्राग्नी छागस्य वपाया मेदसो जुषेतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् ।**

**उभा हि वां सुहवा जोहवीमि ता वाजं सद्य उशते धेष्ठा३ वौ३षट् ॥** [७ ।९३ ।१]

आश्विनस्य पशोर्वपाया याज्यानुवाक्या–

प्रशास्ता– **आ पश्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात् ।**

**आ विश्वतः पाञ्चजन्येन राया यूयं पात स्वस्तिभिः सदा नो३म् ॥** [७ ।७२ ।५]

**होता यक्षदश्विनौ छागस्य वपाया मेदसो जुषेतां हविर्होतर्यज ॥**

होता– **ये३ यजामह उदु स्तोमासो अश्विनोरबुध्रञ्जामि ब्रह्माण्युषसश्च देवीः ।**

**आविवासन् रोदसी धिष्ण्येमे अच्छा विप्रो नासत्या विवक्ती वौ३षट् ॥** [७ ।७२ ।३] मार्जनम् ।

**पुरोडाशयागे–** अग्नीषोमीयेन पशुपुरोडाशेन प्रचर्य, ऐन्द्राग्नस्य पशुपुरोडाशस्य याज्यानुवाक्या–

प्रशास्ता– **आ भरतं शिक्षतं वज्रबाहू अस्माँ इन्द्राग्नी अवतं शचीभिः ।**

**इमे नु ते रश्मयः सूर्यस्य येभिः सपित्वं पितरो न आसो३म् ॥** [१ ।१०९ ।८]

**होता यक्षदिन्द्राग्नी पुरोळाशस्य जुषेतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम् ।**

**इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णै३ वौषट् ॥** [७ ।९३ ।४]

आश्विनस्य पशुपुरोडाशस्य याज्यानुवाक्या–

प्रशास्ता– **आ गोमता नासत्या रथेनाश्वावता पुरुश्चन्द्रेण यातम् ।**

**अभि वां विश्वा नियुतः सचन्ते स्पार्हया श्रिया तन्वा शुभानो३म् ३ ॥** [७ ।७२ ।१]

**होता यक्षदश्विनौ पुरोळाशस्य जुषेतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे वि चेदुच्छन्त्यश्विना उषासः स वां ब्रह्माणि कारवो भरन्ते ।**

**ऊर्ध्वं भानुं सविता देवो अश्रेद् बृहदग्नयः समिधा जरन्ता३ इ वौ३षट् ॥** [७ ।७२ ।४]

स्विष्टकृदादीळामुपह्वयति । प्रतिपशुं मनोतामन्त्रमावर्तयेत् । न मनोतावर्तेत्येके । अग्नीषोमीयेन हविषा प्रचर्य

ऐन्द्राग्नस्य पशोर्हविषो याज्यानुवाक्या–

प्रशास्ता– **उभाविन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै ।**

**उभा दाताराविषां रयीणामुभावाजस्य सातये हुवे वो३म् ३ ॥** [६ ।६० ।१३]

**होता यक्षदिन्द्राग्नी छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्यागृभः । घस्तां नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवेन्द्राग्नी जुषेतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे प्र चर्षणिभ्यः पृतना हवेषु प्र पृथिव्या रिरिचाथे दिवश्च ।** अत्रार्धर्चे विरमेदा वसाहोमात् ।

**प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या वौ३षट् ॥** [१ ।१०९ ।६]

आश्विनस्य पशोर्हविषो याज्यानुवाक्या–

प्रशास्ता– **आ नो देवेभिरुप यातमर्वाक् सजोषसा नासत्या रथेन ।**

**युवोर्हि नः सख्या पित्र्याणि समानो बन्धुरुत तस्य वित्तो३म् ३ ॥** [७ ।७२ ।२]

**होता यक्षदश्विनौ छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्यागृभः । घस्तां नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाश्विनौ जुषेतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे हिरण्यत्वङ् मधुवर्णो घृतस्नुः पृक्षो वहन्ना रथो वर्तते वाम् ।** अत्रार्धर्चे विरमेदा वसाहोमात् ।

**मनोजवा अश्विना वातरंहा येनातियाथो दुरितानि विश्वा वौ३षट् ॥** [५ ।७७ ।३]

वनस्पतियागप्रैषः –

प्रशास्ता– **होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्टया रशनया धित । यत्राग्नेराज्यस्य हविषः प्रियाधामानि यत्र सोमस्याज्यस्य हविषः प्रियाधामानि यत्राग्नीषोमयोश्छागस्य हविषः प्रियाधामानि यत्रेन्द्राग्न्योश्छागस्य हविषः प्रियाधामानि यत्राश्विनोश्छागस्य हविषः प्रियाधामानि यत्र वनस्पतेः प्रियापाथांसि यत्र देवानामाज्यपानां प्रियाधामानि यत्राग्नेर्होतुः प्रियाधामानि तत्रैतान् प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद् रभीयस इव कृत्वीकरदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज ॥**

स्विष्टकृद्यागप्रैषः–

प्रशास्ता– **होता यक्षदग्निं स्विष्टकृतमयाळग्निरग्नेराज्यस्य हविषः प्रियाधामान्ययाट् सोमस्याज्यस्य हविषः प्रियाधामान्ययाळग्नीषोमयोश्छागस्य हविषः प्रियाधामान्ययाळिन्द्राग्न्योश्छागस्य हविषः प्रियाधामान्ययाळश्विनोश्छागस्य हविषः प्रियाधामान्ययाड् वनस्पतेः प्रियापाथांस्ययाड् देवानामाज्यपानां प्रियाधामानि यक्षदग्नेर्होतुः प्रियाधामानि यक्षत्स्वं महिमानामायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविर्होतर्यज ॥** समानं वनस्पतिस्विष्टकृदोर्याज्यानुवाक्याः । अनुयाजैरिष्ट्वा सूक्तवकप्रैषे–

**अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोळाशान् गृह्णन्नग्नय आज्यं गृह्णन् त्सोमायाज्यं बध्नन्नग्नीषोमाभ्यामिन्द्राग्निभ्यामश्विभ्यां छागान् त्सूपस्था अद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनाग्नीषोमाभ्यामिन्द्राग्निभ्यामश्विभ्यां छागैरघंस्तान् मेदस्तः प्रतिपचताग्रभीषुरवीवृधन्त पुरोळाशैस्त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्य आसङ्गतेभ्यः । एष मे देवेषु वार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रू३हि ॥**

होता– **इदं द्यावापृथिवी** इत्यदि **अग्निरिदं..., सोम इदं..., अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम् । इन्द्राग्नी इदं..., अश्विनाविदं..., वनस्पतिरिदं..., देवा आज्यपा** इत्यादि । समानमान्तम् ।

**अग्नीषोमीयैन्द्राग्नद्विपशौ विशेषः–**

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । अग्नीषोमावा३वह । इन्द्राग्नी आ३वह । वनस्पतिमा३वह । देवाँ आज्यपाँ आ३वह** इत्यादि ।

अध्रिगौ होता– **दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मधौ । प्राभ्यामग्निं भरत स्तृणीत बर्हिरन्वेनौ माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । उदीचीनाँ अनयोः पदो निधत्तात् सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरे । एकधैकधानयोस्त्वचवाच्छयतात् पुरा नाभ्या अपिशसो वपे उत्खिदतादन्तरेवोष्माणं वारयध्वात् । श्येनमनयोर्वक्षसी कृणुतात् प्रशसो बाहूञ्छला दोषाणी कश्यपेवांसानच्छिद्राः श्रोणीः कवषोरून्स्रे कपर्णाष्ठीवतः षड्विंशतिः षड्विंशतिरनयोर्वंक्रयस्ता अनुष्ठ्यो च्यावयताद्गात्रं गात्रमनयोरनूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् ।** (उपांशु)

**अस्ना रक्षः संसृजतात् । वनिष्ठू अनयोर्माराविष्टोरूकम्मन्यमाना नेद्वस्तोके तनये रवितारवत्** (उपांशु) **शमितारः । अधिगो शमीध्वं सुशमि शमीध्वं शमीध्वमधिगा३ उ** (उपांशु) **अपाप ।** इत्याद्यूहः । एकधा षड्विंशतिरिति द्विर्द्विबहूनाम् । पुरान्तरिति चैके ।

वनस्पतियागप्रैषे प्रशास्ता– **होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्टया रशनया धित । यत्राग्नेराज्यस्य हविषः प्रियाधामानि यत्र सोमस्याज्यस्य हविषः प्रियाधामानि यत्राग्नीषोमयोश्छागस्य हविषः प्रियाधामानि यत्रेन्द्राग्न्योश्छागस्य हविषः प्रियाधामानि यत्र वनस्पतेः प्रियापाथांसि यत्र देवानामाज्यपानां प्रियाधामानि यत्राग्नेर्होतुः प्रियाधामानि तत्रैतौ प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद् रभीयांसाविव कृत्वीकरदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज ॥**

स्विष्टकृद्यागप्रैषः–

प्रशास्ता– **होता यक्षदग्निं स्विष्टकृतमयाळग्निरग्नेराज्यस्य हविषः प्रियाधामान्ययाट् सोमस्याज्यस्य हविषः प्रियाधामान्ययाळग्नीषोमयोश्छागस्य हविषः प्रियाधामान्ययाळिन्द्राग्न्योश्छागस्य हविषः प्रियाधामान्ययाड् वनस्पतेः प्रियापाथांस्ययाड् देवानामाज्यपानां प्रियाधामानि यक्षदग्नेर्होतुः प्रियाधामानि यक्षत्स्वं महिमानामायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविर्होतर्यज ॥**

सूक्तवकप्रैषे– **अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोळाशौ गृह्णन्नग्नय आज्यं गृह्णन् त्सोमायाज्यं बध्नन्नग्नीषोमाभ्यामिन्द्राग्निभ्यां छागौ सूपस्था अद्य देवो  वनस्पतिरभवदग्नय आज्येन सोमायाज्येनाग्नीषोमाभ्यामिन्द्राग्निभ्यां छागाभ्यामघंस्तौ मेदस्तः  प्रतिपचताग्रभीषुरवीवृधन्त पुरोळाशाभ्यां त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्य आसङ्गतेभ्यः । एष मे देवेषु वार्यायक्ष्यत इति  ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा  च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रू३हि ॥** समानमन्यत् सर्वम् ।

## अथ प्रातरनुवाकः

अथैतस्या रात्रेर्विवासकाले (अन्त्ये चतुर्थभागे) प्राग्वयसां प्रवादात् प्रातरनुवाकायामन्त्रितो वाग्यत आचम्य तीर्थेन प्रपद्याग्नीध्रीये दक्षिणं जान्वाच्याहुतिं जुहुयात्– **आसन्यान्मा मन्त्रात् पाहि कस्याश्चिदभिशस्त्यै स्वाहा** इति । आहवनीय एवमेव– **वागग्रे गा अग्र एतु सरस्वत्यै वाचे स्वाहा** इति प्रथमाम् ।

**वाचं देवीं मनोनेत्रां विराजमुग्रां जैत्रीमुत्तमामेह भक्षाम् ।**

**तामादित्या नावमिवारुहेमानुमतां पथिभिः पारयन्तीं स्वाहा** इति द्वितीयामाहुतिं जुहुयात् ।

हविर्धाने प्राप्य पूर्वस्यां द्वारि रराटीमभिमृशेत्– **उर्वन्तरिक्षं विहि** इति । दक्षिणेन पाणिना द्वार्ये स्थूणे पर्यायेणाभिमृशेत् सकृन्मन्त्रेण– **देवी द्वारौ मा मा सन्ताप्तं लोकं मे लोककृतौ कृणुतम्** इति । हविर्धानयोर्मध्यदेशं

प्रपद्यान्तरेण युगधुरौ निरसनोपवेशने कृत्वोपविश्य **प्रातर्यावभ्यो देवेभ्योऽनुब्रूहि** इति प्रेषितो प्रातरनुवाकमनुब्रूयात् मन्द्रेण स्वरेणारोहणक्रमेणा ईडे द्यावापृथिवीयात् ।

**हिम्, भूर्भुवःस्वरो३म्,**

**आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृतामृतं च ।**

**रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयोधो३म्** [१० ।३० ।१२] इति त्रिः

**आग्नेयः क्रतुः**

गायत्रम्

**उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वतो३ं**

**यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु । अरक्षद् दाशुषे गयो३म्**

**उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनञ्जयो रणेरणो३ं**

**यस्य दूतो असि क्षये वेषि हव्यानि वीतये । दस्मत् कृणोष्यध्वरो३ं**

**तमित् सुहव्यमङ्गिरः सुदेवं सहसो यहो । जना आहुः सुबर्हिषो३म्**

**आ च वहासि ताँ इह देवाँ उप प्रशस्तये । हव्या सुश्चन्द्र वीतयो३ं**

**न योरुपब्दिरश्व्यः शृण्वे रथस्य कच्चन । यदग्ने यासि दूत्यो३ं**

**त्वोतो वाज्यह्रयोऽभि पूर्वस्मादपरः । प्र दाश्वाँ अग्ने अस्थो३म्**

**उत द्युमत् सुवीर्यं बृहदग्ने विवाससि । देवेभ्यो देव दाशुषो३ं** [१ ।७४ ।१–९] [९]

**जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् । हव्या जुह्वान आसनो३म्**

**अथा ते अङ्गिरस्तमाग्ने वेधस्तम प्रियम् । वोचेम ब्रह्म सानसो३ं**

**कस्ते जामिर्जनानामग्ने को दाश्वध्वरः । को ह कस्मिन्नसि श्रितो३ं**

**त्वं जामिर्जनानामग्ने मित्रो असि प्रियः । सखा सखिभ्य ईड्यो३ं**

**यजा नो मित्रावरुणा यजा देवाँ ऋतं बृहत् । अग्ने यक्षि स्वं दमो३म्** [१ ।७५ ।१–५] [१४]

**अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि । विश्वासु धीषु वन्द्यो३म्**

**आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् । विश्वासु पृत्सु दुष्टरो३म्**

**आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसो३ं**

**प्र पूतास्तिग्मशोचिषे वाचो गोतमाग्नये । भरस्व सुम्नयुर्गिरो३ं**

**यो नो अग्नेऽभिदासत्यन्ति दूरे पदीष्ट सः । अस्माकमिद् वृधे भवो३ं**

**सहस्राक्षो विचर्षणिरग्नी रक्षांसि सेधति । होता गृणीत उक्थ्यो३म्** [१ ।७९ ।७–१२] [२०]

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमो३म्**

**अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत । स देवाँ एह वक्षतो३म्**

अग्निना रयिमश्नवत् पोषमेव दिवेदिवे । यशसं वीरवत्तमो३म्
अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद्देवेषु गच्छतो३म्
अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः । देवो देवेभिरागमो३ं
यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि । तवेत् तत् सत्यमङ्गिरो३म्
उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसो३ं
राजन्तामध्वराणां गोपामृतस्य दीदिविम् । वर्धमानं स्वे दमो३ं
स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तयो३म् [१ ।१ ।१–९] [२९]
अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतो३म्
अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियो३म्
अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यो३ं
ताँ उशतो वि बोधय यदग्ने यासि दूत्यम् । देवैरा सत्सि बर्हिषो३ं
घृताहवन दीदिवः प्रति ष्म रिषतो दह । अग्ने त्वं रक्षस्विनो३म्
अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यो३ं
कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे । देवममीवचातनो३ं
यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति । तस्य स्म प्राविता भवो३ं
यो अग्निं देववीतये हविष्माँ आविवासति । तस्मै पावक मृळयो३ं
स नः पावक दीदिवोऽग्ने देवाँ इहा वह । उप यज्ञं हविश्च नो३ं
स नः स्तवान आ भर गायत्रेण नवीयसा । रयिं वीरवतीमिषो३म्
अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः । इमं स्तोमं जुषस्व नो३ं [१ ।१२ ।१–१२] [४१]
वसिष्वा हि मियेध्य वस्त्राण्यूर्जां पते । सेमं नो अध्वरं यजो३ं
नि नो होता वरेण्यः सदा यविष्ठ मन्मभिः । अग्ने दिवित्मता वचो३म्
आ हि ष्मा सूनवे पितापिर्यजत्यापये । सखा सख्ये वरेण्यो३म्
आ नो बर्ही रिशादसो वरुणो मित्रो अर्यमा । सीदन्तु मनुषो यथो३ं
पूर्व्य होतरस्य नो मन्दस्व सख्यस्य च । इमा उ षु श्रुधी गिरो३ं
यच्चिद्धि शश्वता तना देवंदेवं यजामहे । त्वे इद्धूयते हवो३ं
प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः । प्रियाः स्वग्नयो वयो३ं
स्वग्नयो हि वार्यं देवासो दधिरे च नः ।स्वग्नयो मनामहो३म्
अथा न उभयेषाममृत मर्त्यानाम् । मिथः सन्तु प्रशस्तयो३ं
विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः । चनो धाः सहसो यहो३म् [१ ।२६ ।१–१०] [५१]

अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः । सम्राजन्तमध्वराणो३ं
स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः । मीढ्वाँ अस्माकं बभूयो३ं
स नो दूराच्चासाच्च नि मर्त्यादघायोः । पाहि सदमिद् विश्वायो३म्
इममू षु त्वमस्माकं सनिं गायत्रेण नव्यांसम् । अग्ने देवेषु प्र वोचो३म्
आ नो भज परमेष्वा वाजेषु मध्यमेषु । शिक्षा वस्वो अन्तमस्यो३ं
विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ । सद्यो दाशुषे क्षरसो३ं
यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता शश्वतीरिषो३ं
नकिरस्य सहन्त्य पर्येता कयस्य चित् । वाजो अस्ति श्रवाय्यो३ं
स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता । विप्रेभिरस्तु सनितो३ं
जराबोध तद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय दृशीको३ं
स नो महाँ असि अनिमानो धूमकेतुः पुरुश्चन्द्रः । धिये वाजाय हिन्वतो३ं
स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः । उक्थैरग्निर्बृहद्भानो३ं [१ ।२७ ।१–१२] [६३]

आनुष्टुभम्

त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत । यजा स्वध्वरं जनं मनुजातं घृतप्रुषो३ं
श्रुष्टीवानो हि दाशुषे देवा अग्ने विचेतसः । तान् रोहिदश्व गिर्वणस्त्रयस्त्रिंशतमा वहो३ं
प्रियमेधवदत्रिवज् जातवेदो विरूपवत् । अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवो३ं
महिकेरव ऊतये प्रियमेधा अहूषत । राजन्तमध्वराणामग्निं शुक्रेण शोचिषो३ं
घृताहवन सन्त्येमा उ षु श्रुधी गिरः । याभिः कण्वस्य सूनवो हवन्तेऽवसे त्वो३ं
त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोह्ळवो३ं
नि त्वा होतारमृत्विजं दधिरे वसुवित्तमम् । श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषो३म्
आ त्वा विप्रा अचुच्यवुः सुतसोमा अभि प्रयः । बृहद् भा बिभ्रतो हविरग्ने मर्ताय दाशुषो३ं
प्रातर्याव्णः सहस्कृत सोमपेयाय सन्त्य । इहाद्य दैव्यं जनं बर्हिरा सादया वसो३म् [१ ।४५ ।१–९] [७२]

त्रैष्टुभम्

अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छो३म्
अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।
समिद्धस्य रुशददर्शि पाजो महान् देवस्तमसो निरमोचो३ं
यदीं गणस्य रशनामजीगः शुचिरङ्क्ते शुचिभिर्गोभिरग्निः ।
आद् दक्षिणा युज्यते वाजयन्त्युत्तानामूर्ध्वो अधयज्जुहूभो३म्

अग्निमच्छा देवयतां मनांसि चक्षूंषीव सूर्ये सं चरन्ति ।
यदीं सुवाते उषसा विरूपे श्वेतो वाजी जायते अग्रे अह्नोइं
जनिष्ट हि जेन्यो अग्रे अह्नां हितो हितेष्वरुषो वनेषु ।
दमेदमे सप्त रत्ना दधानोऽग्निर्होता नि षसादा यजीयो३म्
अग्निर्होता न्यसीदद् यजीयानुपस्थे मातुः सुरभा उ लोके ।
युवा कविः पुरुनिःष्ठ ऋतावा धर्ता कृष्टीनामुत मध्य इद्धोइं
प्र णु त्यं विप्रमध्वरेषु साधुमग्निं होतारमीळते नमोभिः ।
आ यस्ततान रोदसी ऋतेन नित्यं मृजन्ति वाजिनं घतेनोइं
मार्जाल्यो मृज्यते स्वे दमूनाः कविप्रशस्तो अतिथिः शिवो नः ।
सहस्रशृङ्गो वृषभस्तदोजा विश्वाँ अग्ने सहसा प्रास्यन्योइं
प्र सद्यो अग्ने अत्येष्यन्यानाविर्यस्मै चारुतमो बभूथ ।
ईळेन्यो वपुष्यो विभावा प्रियो विशामतिथिर्मानुषीणोइं
तुभ्यं भरन्ति क्षितयो यविष्ठ बलिमग्ने अन्तित ओत दूरात् ।
आ भन्दिष्ठस्य सुमतिं चिकिद्धि बृहत् ते अग्ने महि शर्म भद्रो३म्
आद्य रथं भानुमो भानुमन्तमग्ने तिष्ठ यजतेभिः समन्तम् ।
विद्वान् पथीनामुर्व१न्तरिक्षमेह देवान् हविरद्याय वक्षो३म्
अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे ।
गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुरुव्यञ्चमश्रो३म् [५ ।१ ।१–१२] [८४]
अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे ।
चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चोइं
स मह्ना विश्वा दुरितानि सह्वानग्निः ष्टवे दम आ जातवेदाः ।
स नो रक्षिषद् दुरितादवद्यादस्मान् गृणत उत नो मघोनोइं
त्वं वरुण उत मित्रो अग्ने त्वां वर्धन्ति मतिभिर्वसिष्ठाः ।
त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्तिभिः सदा नो३म् [७ ।१२ ।१–३] [८७]
बार्हतम्
एना वो अग्निं नमसोर्जो नपातमा हुवे । प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतोइं
स योजते अरुषा विश्वभोजसा स दुद्रवत् स्वाहुतः ।
सुब्रह्मा यज्ञः सुशमी वसूनां देवं राधो जनानो३म्
उदस्य शोचिरस्थादाजुह्वानस्य मीह्ळुषः । उद् धूमासो अरुषासो दिविस्पृशः समग्निमिन्धते नरोइं

तं त्वा दूतं कृण्महे यशस्तमं देवाँ आ वीतये वह ।
विश्वा सूनो सहसो मर्तभोजना रास्व तद् यत् त्वेमहोइ॑
त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे । त्वं पोता विश्ववार प्रचेता यक्षि वेषि च वार्योइ॑
कृधि रत्नं यजमानाय सुक्रतो त्वं हि रत्नधा असि ।
आ न ऋते शिशीहि विश्वमृत्विजं सुशंसो यश्च दक्षतोइ॑
त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः । यन्तारो ये मघवानो जनानामूर्वान् दयन्त गोनोइ॑
येषामिळा घृतहस्ता दुरोण आँ अपि प्राता निषीदति ।
ताँस्त्रायस्व सहस्य द्रुहो निदो यच्छा नः शर्म दीर्घश्रोइ॑
स मन्द्रया च जिह्वया वह्निरासा विदुष्टरः । अग्ने रयिं मघवद्भ्यो न आ वह हव्यदातिं च सूदयोइ॑
ये राधांसि ददत्यश्व्या मघा कामेन श्रवसो महः ।
ताँ अंहसः पिपृहि पर्तृभिष्ट्वं शतं पूर्भिर्यविष्ठ्योइ॑
देवो वो द्रविणोदाः पूर्णां विवष्ट्यासिचम् । उद् वा सिञ्चध्वमुप वा पृणध्वमादिद् वो देव ओहतोइ॑
तं होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृण्वत ।
दधाति रत्नं विधते सुवीर्यमग्निर्जनाय दाशुषोइम् [७ ।१६ ।१–१२] [९९]

औष्णिहम्

अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवोइ॑
स इधानो वसुष्कविरग्निरीळेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहोइ॑
क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः । स तिग्मजम्भ रक्षसो दह प्रतोइ॑ [१ ।७९ ।४–६] [१०२]

जागतम्

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद् वि भाति भरतेभ्यः शुचोइ॑
यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समीधिरे ।
इन्द्रेण देवैः सरथं स बर्हिषि सीदन्नि होता यजथाय सुक्रतोइम्
असंमृष्टो जायसे मात्रोः शुचिर्मन्द्रः कविरुदतिष्ठो विवस्वतः ।
घृतेन त्वावर्धन्नग्न आहुत धूमस्ते केतुरभवद् दिवि श्रितोइम्
अग्निर्नो यज्ञमुप वेतु साधुयाग्निं नरो वि भरन्ते गृहेगृहे ।
अग्निर्दूतो अभवद्धव्यवाहनोऽग्निं वृणाना वृणते कविक्रतोइ॑
तुभ्येदमग्ने मधुमत्तमं वचस्तुभ्यं मनीषा इयमस्तु शं हृदे ।
त्वां गिरः सिन्धुमिवावनीर्महीरा पृणन्ति शवसा वर्धयन्ति चोइ॑

त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने ।
स जायसे मथ्यमानः सहो महत् त्वामाहुः सहसस्पुत्रमङ्गिरो३म् [५ ।११ ।१-६] [१०८]

पाङ्क्तम्

अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आ भरो३ं
सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः ।
समर्वन्तो रघुद्रुवः सं सुजातासः सूरय इषं स्तोतृभ्य आ भरो३म्
अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।
अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य आ भरो३म्
आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद् दीदयति द्यवीषं स्तोतृभ्य आ भरो३म्
आ ते अग्न ऋचा हविः शुक्रस्य शोचिषस्पते ।
सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यं हूयत इषं स्तोतृभ्य आ भरो३ं
प्रो त्ये अग्नयोऽग्निषु विश्वं पुष्यन्ति वार्यम् ।
ते हिन्विरे त इन्विरे त इषण्यन्त्यानुषगिषं स्तोतृभ्य आ भरो३ं
तव त्ये अग्ने अर्चयो महि व्राधन्त वाजिनः ।
ये पत्वभिः शफानां व्रजा भुरन्त गोनामिषं स्तोतृभ्य आ भरो३ं
नवा नो अग्न आ भर स्तोतृभ्यः सुक्षितीरिषः ।
ती स्याम य आनृचुस्त्वादूतासो दमेदम इषं स्तोतृभ्य आ भरो३म्
उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि ।
उतो न उत् पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भरो३म्
एवाँ अग्निमजुर्यमुर्गीर्भिर्यज्ञेभिरानुषक् ।
दधदस्मे सुवीर्यमुत त्यदाश्वश्व्यमिषं स्तोतृभ्य आ भरो३ं [५ ।६ ।१-१०] [११८]

## उषस्यः क्रतुः

गायत्रम्

प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः । दिवो अदर्शि दुहितो३म्
अश्वेव चित्रारुषी माता गवामृतावरी । सखाभूदश्विनोरुषो३म्
उत सखास्यश्विनोरुत माता गवामसि । उतोषो वस्व ईशिषो३ं
यावयद्द्वेषसं त्वा चिकित्वित् सूनृतावरि । प्रति स्तोमैरभुत्स्महो३ं

प्रति भद्रा अदृक्षत गवां सर्गा न रश्मयः । ओषा अप्रा उरु ज्रयो३म्

आपप्रुषी विभावरि व्यावर्ज्योतिषा तमः । उषो अनु स्वधामहो३म्

आ द्यां तनोषि रश्मिभिरान्तरिक्षमुरु प्रियम् । उषः शुक्रेण शोचिषो३म् [४ ।५२ ।१–७] [१२५]

आनुष्टुभम्

उषो भद्रेभिरा गहि दिवश्चिद् रोचनादधि । वहन्त्वरुणप्सव उप त्वा सोमिनो गृहो३ं

सुपेशसं सुखं रथं यमध्यस्था उषस्त्वम् । तेना सुश्रवसं जनं प्रावाद्य दुहितर्दिवो३ं

वयश्चित् ते पतत्रिणो द्विपच्चतुष्पदर्जुनि । उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परो३ं

व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनम् । तां त्वामुषर्वसूयवो गीर्भिः कण्वा अहूषतो३म्[१ ।४९ ।१–४][१२९]

त्रैष्टुभम्

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।

यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारो३ं

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।

समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनानो३ं

समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशिष्टे ।

न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपो३ं

भास्वती नेत्री सूनृतानामचेति चित्रा वि दुरो न आवः ।

प्रार्प्या जगद्व्यु नो रायो अख्यदुषा अजीगर्भुवनानि विश्वो३ं

जिह्मश्ये३ चरितवे मघोन्याभोगय इष्टये राय उ त्वम् ।

दभ्रण् पश्यद्भ्य उर्विया विचक्ष उषा अजीगर्भुवनानि विश्वो३ं

क्षत्राय त्वं श्रवसे त्वं महीया इष्टये त्वमर्थमिव त्वमित्यै ।

विसदृशा जीविताभिप्रचक्ष उषा अजेगर्भुवनानि विश्वो३म्

एषा दिवो दुहिता प्रत्यदर्शि व्युच्छन्ती युवतिः शुक्रवासाः ।

विश्वस्येशाना पार्थिवस्य वस्व उषो अद्येह सुभगे व्युच्छो३ं

परायतीनामन्वेति पाथ आयतीनां प्रथमा शश्वतीनाम् ।

व्युच्छन्ती जीवमुदीरयन्त्युषा मृतं कं चन बोधयन्तो३म्

उषो यदग्निं समिधे चकर्थ वि यदावश्चक्षसा सूर्यस्य ।

यन्मानुषान् यक्ष्यमाणाँ अजीगस्तद् देवेषु चकृषे भद्रमप्नो३ं

कियात्या यत् समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान् ।

अनु पूर्वाः कृपते वावशाना प्रदीध्याना जोषमन्याभिरेतो३म्

ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः ।
अस्माभिरू नु प्रतिचक्ष्याभूदो ते यन्ति ये अपरीषु पश्योइँ
यावयद् द्वेषा ऋतपा ऋतेजाः सुम्नावरी सूनृता ईरयन्ती ।
सुमङ्गलीर्बिभ्रती देववीतिमिहाद्योषः श्रेष्ठतमा व्युच्छोइँ
शस्वत् पुरोगा व्युवास देव्यथो अद्येदं व्यावो मघोनी ।
अथो व्युच्छादुत्तराँ अनु द्यूनजरामृता चरति स्वधाभोइँ
व्य१ञ्जिभिर्दिव आतास्वद्यौदप कृष्णां निर्णिजं देव्यावः ।
प्रबोधयन्त्यरुणेभिरश्वैरोषा याति सुयुजा रथेनो३म्
आवहन्ती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना ।
ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वो३म्
उदीर्ध्वं जीवो असुर्न आगादप प्रागात् तम आ ज्योतिरेति ।
आरैक् पन्थां यातवे सूर्यायागन्म यत्र प्रतिरन्त आयोइँ
स्यूमना वाच उदियर्ति वह्निः स्तवानो रेभ उषसो विभातीः ।
अद्या तदुच्छ  गृणते मघोन्यस्मे आयुर्नि दिदीहि प्रजावोइँ
या गोमतीरुषसः सर्ववीरा व्युच्छन्ति दाशुषे मर्त्याय ।
वायोरिव सूनृतानामुदर्के आ अश्वदा अश्नवत् सोमसुत्वोइँ
माता देवानामदितेरनीकं यज्ञस्य केतुर्बृहती वि भाहि ।
प्रशस्तिकृद् ब्रह्मणे नो व्यु१च्छा नो जने जनय विश्ववारोइँ
यच्चित्रमप्न उषसो वहन्तीजानाय शशमानाय भद्रम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्योइँ [१ ।११३ ।१–२०] [१४९]

बार्हतम्

प्रत्यु अदर्श्यायत्यु१च्छन्ती दुहिता दिवः । अपो महि व्ययति चक्षसे तमो ज्योतिष्कृणोति सूनरो३म्
उदुस्रियाः सृजते सूर्यः सचाँ उद्यन्नक्षत्रमर्चिवत् ।
तवेदुषो व्युषि सूर्यस्य च सं भक्तेन गमेमहोइँ
प्रति त्वा दुहितर्दिव उषो जीरा अभुत्स्महि । या वहसि पुरु स्पार्हं वनन्वति रत्नं न दाशुषे मयो३म्
उच्छन्ती या कृणोषि मंहना महि प्रख्यै देवि स्वर्दृशे ।
तस्यास्ते रत्नभाज ईमहे वयं स्याम मातुर्न सूनवोइँ
तच्चित्रं राध आ भरोषो यद् दीर्घश्रुत्तमम् । यत् ते दिवो दुहितुर्मर्तभोजनं तद् रास्व भुनजामहोइँ
श्रवः सूरिभ्यो अमृतं वसुत्वनं वाजाँ अस्मभ्यं गोमतः ।

चोदयित्री मघोनः सूनृतावत्युषा उच्छदप स्रिधो३म् [७ ।८१ ।१–६] [१५५]

औष्णिहम्

उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहो३म्

उषो अद्येह गोमत्यश्वावति विभावरि । रेवदस्मे व्युच्छ सूनृतावतो३ं

युक्ष्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः । अथा नो विश्वा सौभगान्या वहो३म् [१ ।९२ ।१३–१५] [१५८]

जागतम्

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।

निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरो३म्

उदपप्तन्नरुणा भानवो वृथा स्वायुधो अरुषीर्गा अयुक्षत ।

अक्रन्नुषासो वयुनानि पूर्वथा रुशन्तं भानुमरुषीरशिश्रयो३म्

अर्चन्ति नारीरपसो न विष्टिभिः समानेन योजनेना परावतः ।

इषं वहन्तीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वतो३म्

अधि पेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव बर्जहम् ।

ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्यु१षा आवर्तमो३ं [१ ।९२ ।१–४] [१६२]

पाङ्क्तम्

महे नो अद्य बोधयोषो राये दिवत्मती ।

यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृतो३ं

या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः ।

सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृतो३ं

सा नो अद्या भरद्वसुर्व्युच्छा दुहितर्दिवः ।

यो व्यौच्छः सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृतो३म्

अभि ये त्वा विभावरि स्तोमैर्गृणन्ति वह्नयः ।

मघैर्मघोनि सुश्रियो दामन्वन्तः सुरातयः सुजाते अश्वसूनृतो३ं

यच्चिद्धि ते गणा इमे छदयन्ति मघत्तये ।

परि चिद् वष्टयो दधुर्ददतो राधो अह्रयं सुजाते अश्वसूनृतो३म्

ऐषु धा वीरवद् यश उषो मघोनि सूरिषु ।

ये नो राधांस्यह्रया मघवानो अरासत सुजाते अश्वसूनृतो३ं

तेभ्यो द्युम्नं बृहद् यश उषो मघोन्या वह ।

ये नो राधांस्यश्व्या गव्या भजन्त सूरयः सुजाते अश्वसूनृतो३म्

उत नो गोमतीरिष आ वहा दुहितर्दिवः ।
साकं सूर्यस्य रश्मिभिः शुक्रैः शोचद्भिरर्चिभिः सुजाते अश्वसूनृतो३ं
व्युच्छा दुहितर्दिवो मा चिरं तनुथा अपः ।
नेत् त्वा स्तेनं यथा रिपुं तपाति सूरो अर्चिषा सुजाते अश्वसूनृतो३म्
एतावद् वेदुषस्त्वं भूयो वा दातुमर्हसि ।
या स्तोतृभ्यो विभावर्युच्छन्ती न प्रमीयसे सुजाते अश्वसूनृतो३ं [५ ।७९ ।१–१०] [१७२]

आश्विनः ऋतुः

गायत्रम्

एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहो३ं
या दस्रा सिन्धुमातरा मनोतरा रयीणाम् । धिया देवा वसुविदो३ं
वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि । यद् वां रथो विभिष्पतो३ं
हविषा जारो अपां पिपर्ति पपुरिर्नरा । पिता कुटस्य चर्षणो३म्
आदारो वा मतीनां नासत्या मतवचसा । पातं सोमस्य धृष्णुयो३ं
य नः पीपरदश्विना ज्योतिष्मती तमस्तिरः । तामस्मे रासाथामिषो३म्
आ नो नावा मतीनां यातं पाराय गन्तवे । युञ्जाथामश्विना रथो३म्
अरित्रं वां दिवस्पृथु तीर्थे सिन्धूनां रथः । धिया युयुज्र इन्दवो३ं
दिवस्कण्वास इन्दवो वसु सिन्धूनां पदे । स्वं वव्रिं कुह धित्सथो३म्
अभूदु भा उ अंशवे हिरण्यं प्रति सूर्यः । व्यख्यज्जिह्वयासितो३म्
अभूदु पारमेतवे पन्था ऋतस्य साधुया । अदर्शि वि स्रुतिर्दिवो३ं
तत्तदिदश्विनोरवो जरिता प्रति भूषति । मदे सोमस्य पिप्रतो३ं
वावसाना विवस्वति सोमस्य पीत्वा गिरा । मनुष्वच्छम्भू आ गतो३ं
युवोरुषा अनु श्रियं परिज्मनोरुपाचरत् । ऋता वनथो अक्तुभो३म्
उभा पिबतमश्विनोभा नः शर्म यच्छतम् । अविद्रियाभिरूतिभो३ं [१ ।४६ ।१–१५] [१८७]

आनुष्टुभम्

यदद्य स्थः परावति यदर्वावत्यश्विना । यद् वा पुरू पुरुभुजा यदन्तरिक्ष आ गतो३म्
इह त्या पुरुभूतमा पुरू दंसांसि बिभ्रता । वरस्या याम्यध्रिगू हुवे तुविष्टमा भुजो३म्
ईर्मान्यद् वपुषे वपुश्चक्रं रथस्य येमथुः । पर्यन्या नाहुषा युगा मह्ना रजांसि दीयथो३ं
तदू षु वामेना कृतं विश्वा यद् वामनु ष्टवे । नाना जातावरेपसा समस्मे बन्धुमेयथो३म्
आ यद् वां सूर्या रथं तिष्ठद् रघुष्यदं सदा । परि वामरुषा वयो घृणा वरन्त आतपो३ं

युवोरत्रिश्चिकेतति नरा सुम्नेन चेतसा । घर्मं यद् वामरेपसं नासत्यास्ना भुरण्यतो३म्
उग्रो वां ककुहो ययिः शृण्वे यामेषु संतनिः । यद् वां दंसोभिरश्विनात्रिर्नरावर्ततो३ं
मध्व ऊ षु मधूयुवा रुद्रा सिषक्ति पिप्युषी । यत् समुद्राति पर्षथः पक्वाः पृक्षो भरन्त वो३ं
सत्यमिद् वा उ अश्विना युवामाहुर्मयोभुवा । ता यामन् यामहूतमा यामन्ना मृळयत्तमो३म्
इमा ब्रह्माणि वर्धनाश्विभ्यां सन्तु शन्तमा । या तक्षाम रथाँ इवावोचाम बृहन्नमो३म् [५ ।७३ ।१–१०] [१९७]

त्रैष्टुभम्

आ भात्यग्निरुषसामनीकमुद् विप्राणां देवया वाचो अस्थुः ।
अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छो३ं
न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।
दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शम्भविष्ठो३म्
उता यातं सङ्गवे प्रातरह्नो मध्यन्दिन उदिता सूर्यस्य ।
दिवा नक्तमवसा शन्तमेन नेदानीं पीतिरश्विना ततानो३म् ॥
इदं हि वां प्रदिवि स्थानमोक इमे गृहा अश्विनेदं दुरोणम् ।
आ नो दिवो बृहतः पर्वतादाद्भ्यो यातमिषमूर्जं वहन्तो३ं
समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानो३म् [५ ।७६ ।१–५] [२०२]
अतारिष्म तमसस्पारमस्य प्रति स्तोमं देवयन्तो दधानाः ।
पुरुदंसा पुरुतमा पुराजामर्त्या हवते अश्विना गो३ं
न्यु प्रियो मनुषः सादि होता नासत्या यो यजते वन्दते च ।
अश्नीतं मध्वो अश्विना उपाक आ वां वोचे विदथेषु प्रयस्वो३म्
अहेम यज्ञं पथामुराणा इमां सुवृक्तिं वृषणा जुषेथाम् ।
श्रुष्टीवेव प्रेषितो वामबोधि प्रति स्तोमैर्जरमाणो वसिष्ठो३म्
उप त्या वह्नी गमतो विशं नो रक्षोहणा संभृता वीळुपाणी ।
समन्धांस्यग्मग मत्सराणि मा नो मर्धिष्टमो गतं शिवेनो३म्
आ पश्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात् ।
आ विश्वतः पाञ्चजन्येन राया यूयं पात स्वस्तिभिः सदा नो३म् [७ ।७३ ।१–५] [२०७]

बार्हतम्

इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना । अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथो३ं
युवं चित्रं ददथुर्जनं नरा चोदेथां सूनृतावते ।

अर्वाग्रथं समनसा नि यच्छतं पिबतं सोम्यं मधो३म्

आ यातमुप भूषतं मध्वः पिबतमश्विना । दुग्धं पयो वृषणा जेन्यावसू मा नो मर्धिष्टमा गतो३म्

अश्वासो ये वामुप दाशुषो गृहं युवां दीयन्ति बिभ्रतः

मक्षूयुभिर्नरा हयेभिरश्विना देवा यातमस्मयो३म्

अधा ह यन्तो अश्विना पृक्षः सचन्त सूरयः । ता यंसतो मघवद्भ्यो ध्रुवं यशश्छर्दिरस्मभ्यं नासत्यो३ं

प्र ये ययुरवृकासो रथा इव नृपातारो जनानाम् ।

उत स्वेन शवसा शूशुवुर्नर उत क्षियन्ति सुक्षितो३म् [७ ।७४ ।१–६] [२१३]

औष्णिहम्

अश्विना वर्तिरस्मदा गोमद् दस्रा हिरण्यवत् । अर्वाग्रथं समनसा नि यच्छतो३ं

यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः । आ न ऊर्जं वहतमश्विना युवो३म्

एह देवा मयोभुवा दस्रा हिरण्यवर्तनी । उषर्बुधो वहन्तु सोमपीतयो३म् [१ ।९२ ।१६–१८] [२१६]

जागतम्

अबोध्यग्निर्ज्म उदेति सूर्यो व्यु१षाश्चन्द्रा मह्यावो अर्चिषा ।

आयुक्षातामश्विना यातवे रथं प्रासावीद् देवः सविता जगत् पृथो३ं

यद् युञ्जाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम् ।

अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहो३म्

अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः ।

त्रिवन्धुरो मघवा विष्वसौभगः शं न आ वक्षद् द्विपदे चतुष्पदो३म्

आ न ऊर्जं वहतमश्विना युवं मधुमत्या नः कशया मिमिक्षतम् ।

प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवो३ं

युवं ह गर्भं जगतीषु धत्थो युवं विश्वेषु भुवनेष्वन्तः ।

युवमग्निं च वृषणावपश्च वनस्पतीँरश्विनावैरयेथो३ं

युवं ह स्थो भिषजा भेषजेभिरथो ह स्थो रथ्या३ राथ्येभिः ।

अथो ह क्षत्रमधि धत्थ उग्रा यो वां हविष्मान् मनसा ददाशो३म् [१ ।१५७ ।१–६] [२२२]

ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये ।

याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतो३ं

युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे ।

याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विना गतो३ं

युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना ।

याभिर्धेनुमस्वं पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति ।

याभिस्त्रिमन्तुरभवद् विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतो३ं

याभी रेभं निवृतं सितमद्भ्य उद् वन्दनमैरयतं स्वर्दृशे ।

याभिः कण्वं प्र सिषासन्तमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिरन्तकं जसमानमारणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुः ।

याभिः कर्कन्धुं वय्यं च जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिः शुचन्ति धनसां सुषंसदं तप्तं घर्ममोम्यावन्तमत्रये ।

याभिः पृश्निगुं पुरुकुत्समावतं ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिः शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथः ।

याभिर्वर्तिकां ग्रसितामुञ्चतं ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतम् ।

याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिर्विश्पलां धनसामथर्व्यं सहस्रमीह्ळ् आजावजिन्वतम् ।

याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत् ।

कक्षीवन्तं स्तोतारं याभिरावतं ताभिरू षु ऊतिभिरश्विना गतो३ं

याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे ।

याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतम् ।

याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम् ।

याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः ।

याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः ।

याभिः शारीराजतं स्यूमरश्मये ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना ।

याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिरङ्गिरो मनसा निरण्यतोऽग्रं गच्छतो विवरे गो अर्णसः ।

याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षितम् ।

याभिः सुदास ऊहथुः सुदेव्यं ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिः शन्ताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम् ।

ओम्यावतीं सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतम् ।

मधु प्रियं भरथो यत् सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः ।

याभी रथाँ अवथो याभिरर्वतस्ताभिरू षु ऊतिभिरश्विना गतो३ं

याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम् ।

याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरू षु ऊतिभिरश्विना गतो३म्

अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् ।

अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातो३ं

द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यो३ं [१ ।११२ ।१-२५] [२४७]

ईडेद्यावीयमावर्तयेदातमसोपघातात् । तमसोपहत आसनदुत्सृप्य द्युभिरक्तुभिरित्युत्तमऋगन्तेन मन्द्रस्योत्तमेन यमेन प्रतिप्रियतममित्युपसन्तनुयान्मध्यमप्रथमयमेन । अस्मिन् सूक्ते मध्यमस्वरं सर्वं प्रयुञ्जीत ।

पाङ्क्तम्

प्रति प्रियतमं रथं वृषणं वसुवाहनम् ।

स्तोता वामश्विनावृषिः स्तोमेन प्रति भूषति माध्वी मम श्रुतं हवो३म्

अत्यायातमश्विना तिरो विश्वा अहं सना ।

दस्रा हिरण्यवर्तनी सुषुम्ना सिन्धुवाहसा माध्वी मम श्रुतं हवो३म्

आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम् ।

रुद्रा हिरण्यवर्तनी जुषाणा वाजीनीवसू माध्वी मम श्रुतं हवो३ं

सुष्टुभो वां वृषण्वसू रथे वाणीच्याहिता ।

उत वां ककुहो मृगः पृक्षः कृणोति वापुषो माध्वी मम श्रुतं हवो३ं

बोधिन्मनसा रथ्येषिरा हवनश्रुता ।

विभिश्च्यवानमश्विना नि याथो अद्वयाविनं माध्वी मम श्रुतं हवो३म्

**आ वाम् नरा मनोयुजोऽश्वासः प्रुषितप्सवः ।**

**वयो वहन्तु पीतये सह सुम्नेभिरश्विना माध्वी मम श्रुतं हवो३म्**

**अश्विनावेह गच्छतं नासत्या मा वि वेनतम् ।**

**तिरश्चिदर्यया परि वर्तिर्यातमदाभ्या माध्वी मम श्रुतं हवो३म्**

**अस्मिन् यज्ञे अदाभ्या जरितारं शुभस्पती ।**

**अवस्युमश्विना युवं गृणन्तमुप भूषथो माध्वी मम श्रुतं हवो३म्** पुनरुत्सृप्य द्वार्ये स्थूणे अन्तरेणासीनो मध्यमस्योत्तमयमेन उत्तमऋगन्तमुत्तमस्य प्रथमं यममादायारोहक्रमेणैवोत्तमं स्वरं तस्यामेवर्चि सर्वं प्रयुज्य परिदध्यात् ।

**अभूदुषा रुशत्पशुराग्निरधाय्यृत्वियः ।**

**अयोजि वां वृषण्वसू रथो दस्रावमर्त्यो माध्वी मम श्रुतं हवो३म्** [५ ।७५ ।१–९] [२५६] इति । परिहिते **अपयिष्य होतः** इत्यध्वर्युणोक्तोऽनभिहिङ्कृत्यापोनप्त्रीया अन्वाहेषच्छनैस्तरां परिधानीयायाः (उत्तमस्य चतुर्थयमेन) । प्रथमामृचमध्यर्धकारं ब्रूयात् सामिधेनीवत् । उत्तरा ऋगावानम् । अर्थाद् द्वितीये आदाने पञ्चार्धर्चा अनुच्छवसता वक्तव्याः । यदि यजमानो वृष्टिकामः स्यात् तदा द्वितीयाद्याः प्रकृत्यैव ब्रूयात् । प्रकृतिभावे पूर्वेष्वासामर्धर्चेषु लिङ्गानि काङ्क्षेत् ।–

**प्र देवत्रा ब्रह्मणे गातुरेत्वपो अच्छा मनसो न प्रयुक्ति**

**महीं मित्रस्य वरुणस्य धासिं पृथुज्रयसे रीरधा सुवृक्तो३ं**

**प्र देवत्रा ब्रह्मणे गातुरेत्वपो अच्छा मनसो न प्रयुक्ति ॥**

**महीं मित्रस्य वरुणस्य धासिं पृथुज्रयसे रीरधा सुवृक्तो३ं**

**प्र देवत्रा ब्रह्मणे गातुरेत्वपो अच्छा मनसो न प्रयुक्ति**

**महीं मित्रस्य वरुणस्य धासिं पृथुज्रयसे रीरधा सुवृक्तो३म्**

**अध्वर्यवो हविष्मन्तो हि भूताच्छाप इतोशतीरुशन्तोऽ–**

**व याश्चष्टे अरुणः सुपर्णस्तमास्यध्वमूर्मिमद्या सुहस्तो४म् ॥**

**अध्वर्यवोऽप इता समुद्रमपां नपातं हविषा यजध्वं**

**स वो ददद्रूर्मिमद्या सुपूतं तस्मै सोमं मधुमन्तं सुनोतो४म् ॥**

**यो अनिध्मो दीदयदप्स्व१न्तर्यं विप्रास ईळते अध्वरे–**

**ष्वपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्यायो४म् ॥**

**याभिः सोमो मोदते हर्षते च कल्याणीभिर्युवतिभिर्न मर्यस्–**

**ता अध्वर्यो अपो अच्छा परेहि यदासिञ्चा ओषधीभिः पुनीतो४म् ॥**

**एवेद्यूने युवतयो नमन्त यदीमुशन्नुशतीरेत्यच्छ**

**सं जानते मनसा सं चिकित्रेऽध्वर्यवो धिषणापश्च देवो३म् ॥**

**यो वो वृताभ्यो अकृणोदु लोकं यो वो मह्या अभिशस्तेरमुञ्चत्**

**तस्मा इन्द्राय मधुमन्तमूर्मिं देवमादनं प्र हिणोतनापो३म् ॥**

**प्रास्मै हिनोत मधुमन्तमूर्मिं गर्भो यो वः सिन्धवो मध्व उत्सो**

**घृतपृष्ठमीड्यमध्वरेष्वापो रेवतीः शृणुता हवं मो३म् ॥**

**तं सिन्धवो मत्सरमिन्द्रपानमूर्मिं प्र हेत य उभे इयर्ति**

**मदच्युतमौशानं नभोजां परि त्रितन्तुं विचरन्तमुत्सो३म् ॥** [१० ।३० ।१–९]

**हिनोता नो अध्वरं देवयज्या हिनोय ब्रह्म सनये धनाना–**

**मृतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापो३म् ॥** [१० ।३० ।११]

ग्रहणदेशाद्देवयजनदेशं प्रति आवृत्तास्वेकधनासु–

**आवर्वृततीरध नु द्विधारा गोषुयुधो न नियवं चरन्ती–**

**ऋषे जनित्रीर्भुवनस्य पत्नीरपो वन्दस्व सवृधः सयोनो३म् ॥** [१० ।३० ।१०]

प्रतिदृश्यमानासु (आसीनस्य दृष्टिपथमागतासु)–

**प्रति यदापो अदृश्रमयतीर्घृतं पयांसि बिभ्रतीर्मधू–**

**न्यध्वर्युभिर्मनसा संविदाना इन्द्राय सोमं सुषुतं भरन्तो३म् ॥**[१० ।३० ।१३]

**आ धेनवः पयसा तूर्ण्यर्था अमर्धन्तीरुप नो यन्तु मध्वा**

**महो राये बृहतीः सप्त विप्रो मयोभवो जरिता जोहवीतो३म् ॥** [५ ।४३ ।१] इति तीर्थसमीपमागतासु ।

**समन्या यन्त्युप यन्त्यन्याः समानमूर्वं नद्यः पृणन्ति**

**तमू शुचिं शुचयो दीदिवांसमपां नपातं परि तस्थुरापो३म् ॥** [२ ।३५ ।३] इति तीर्थदेशं प्राप्तासु ।

तीर्थदेशे होतृचमसेऽपां पूर्यमाणे–

**आपो न देवीरुप यन्ति होत्रियमवः पश्यन्ति विततं यथा रजः**

**प्राचैर्देवासः प्र णयन्ति देवयुं ब्रह्मप्रियं जोषयन्ते वरा इवो३म् ॥**[१ ।८३ ।२] इति समाप्य प्रणवेनोपरमेत् । प्रकृतिभावपक्षेऽप्यत्रावसानं भवति । आगतमध्वर्युम् **अवेरपोऽध्वर्या३ उ** इति पृच्छति । अध्वर्युणा **उतेमनन्नमुः** इति प्रत्युक्तः शनैस्तरां (मध्यमस्वरेण)– **तास्वध्वर्यो इन्द्राय सोमं सोता मधुमत्तमं वृष्टिवनिं तीव्रान्तं बहुरमध्यं वसुमते रुद्रवत आदित्यवत ऋभुमते विभुमते वाजवते बृहस्पतिवते विश्वदेव्यावते** इति निगदमनवानं ब्रुवन् आगच्छन्तीनामेकधनानां मुखतो गत्वा ता अपरेणातीत्य उत्तरतस्तिष्ठेत् । तास्वदूरेणात्मनोऽतीतास्वन्वावृत्य **यस्येन्द्रः** इत्यादि निगदशेषमनुब्रुवन्ननुव्रजेत्– **यस्येन्द्रः पीत्वा वृत्राणि जङ्घनत् प्र स जन्यानि तारिषो३म्**

**अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयतां पृञ्चतीर्मधुना पयो३म् ॥** ऋगावनपक्षेऽप्यत्र प्रणवेन सन्तानः कर्तव्यः ।

**अमूर्या उप सूर्ये याभिर्वा सूर्यः सह ता नो हिन्वन्त्वध्वरो३म् ॥**

**अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः सिन्धुभ्यः कर्त्वं हवो४म् ॥** [१ ।२३ ।१६–१८] इत्युत्तमयापरया द्वारा हविर्धानमनुप्रपद्येत । साद्यमानास्वेकधनासु मन्द्रेण–

**एमा अग्मन् रेवतीर्जीवधन्या अध्वर्यवः सादयता सखायो**

**नि बर्हिषि धत्तन सोम्यासोऽपां नप्त्रा संविदानास एनो४म् ॥**

**आग्मन्नाप उशतीर्बर्हिरेदं न्यध्वरे असदन् देवयन्ती–**

**रध्वर्यवः सुनुतेन्द्राय सोममभूदु वः सुशका देवयज्यो४म् ॥**[१० ।३० ।१४–१५] इति सन्नासु परिदध्यात् । ततो निष्क्रम्य पूर्वया द्वारा हविर्धानं प्रविश्य उत्तरा द्वार्यस्थूणमासाद्य राजानमभिमुखो निरसनोपवेशनमकृत्वोपविशेत् । अत ऊर्ध्वं प्रातःसवनमासमाप्तेर्मन्द्रस्वरेण प्रयोक्तव्यम् ।

उपांशुग्रहं हूयमानमभिमुखो भूत्वा– **प्राणं यच्छ स्वाहा त्वा सुहव सूर्याय प्राणप्राणं मे यच्छ** इत्यनुमन्त्र्य **उः** इत्यनुप्राण्यात् (अन्तःशरीरस्थं वायुं नासिकाद्वारेण बहिर्निर्गमयेत्) । अन्तर्यामग्रहम्– **अपानं यच्छ स्वाहा त्वा सुहव सूर्यायापानापानं मे यच्छ** इत्यनुमन्त्र्य **उम्** इत्यभ्यपान्यात् (बहिःष्ठं वायुं नासिकयान्तः प्रवेशयेत्) । ततो **व्यानाय त्वा** इत्युपांशुसवनं ग्रावाणमभिमृश्यापोनप्त्रीयस्थाने उपविश्य **भूर्भुवःस्वः** इति वाचं विसृजेत । प्रातरनुवाकाद्येतदन्तं वाग्यमनम् । अथ बहिष्पवमानाय सर्पणे छन्दोगात् पृष्ठतो मैत्रावरुणो ब्रह्मा तावन्तरेणेतरे होतृब्रह्मवर्ग्या दीक्षिताश्चेत् प्रत्यगुदगाहवनीयादवस्थाय–

**द्रप्सश्चस्कन्द प्रथमाँ अनु द्यूनिमं च योनिमनु यश्च पूर्वः ।**

**समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः स्वाहा ॥**

**यस्ते द्रप्सः स्कन्दति यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थात् ।**

**अध्वर्योर्वा परि वा यः पवित्रात् तं ते जुहोमि मनसा वषट्कृतं स्वाहा ॥** [१० ।१७ ।११–१२] इति द्वौ विप्रुड्ढोमौ हुत्वाध्वर्युमुखाः समन्वारब्धाः सर्पन्त्यातीर्थदेशात् । बहिष्पवमानायोद्गातारमभिमुखा दक्षिणतो ब्रह्मोदङ्मुखः पश्चान्मैत्रावरुणोनिरसनोपवेशने कृत्वा प्राङ्मुख उपविशति । अथ होतापोनप्त्रीयस्थान एवासीनस्तान् बहिष्पवनार्थमुपविष्टाननुमन्त्रयते–

**यो देवानामिह सोमपीथो यज्ञे बर्हिषि वेद्याम् ।**

**तस्यापि भक्षयामसि मुखमसि मुखं भूयासम् ॥** इति ।

यदि होता दीक्षितश्चेद्व्रजेत् स्तोत्रोपस्वराय सर्पेच्चोत्तरयोः सवनयोः । **ब्रह्मन् त्स्तोष्यामः प्रशास्तः** इति प्रस्तोत्रा स्तोत्रायातिसर्जितौ ब्रह्ममैत्रावरुणावतिसृजतः ।

ब्रह्मा– **भूरिन्द्रवन्तः सवितृप्रसूताः** इति जपित्वा **ॐस्तुध्वम्** इत्युच्चैः ।

प्रशास्ता– **स्तुत देवेन सवित्रा प्रसूता ऋतस्य सत्यस्य वदत । आयुष्मत्य ऋचो मा गात तनूपात् साम्न ॐ** इति जपित्वा **स्तुध्वम्** इत्युचैरतिसृजति ।

अथ सवनीयेन पशुना चरन्ति । आग्नेयोऽग्निष्टोमे । परिव्ययणाद्याचात्वालमार्जनादमग्नीषोमीयवद्दण्डप्रदानवर्जम् । **यूपाय परिवीयमाणाय** प्रेषितः पश्चादुत्तर्वेदेर्निरसनोपवेशने कृत्वाभिहिंकृत्य **युवा सुवासाः** [३ ।८ ।४] इति त्रिर्ब्रूयात् । अग्निमन्थनादि समानम् । **नमः प्रवक्त्रे** इत्यादि सप्तदशसामिधेन्यः । स्रुगादापनसूक्तवाकस्थौ **प्रावित्रं साधु ते यजमानदेवता, ओमन्वती तेऽस्मिन् यज्ञे यजमान** इत्येतौ यजमानशब्दौ वर्जयित्वा आवाहनादिष्वैष्टिकेषु निगमेषु यजमानशब्दादग्रे तद्विभक्त्यन्तः सुन्वच्छब्दः प्रयोक्तव्यः । नान्त्याद्धारियोजनादूर्ध्वम् ।

अथावाहने– **आवह देवान् त्सुन्वते यजमानाय** इत्यवसाय **अग्निमग्न आ३वह । सोममा३वह । अग्निमावा३वह वनस्पतिमा३वह । इन्द्रं वसुमन्तमा३वह । इन्द्रं रुद्रवन्तमा३वह । इन्द्रमादित्यवन्तमृभुवन्तं विभुमन्तं वाजवन्तं बृहस्पतिवन्तं विश्वदेव्यावन्तमा३वह । देवाँ आज्यपाँ आ३वहे**त्यादि । इन्द्रं वसुमन्तमित्यादि सवनदेवतानां प्रस्थितयाज्यासु ध्वानं कर्तव्यम् । सम्मार्गानन्तरं प्रवृताहुतीर्जुह्वति वषट्कर्तारोऽच्छावाकवर्जम् । ऋतुयाज्याक्रमेण । अथ **प्रशास्तस्तीर्थेन प्रपद्यस्व** इत्युक्तो मैत्रावरुणः स्थानाचमने कृत्वा प्रविश्य स्वयमेव तूष्णीं दण्डं गृह्णाति । सदः प्रपदनादि समानमाधिगुपर्यन्तम् । अध्रिगौ– **मेधपतये मेधम्** इति विशेषः ।

वपायागे–

प्रशास्ता– **अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।**

**युयोद्ध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेमो३म् ॥** [१ ।१८९ ।१]

**होता यक्षदग्निं छागस्य वपाया मेदसो जुषतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे प्र वः शुक्राय भानवे भरध्वं हव्यं मतिं चाग्नये सुपूतम् ।**

**यो दैव्यानि मानुषा जनूंष्यतर्विश्वानि वद्मना जिगाती३ वौ३षट् ॥** [७ ।४ ।१]

हुतायां वपायां पाशुका ऋत्विजश्चात्वाले मार्जयन्ते । अथ होता मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टाग्नीध्र इत्येते अध्वर्युपथे स्थित्वादित्यप्रभृतीन् धिष्ण्यानुपतिष्ठन्ते । आदित्यमग्रे– **अध्वनामध्वपते श्रेष्ठः स्वस्त्यस्याध्वनः पारमशीय** इति । तत्रस्था एव यूपादित्याहवनीयनिर्मन्थ्यानुपतिष्ठन्ते– **अग्नयः सगराः सगरा अग्नयः सगराः स्थ सगरेण नाम्ना । पातमाग्नयः पिपृतामाग्नयो नमो वोऽस्तु मा मा हिंसिष्ट** इति । निर्मन्थ्यो नामाग्निमन्थनदेशः प्रक्षेपणदेशो वा । अथ सव्यावृतस्तत्रस्था एव शामित्रोवध्यगोहचावालोकरास्तावान् । एवमेव दक्षिणावृत आग्नीध्रीयमच्छावाकस्यवादं दक्षिणमार्जालीयं खरमित्येतानुपतिष्ठन्ते **अग्नयः सगराः** इति मन्त्रेण । ऊवध्यगोहं पश्चान्त्रप्रच्छादनस्थानम् । आस्तावो बहिष्पवमानदेशः । अच्छावाकवादः **अच्छा वो अग्निम्** इत्यच्छावाकेन पद्यमानस्थानम् । खरो ग्रहसादनप्रदेशः । अथोत्तरेणाग्नीध्रीयं परिव्रज्य सदसः पूर्वद्वारि आग्नीध्रवर्जमितरे प्रत्यङ्मुखाः सदोऽभिमृशन्ति– **उर्वन्तरिक्षं वीहि** इति । दक्षिणेन पाणिना द्वार्ये स्थूणे पर्यायेणाभिमृशेयुः सकृन्मन्त्रेण– **देवी द्वारौ मा मा सन्ताप्तं लोकं मे लोककृतौ कृणुतम्** इति । तत्रस्था एव **अग्नयः सगराः** इति मन्त्रेणापरान् शालामुखीयादीनुपतिष्ठेरन् । उपस्थितानादित्यादीननुपस्थितान् होत्रीयादींश्च सर्वान् पश्यन्तोऽपि इतस्तत ईक्षमाणाः **अग्नयः सगराः** इति मन्त्रेण सदसः पूर्वद्वारप्रदेशस्थाः सकृदेवोपतिष्ठेरन् । ततः सर्वे

**उरुं नो लोकमनु नेषि विद्वान् त्स्वर्वज्ज्योतिरभयं स्वस्ति ।**
**ऋष्वा त इन्द्र स्थविरस्य बाहू उप स्थेयाम शरणा बृहन्ता ॥** [६ ।४७ ।८] इति जपन्तः पूर्वया द्वारा सदः प्रसर्पन्ति । ततो नेष्टृपोतृब्राह्मणाच्छंसिहोतृमैत्रावरुणा इत्येवं क्रमेणोत्तरेण सर्वान् धिष्ण्यान् गत्वा सन्नान् सन्नानपरेण गत्वा स्वस्व धिष्ण्यानां पश्चान्निरसनोपवेशने कृत्वोपविशेयुः । आग्नीध्रस्तु आग्नीध्रशालामभिमृशति– **उर्वन्तरिक्षं वीहि** इति । **देवी द्वारौ** इति द्वार्ये स्थूणे अभिमृश्य **उरुं नो लोकम्** इति जपन्नुत्तरेण स्वधिष्ण्यं गत्वा तस्य पश्चाद्भागे निरसनोपवेशने कृत्वोपविशेत् । उपविश्य सर्वे होत्रकाः– **यो अद्य सौम्यो वधोघा यूनामुदीरति । विशूकुहमिव धन्वना व्यस्याः परिपन्थनं सदसस्पतये नमः** इति जपन्ति । तेषामासवनसमाप्तेर्विसर्पणादिकं प्राप्ते स्वधिष्ण्यमुत्तरेण संचरितव्यः । एवं ब्रह्मा आदित्यप्रभृतीन् धिष्ण्यानुपस्थायपश्चात् सदः प्राङ्मुखः सदोऽभिमृश्य अपरे द्वार्ये अभिमृशति । तत्रस्थ एव पत्नीशालादीन् उपस्थितांश्चानुपस्थितांश्च उपस्थायापरया द्वारा सदः प्रविश्य दक्षिणपुरस्तान् मैत्रावरुणस्य निरसनोपवेशने कृत्वोपविश्य **यो अद्य सौम्यः** इति जपति ।

अथैन्द्रैः पुरोडाशैरनुसवनं चरन्ति ।

प्रशास्ता– **धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् । इन्द्र प्रातर्जुषस्व नो३म् ॥** [३ ।५२ ।१]

**होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपः । मित्रावरुणयोः पयस्या प्रातः प्रातः सावस्य पुरोळाशाँ इन्द्रः प्रस्थितां जुषाणो वेतु होतर्यज ॥**

होता– **ये३ यजामहे हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपः । मित्रावरुणयोः पयस्या प्रातः प्रातः सावस्य पुरोळाशाँ इन्द्रः प्रस्थितां जुषाणो वेतू३ वौ३षट् ॥**

स्विष्टकृदि प्रशास्ता– **अग्ने जुषस्व नो हविः पुरोळाशं जातवेदः । प्रातः सावे धियावसो३म् ॥** [३ ।२७ ।१]

**होता यक्षदग्निं पुरोळाशानां जुषतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे हविरग्ने वीही३ वौ३षट् ॥**

**द्विदेवत्यैश्चरन्ति ।**

अथैन्द्रवायवस्य

प्रशास्ता– **वायवा याहि दर्शतेमे सोमा अरङ्कृतास्तेषां पाहि श्रुधी हवो३म्** [१ ।२ ।१]

**इन्द्रवायू इमे सुता उप प्रयोभिरागतमिन्दवो वामुशन्ति हो३म् ॥** [१ ।२ ।४] इत्यनवानं पृथक् प्रणवे ।

**होता यक्षद्वायुमग्रेगामग्रेयावाणमग्रे सोमस्य पातारं करदेवं वायुरवसा गमज्जुषतां वेतु पिबतु सोमं होतर्यज होता यक्षदिन्द्रवायू अर्हन्तार्हाणां गव्याभिर्गोमन्ता भ्रियन्तां वीरया शुक्रया एनयोर्नियुतो गोअग्रावीरोपशाश्वपुरस्त्यास्तासामिह प्रयाणमस्त्विह विमोचनं करत एवेन्द्रवायू जुषेतां वीतां पिबतां सोमं होतर्यज** ॥ इत्यनवानं प्रेष्यति ।

होता– **ये३ यजामह अग्रं पिबा मधूनां सुतं वायो दिविष्टिषु त्वं हि पूर्वपा असी३ वौ३षट् ॥**

**शतेना नो अभिष्टिभिर्नियुत्वाँ इन्द्रसारथिर्वायो सुतस्य तृम्पता३ं वौ३षट् ॥** [४ ।४६ ।१–२] द्विर्वागोजः ।

इदमाद्यनवानं प्रातः सवन इज्यानुवाक्ये । प्रैषौ चोत्तरयोर्ग्रहयोः । अथ हृत्वैतद्ग्रहपात्रमाहरत्यध्वर्युस्तद्गृह्णीयात्– **ऐतु वसुः पुरूवसुः** इति । सव्येन पाणिना दक्षिणस्योरोर्वसनमपनीय तस्मिन् सादयित्वाकाशवदङ्गुलिना पाणिनापिदध्यात् । एवमुत्तरत्र प्रतिग्रहभक्षणकाले तु सव्येन पिधानं भवति ।

अथ मैत्रावरुणस्य

प्रशास्ता– **अयं वां मित्रावरुणा सुतः सोम ऋतावृधा ममेदिह श्रुतं हवो३म् ॥** [२ ।४१ ।४]

**होता यक्षन्मित्रावरुणा सुक्षत्रा रिशादसा निचिन्मिषन्ता निचिरा निचिर्यांसाक्ष्णश्चिद्गातुवित्तरानुल्बणेन चक्षस ऋतमृतमिति दीध्याना करत एवं मित्रावरुणा जुषेतां वीतां पिबतां सोमं होतर्यज ॥**

होता– **ये३ यजामहे गृणाना जमदग्निना योनावृतस्य सीदतं पातम् सोममृतावृधा३ वौ३षट् ॥** [३ ।६२ ।१८]

ऐन्द्रवायवं सव्येनापिधाय दक्षिणेन पाणिना मैत्रावरुणम्– **ऐतु वसुर्विदद्वसुः** इति प्रतिगृह्य दक्षिणेनैन्द्रवायवं हृत्वाभ्यात्मं सादयित्वोभावपि दक्षिणेन पाणिनापिदध्यात् ।

अथाश्विनस्य

प्रशास्ता– **प्रातर्युजा विबोधयाश्विनावेह गच्छतामस्य सोमस्य पीतयो३म् ॥**

**होता यक्षदश्विना नासत्या दीद्यग्नी रुद्रवर्तनी न्यन्तरेण चक्रेण वामीरिष ऊर्जावहतं सुवीराः सनुतरेणाररुषो बाधेतां मधुकशयेमं यज्ञं युवाना मिमिक्षतां करत एवाश्विना जुषेतां वीतां पिबतां सोमं होतर्यज ॥**

होता– **ये३ यजामहे वावृधाना शुभस्पती दस्रा हिरण्यवर्तनी पिबतं सोम्यं मधू३ वौ३षट् ॥** [८ ।५ ।११]

इतरौ ग्रहौ सव्येनापिधाय दक्षिणेनाश्विनम्– **ऐतु वसुः संयद्वसुः** इति प्रतिगृह्य दक्षिणेनेतरावग्रतो नीत्वा उत्तरेण शिरः पर्याहृत्याभ्यात्मतरं सादयित्वापिदधाति । उन्नीयमानेभ्यः प्रेषितो मैत्रावरुणोऽनभिहिंकृत्य

**आ त्वा वहन्तु हरयो वृषणं सोमपीतये । इन्द्र त्वा सूरचक्षसो३म्** इति त्रिः

**इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इन्द्रं सुखतमे रथो३म्**

**इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे । इन्द्रं सोमस्य पीतयो३म्**

**उप नः सुतमा गहि हरिभिरिन्द्र केशिभिः । सुते हि त्वा हवामहो३ं**

**सेमं नः स्तोममा गह्युपेदं सवनं सुतम् । गौरो न तृषितः पिबो३म्**

**इमे सोमास इन्दवः सुतासो अधि बर्हिषि । ताँ इन्द्र सहसे पिबो३म्**

**अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शन्तमः । अथा सोमं सुतं पिबो३ं**

**विश्वमित्सवनं सुतमिन्द्रो मदाय गच्छति । वृत्रहा सोमपीतयो३ं**

**सेमं नः काममा पृण गोभिरश्वैः शतक्रतो । स्तवाम त्वा स्वाध्यो३म्** [१ ।१६ ।१–९] इति त्रिः परिदध्यात् ।

**होता यक्षदिन्द्रं प्रातः प्रातः सावस्यार्वावतो गमदा परावत ओरोरन्तरिक्षादास्वात् सधस्थादिमे अस्मै शुक्रा मधुश्चुतः प्रस्थिता इन्द्राय सोमास्तां जुषतां वेतु पिबतु सोमं होतर्यज ॥**

होता– **ये३ यजामह इदं ते सोम्यं मध्वधुक्षन्नद्रिभिर्नरो जुषाण इन्द्र तत् पिबा३ वौ३षट्** ॥ [८ ।६५ ।८]

**सोमस्याग्ने वीही३ वौ३षट्** ॥ इत्यनुवषट्कारः । द्विर्वागोजः ।

**प्रशास्तर्यज** इति प्रेषितः प्रशास्ता–

**ये३ यजामहे मित्रं वयं हवामहे वरुणं सोमपीतये जज्ञाना पूतदक्षसा ३ वौ३षट्** ॥ [१ ।२३ ।४]

**सोमस्याग्ने वीही३ वौ३षट्** ॥ द्विर्वागोजः ।

**ब्रह्मन् यज** इति प्रेषितो ब्राह्मणाच्छंसी–

**ये३ यजामह इन्द्र त्वा वृषभं वयं सुते सोमे हवामहे स पाहि मध्वो अन्धसा३ वौ३षट्** ॥[३ ।४० ।१]

**सोमस्याग्ने वीही३ वौ३षट्** ॥ द्विर्वागोजः ।

**पोतर्यज** इति प्रेषितः पोता–

**ये३ यजामहे मरुतो यस्य हि क्षये पाथा दिवो विमहसः स सुगोपातनो जना३ वौ३षट्** ॥[१ ।८६ ।१]

**नेष्टर्यज** इति प्रेषितो नेष्टा–

**ये३ यजामह अग्ने पत्नीरिहा वह देवानामुशतीरुप त्वष्टारं सोमपीतया३इ वौ३षट्** ॥ [१ ।२२ ।९]

**सोमस्याग्ने वीही३ वौ३षट्** ॥ द्विर्वागोजः ।

**अग्नीद्यज** इति प्रेषितोऽग्नीत्–

**ये३ यजामह उक्षान्नाय वशान्नय सोमपृष्ठाय वेधसे स्तोमैर्विधेमाग्नया३इ वौ३षट्** ॥ [८ ।४३ ।११]

**सोमस्याग्ने वीही३ वौ३षट्** ॥ द्विर्वागोजः ।

अथ होता आगतमध्वर्युम् **अयाडग्नीत्** इति पृच्छति । **अयाट्** इत्यध्वर्युः प्रत्याह । **स भद्रमकर्यो नः सोमस्य पाययिष्यति** इति होता जपति ।

इतरे पात्रे सव्येनापिधाय दक्षिणेन हस्तेन ऐन्द्रवायवमुत्तरेऽर्धे गृहीत्वाध्वर्यवे प्रणामयेत् (अनुत्सृजन् प्रयच्छेत्)– **एष वसुः पुरूवसुरिहवसुः पुरूवसुर्मयिवसुः पुरूवसुर्वाक्पा वाचं मे पाह्युपहूता वाक् सह प्राणेनोप मां वाक् सह प्राणेन ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजाः** इति । ततः **अध्वर्य उपह्वयस्व** इत्युक्त्वा नासिकाभ्यामवघ्राय सोमं **वाग्देवी सोमस्य तृप्यतु** इति भक्षयेत् । सर्वत्रापि सोमभक्षणेऽयमेव मन्त्रः । यदि तु तत्र प्रतिप्रस्थाता भक्षयति तमप्युपहूय भक्षयेत् । ततोऽध्वर्युणा **होतरुपह्वयस्व** इत्युक्तः **उपहूतः** इति प्रत्युपहवं ब्रूयात् सर्वत्र । ततोऽध्वर्युणा प्रतिभक्षितं होतृचमसे किञ्चिदवनीयानाचम्य अध्वर्युप्रतिप्रस्थात्रोरुपहवमिष्ट्वा नासिकाभ्यामवघ्राय पुनर्भक्षयेत् । ताभ्यां च प्रतिभक्षितशेषं होतृचमस आनीयोत्सृजेत् पात्रम् । अथाश्विनं सव्येनापिधाय मैत्रावरुणमुत्तरेऽर्धे गृहीत्वाध्वर्यवे प्रणामयेत्– **एष वसुर्विदद्वसुरिह वसुर्विदद्वसुर्मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाह्युपहूतं चक्षुः सह मनसोप मां**

**चक्षुः सह मनसा ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजाः** इति । पूर्ववदुपहवमिष्ट्वा अक्षिभ्यां त्विहावेक्षणं दक्षिणेनाग्रे पश्चात् सव्येन । भक्षयित्वा प्रतिभक्षितशेषं होतृचमस आनीयोत्सृजेत् । मैत्रावरुणाश्विनयोर्न पुनर्भक्षः । दक्षिणेनाश्विनमपिधाय सव्येन पाणिना होतृचमसमाददीत– **ऐतु वसूनां पतिर्विश्वेषां देवानां समित्** इति । ततः सव्यस्यारत्निना सव्यस्योरोर्वसनमपोच्छाद्य तस्मिन्नूरौ सादयित्वाकाशवतीभिरङ्गुलीभिर्होतृचमसं सव्येनापिदध्यात् । आश्विनमुत्तरेऽर्धे गृहीत्वा यथाहृतं परिहृत्य पुनः सादयित्वाध्वर्यवे प्रणामयेत्– **एष वसुः संयद्वसुरिहवसुः संयद्वसुर्मयिवसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाह्युपहूतं श्रोत्रं सहात्मनोप मां श्रोत्रं सहात्मना ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजाः** इति । पूर्ववदुपहवमिष्ट्वा कर्णाभ्यां त्विहोपोद्यच्छेद् दक्षिणायाग्रे पश्चासव्याय । दक्षिणेन पाणिना होतृचमसं भूमौ निधाय स्पृष्टोदकमिडामुपह्वयते । इडायाम् – **उपहूतोऽयं सुन्वन् यजमानोऽस्य यज्ञस्यागुर उदृचमशीयेति तस्मिन्नुपहूतः** इति विशेषः । इदोपह्वानकाल उपोद्यच्छन्ति चमसान् चमसिनश्चमसाध्वर्यवो वा । होतावान्तरेडां प्राश्येडाभक्षणमकृत्वैवाचम्य **अध्वर्य उपह्वयस्व** इत्युक्त्वा होतृचमसं भक्षयेत् **वाग्देवी** इति मन्त्रेण । सानुवषट्कारेषु द्विर्भक्षणं मन्त्रेण प्रथमं तूष्णीमुत्तरम् । ततः प्रशास्तृब्राह्मणाच्छंसीपोतृनेष्ट्राग्नीध्राणां चमसान् सकृद् भक्षयति । उद्गातृब्रह्मयजमानसदस्यानां चमसान् तं तमेवोपहूय द्विर्द्विर्भक्षयति । अस्मिन् पक्षे तावपि तं तं चमसिनमध्वर्युं चोपहूय भक्षयतः । एवं प्रशास्त्रादय आग्नीध्रान्ताः स्वं स्वं चमसं होतारमध्वर्युं चोपहूय द्विर्द्विर्भक्षयन्ति । तान् चमसानध्वर्युः प्रतिभक्षयति । एवं वषट्कारनिमित्ते भक्षे समाप्ते सर्वे चमसिनः स्वं स्वं चमसं समाख्यार्थं सकृत् सकृद्भक्षयन्ति होतारमध्वर्युं चोपहूय । ब्राह्मादयस्तु होतारमध्वर्युं चमसिनो वोपहूय । सर्वैः **उपहूतः** इति प्रत्युपहवः कार्यः । अथ सर्वे भक्षयित्वा

**अपाम सोममममृता अभूमागन्म ज्योतिरविदाम देवान् ।**
**किं नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥**
**शं नो भव हृद आ पीत इन्दो पितेव सोम सूनवे सुशेवः ।**
**सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः ॥** [८ ।४८ ।३–४] इत्येताभ्यामृग्भ्यां मुखहृदये यथासंख्येनाभिमृशेरन् । अद्भिराप्यायनम् । ततः स्वं स्वं चमसमद्भिराप्याययेरन्–

**आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥** [१ ।९१ ।१६]
**सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।**
**आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥** [१ ।९१ ।१८] इति द्वाभ्याम् । आप्यायितांश्चमसान् दक्षिणस्य हविर्धानस्याधस्तात् सादयन्ति । ते नाराशंसा भवन्ति ।

एतस्मिन् कालेऽच्छावाकः स्थानाचमने कृत्वा तीर्थेन प्रपद्योत्तरेणाग्नीध्रीयंपरिव्रज्य पूर्वेण सद आत्मनो धिष्ण्यग्रदेशे निरसनोपवेशने कृत्वोपविश्य पुरोडाशदृगलमध्वर्युणा प्रत्तमिडामिवोद्यम्य **अच्छावाक वदस्व** इत्युक्तोऽनभिहिंकृत्य–

**अच्छा वो अग्निमवसे देवं गासि स नो वसुः । रासत् पुत्र ऋषूणामृतावा पर्षति द्विषो३म्** इति त्रिः
**स हि सत्यो यं पूर्वे चिद्देवासश्चिद्यमीधिरे । होतारं मन्द्रजिह्वमित् सुदीतिभिर्विभावसो३ं**
**स नो धीती वरिष्ठया च श्रेष्ठया च सुमत्या । अग्ने रायो दिदीहि नः सुवृक्तिभिर्वरेण्यो३म्** [५ ।२५ ।१–३] इति त्रिः परिधायान्त्येन प्रणवेन – **वरेण्यो३ं यजमानहोतरध्वर्योऽग्नीद्ब्रह्मन्पोतर्नेष्टरुतोपवक्तरिषेषयध्वमूर्जोर्जयध्वं नि वोजामयोजिहतान् यजाम योनिः सपत्नायामनिबाधितासो जयताभीत्वरीं जयताभीत्वर्याश्रवद्व इन्द्रः शृणवद्वो अग्निः प्रस्थायेन्द्राग्निभ्यां सोमं वोचतोपो अस्मान् ब्राह्मणान् ब्राह्मणा ह्वयध्वम्** इति निगदमनवानमुपसन्तनुयात् । समाप्तेऽस्मिन् निगदेऽध्वर्युर्होतर्युपहवं काङ्क्षते । होता–
**प्रत्येता सुन्वन् यजमानः सूक्ता वामाग्रभीत् ।**
**उप प्रतिष्ठोपवक्तरुत नो गाव उपहूताः** इति निगदमुक्त्वा **उपहूतः** इत्युपह्वयते ।
**उन्नीयमानाय** प्रेषितोऽच्छावाकोऽनभिहिंकृत्य–
**प्रत्यस्मै पिपीषते विश्वानि विदुषे भर । अरंगमाय जग्मयेऽपश्चाद्दघ्वने नरो३म्** इति त्रिः
**एमेनं प्रत्येतन सोमेभिः सोमपातमम् । अमत्रेभिर्ऋजीषिणमिन्द्रं सुतेभिरिन्दुभो३ं**
**यदी सुतेभिरिन्दुभिः सोमेभिः प्रतिभूषथ । वेदा विश्वस्य मेधिरो धृषत् तं तमिदेषतो३म्**
**अस्माअस्मा इदन्धसोऽध्वर्यो प्र भरा सुतम् । कुवित् समस्य जेन्यस्य शर्धतोऽभिशस्तेरवस्पृरो३म्**[६ ।४२ ।१–४] इति त्रिः परिदध्यात् । **अच्छावाक यज** इति प्रेषितोऽच्छावाकः–
**ये३ यजामहे प्रातर्यावभिरागतं देवेभिर्जेन्यावसू इन्द्राग्नी सोमपीतया३इ वौ३षट् ॥** [८ ।३८ ।७]
**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । एतावन्तं कालं पुरोडाशदृगलस्योद्यमनं भवति । निधाय पुरोडाशदृगलं स्पृषोदकमध्वर्युमुपहूय उक्तमन्त्रेण चमसं भक्षयति तूष्णीं द्वितीयम् । अध्वर्युणा प्रतिभक्षिते पुनरध्वर्युमुपहूय समाख्यानिमित्तं भक्षयति । **अपाम** इत्यादि मुखहृदयाभिमर्शनं चमसाप्यायनं च । नास्पृष्टोदकाः सोमेनेतराणि हवींष्यालभेरन् । स्पृष्टोदकं पुरोदाशदृगलमादाय उत्थाय तत्रस्थ एव **अध्वनाम्** इत्यादि पूर्वोक्तक्रमेणादित्यप्रभृतीन् धिष्ण्यानुपस्थायापरया द्वार सदः प्रविशन् सदोद्वार्ये अभिमृश्य शालामुखीयाद्युपस्थितांश्चानुपस्थितांश्चोपस्थाय **उरुं नः** इति प्रविश्य पश्चात् स्वस्य धिष्ण्यस्य निरसनोपवेशने कृत्वोपविश्य **यो अद्य** इति जपति । उपविष्टेऽच्छावाके ब्रह्माग्नीध्रीयं प्राप्नोति । इतरे होत्रदयोऽप्यनुपविष्ट एवाच्छावाके विसंस्थितसंचरेणाग्नीध्रीयं प्राप्ता भवेयुः । अच्छावाकः सादसि पुरोडाशं प्राश्याचम्य विसंस्थितसंचरेणाग्नीध्रीयं प्राप्य सर्वे हविरुच्छिष्टं प्राश्नीयुराग्नीध्रीये बहिर्वेद्याम् । प्राश्य विसंस्थितसंचरेण प्रतिप्रसर्पन्ति ।

**ऋतुयाजाः**

तेषां यागक्रमो वक्ष्यते– येन येन प्रैषेण यथाप्रैषं यो यः प्रेषितस्तेन तेनैव प्रैषेण स स एव यजति । नानुवषट्कारः ।

प्रशास्ता– **होता यक्षदिन्द्रं होत्रात् सजूर्दिव आपृथिव्या ऋतुना सोमं पिबतु होतर्यज ॥**

होता– **ये३ यजामह इन्द्रं होत्रात् सजूर्दिव आपृथिव्या ऋतुना सोमं पिबतू३ वौ३षट् ॥**

प्रशास्ता– **होता यक्षन्मरुतः पोत्रात् सुष्टुभः स्वर्का ऋतुना सोमं पिबन्तु पोतर्यज ॥**

पोता– **ये३ यजामहे मरुतः पोत्रात् सुष्टुभः स्वर्का ऋतुना सोमं पिबन्तू३ वौ३षट् ॥**

प्रशास्ता– **होता यक्षद ग्रावो नेष्ट्रात् त्वष्टा सुजनिमा सजूर्देवानां पत्नीभिर्ऋतुना सोमं पिबतु नेष्टर्यज ॥**

नेष्टा– **ये३ यजामहे ग्रावो नेष्ट्रात् त्वष्टा सुजनिमा सजूर्देवानां पत्नीभिर्ऋतुना सोमं पिबतू३ वौ३षट् ॥**

प्रशास्ता– **होता यक्षदग्निमाग्नीध्रादृतुना सोमं पिबत्वग्नीद्यज ॥**

अग्नीत्– **ये३ यजामहेऽग्निमाग्नीध्रादृतुना सोमं पिबतू३ वौ३षट् ॥**

प्रशास्ता– **होता यक्षदिन्द्रो ब्रह्मा ब्राह्मणादृतुना सोमं पिबतु ब्रह्मन् यज ॥**

ब्राह्मणाच्छंसी– **ये३ यजामह इन्द्रो ब्रह्मा ब्राह्मणादृतुना सोमं पिबतू३ वौ३षट् ॥**

प्रशास्ता– **होता यक्षन्मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादृतुना सोमं पिबतां प्रशास्तर्यज ॥** दण्डं निधायोपविश्य–

प्रशास्ता– **ये३ यजामहे मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादृतुना सोमं पिबता३ं वौ३षट् ॥**

प्रशास्ता– **होता यक्षद्देवं द्रविणोदां होत्रादृतुभिः सोमं पिबतु होतर्यज ॥**

होता– **ये३ यजामहे देवं द्रविणोदां होत्रादृतुभिः सोमं पिबतू३ वौ३षट् ॥**

प्रशास्ता– **होता यक्षद्देवं द्रविणोदां पोत्रादृतुभिः सोमं पिबतु पोतर्यज ॥**

पोता– **ये३ यजामहे देवं द्रविणोदां पोत्रादृतुभिः सोमं पिबतू३ वौ३षट् ॥**

प्रशास्ता– **होता यक्षद्देवं द्रविणोदां नेष्ट्रादृतुभिः सोमं पिबतु नेष्टर्यज ॥**

नेष्टा – **ये३ यजामहे देवं द्रविणोदां नेष्ट्रादृतुभिः सोमं पिबतू३ वौ३षट् ॥**

प्रशास्ता– **होता यक्षद्देवं द्रविणोदामपाद्धोत्रादपात् पोत्रादपान्नेष्ट्रात्तुरीयं पात्रममृक्तममर्त्यमिन्द्रपानं देवो द्रविणोदा द्राविणोदसः स्वयमायूयाः स्वयमभिगूर्याः स्वयमभिगूर्तया होत्रय ऋतुभिः सोमस्य पिबत्वच्छावाक यज ॥**

अच्छावाकः– **ये३ यजामहे देवं द्रविणोदामपाद्धोत्रादपात् पोत्रादपान्नेष्ट्रात्तुरीयं पात्रममृक्तममर्त्यमिन्द्रपानं देवो द्रविणोदा द्राविणोदसः स्वयमायूयाः स्वयमभिगूर्याः स्वयमभिगूर्तया होत्रय ऋतुभिः सोमस्य पिबतू३ वौ३षट् ॥**

प्रशास्ता– **होता यक्षदश्विनाध्वर्यू आध्वर्यवादृतुना सोमं पिबतामध्वर्यू यजतम् ॥**

अध्वर्युगृहपतिभ्यां **होतरेतद्यज** इत्युक्तो होता यजति ।

होता– **ये३ यजामहेऽश्विनाध्वर्यू आध्वर्यवादृतुना सोमं पिबता३ं वौ३षट् ॥**

प्रशास्ता–**होता यक्षदग्निं गृहपतिं गार्हपत्यात् सुगृहपतिस्त्वयाग्नेयं सुन्वन् यजमानः स्यात् सुगृहपतिस्त्वमनेन सुन्वता यजमानेनाग्निर्गृहपतिर्गार्हपत्यादृतुना सोमं पिबतु गृहपते यज ॥**

**होतरेतद्यज** इत्युक्तो होता– **ये३ यजामहे ग्निं गृहपतिं गार्हपत्यात् सुगृहपतिस्त्वयाग्नेयं सुन्वन् यजमानः स्यात् सुगृहपतिस्त्वमनेन सुन्वता यजमानेनाग्निर्गृहपतिर्गार्हपत्यादृतुना सोमं पिबतू३ वौ३षट् ॥**

अथैतदृतुपात्रमानन्तर्येण वषट्कारक्रमेणैव वषट्कर्तारो भक्षयन्ति । येषां याज्यासु प्रतिप्रस्थात्रा होमः कृतस्ते तमेवोपहूय भक्षयन्ति । अ एव तेषां प्रतिभक्षयिता ।

**अथाज्यशस्त्रम् ।**

अध्वर्युर्होतृमुखत आसीनः पराङावर्तते । तस्मिन् पराङ् व्यावृत्ते होता–

**सुमत्पद्वग्दे पिता मातरिश्वाच्छिद्रापदाधादच्छिद्रोक्था कवयः शंसन् । सोमो विश्वविन्नीथा निनेषद् बृहस्पतिरुक्थामदानि शंसिषद् वागायुर्विश्वायुर्विश्वमायुः क इदं शंसिष्यति स इदं शंसिष्यति** इति जपित्वानभिहिंकृत्य शोंसावोमित्युच्चैराहूय तूष्णीं शंसं शंसेदुपांशु सप्रणवमसन्तन्वन् । **शो३ंसावो३ं भूरग्निर्ज्योतिर्ज्योतिरग्नो३म् । इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रो३म् । सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यो३म् ।** इति त्रिपदस्तूष्णीं शंसः । यद्यु वै षट्पदः पूर्वैर्ज्योतिःशब्दैरग्रेऽवस्येत् ।

**अग्निर्देवेद्धः । अग्निर्मन्विद्धः । अग्निः सुषमित् । होता देववृतः । होता मनुवृतः । प्रणीर्यज्ञानाम् । रथीरध्वराणाम् । अतूर्तो होता । तूर्णिर्हव्यवाट् । आ देवो देवान् वक्षत् । यक्षदग्निर्देवो देवान् । सो अध्वरा करति जातवेदो३ं**

**प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै । गमद्देवेभिरासनो यजिष्ठो बर्हिरा सदो३म्** इति त्रिः

**ऋतावा यस्य रोदसी दक्षं सचन्त ऊतयः । हविष्मन्तस्तमीळते तं सनिष्यन्तोऽवसो३ं**

**स यन्ता विप्र एषां स यज्ञानामथा हि षः । अग्निं तं वो दुवस्यत दाता यो वनिता मघो३ं**

**स नः शर्माणि वीतयेऽग्निर्यच्छतु शन्तमा । यतो नः दिवि क्षितिभ्यो अप्स्वो३ं**

**दीदिवांसमपूर्व्यं वस्वीभिरस्य धीतिभिः । ऋक्वाणो अग्निमिन्धते होतारं विश्पतिं विशो३म्**

**उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः । शं नः शोचा मरुद्वृधोऽग्ने सहस्रसातमो३ं**

**शो३ंसावो३ं नू नो रास्व सहस्रवत् तोकवत् पुष्टिमद्वसु । द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितो३म्** [३ ।१३ ।१–७]

इति त्रिः परिधाय **उक्थं वाचि घोषाय त्वा** इति शस्त्वा जपेत् । **उक्थशा यज** इति प्रेषितः–

**ये३ यजामह अग्न इन्द्रश्च दाशुषो दुरोणे सुतावतो यज्ञमिहोपयातममर्धन्ता सोमपेयाय देवा३ वौ३षट् ॥** [३ ।२५ ।४]

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । शस्त्राणामारभ्यासमाप्तेर्वाग्यमनम् । आपद्य **अतो देवा अवन्तु नः** इति जपेदपि वान्यां वैष्णवीमृचम् । उक्थपात्रमग्रे भक्षयेद्द्विः । ततः सर्वे चमसिनश्चमसान् भक्षयन्ति **अध्वर्य उपह्वयस्व, चमसिन उपह्वयध्वम्** इति वोक्त्वा । उक्तमाप्यायनम् ।

शस्त्रस्वरः प्रतिगर **ओथामो दैव** इति । **शो३ंसामो दैव** इत्याहावे । प्लुतादिः प्रणवेऽप्लुतादिरवसाने । प्रणवे प्रणव आहावोत्तरे । अवसाने च । प्रणवान्तो वा । यत्र यत्र चान्तःशस्त्रं रणवेनावस्यति प्रणवान्त एव तत्र प्रतिगरः । शस्त्रान्ते तु प्रणवः ।

**ब्रह्मन् त्स्तोष्यामः** इत्यादि **स्तुध्वम्** इत्यन्तं पूर्ववत् ।

**अथ प्रउगशस्त्रम्**

प्रस्तोत्रा **एष** इति प्रोक्त उद्गातुर्हिङ्कारे प्रातः सवने शस्त्रायाह्वयीरन् ।

**हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३ं**

**वायुरग्रेगा यज्ञप्रीः साकं गन् मनसा यज्ञम् । शिवो नियुद्भिः शिवाभो३ं**

**वायवा याहि दर्शतेमे सोमा अरङ्कृताः । तेषां पाहि श्रुधी हवो३ं** इति त्रिः

**वाय उक्थेभिर्जरन्ते त्वामच्छा जरितारः । सुतसोमा अहर्विदो३ं**

**वायो तव प्रपृञ्चती धेना जिगाति दाशुषे । उरूची सोमपीतयो३ं**

**शो३ंसावो३ं हिरण्यवर्तनी नरा देवा पती अभिष्टये । वायुश्चेन्द्रश्च सुमखो३म्**

**इन्द्रवायू इमे सुता उप प्रयोभिरागतम् । इन्द्वो वामुशन्ति हो३ं**

**वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू । तावायातमुप द्रवो३ं**

**वायविन्द्रश्च सुन्वत आ यातमुपनिष्कृतम् । मक्ष्वित्था धिया नरो३ं**

**शो३ंसावो३ं काव्या राजाना ऋत्वा दक्षस्य दुरोणे । रिशादसा सधस्थ ओ३ं**

**मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीं साधन्तो३म्**

**ऋतेन मित्रावरुणावृतावृधावृतस्पृशा । ऋतुं बृहन्तमाशाथो३ं**

**कवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अपसो३ं**

**शो३ंसावो३ं दैव्या अध्वर्यू आगतं रथेन सूर्यत्वचा । मध्वा यज्ञं समञ्जाथो३म्**

**अश्विना यज्वरीरिषा द्रवत्पाणी शुभस्पती । पुरुभुजा चनस्यतो३म्**

**अश्विना पुरुदंससा नरा शवीरया धिया । धिष्ण्या वनतं गिरो३ं**

**दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः । आ यातं रुद्रवर्तनो३ं**

**शो३ंसावो३मिन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च वाजपतिः । हरिवन् सुतानां सखो३म्**

**इन्द्रा याहि चित्रभानो सुता इमे त्वायवः । अण्वीभिस्तना पूतासो३म्**

**इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतो३म्**

**इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनो३ं**

**शो३ंसावो३ं विश्वान् देवान् हवामहेऽस्मिन् यज्ञे सुपेशसः ।**

**त इमं यज्ञमागमन् देवासो देव्या धिया ॥**

**जुषाणा अध्वरे सदो ये यज्ञस्य तनूकृतः । विश्व आ सोमपीतयो३म्**

**ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वांसो दाशुसः सुतो३ं**

**विश्वे देवासो अप्तुरः सुतमा गन्त तूर्णयः । उस्रा इव स्वसराणो३ं**

**विश्वे देवासो अस्रिध एहिमायासो अद्रुहः । मेधं जुषन्त वह्नयो३ं**

**शो३ंसावो३ं वाचमहं देवीं वाचास्मिन् यज्ञे सुपेशसा । सरस्वतीं हवामहो३ं**

**पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसोꣳ**

**चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वतोꣳ**

**शोꣳसावो३म् महो अर्णः सरस्वती प्रचेतयति केतुना । धियो विश्वा विराजतो३म्** इति त्रिः परिदध्यात् ।

**ये३ यजामहे विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना पिबा मित्रस्य धामभी३ वौ३षट्** ॥ [१ ।१४ ।४०]

**अथ मैत्रावरुणशस्त्रम् ।**

प्रस्तोत्रा **एष** इति प्रोक्त उद्गातुर्हिङ्कारे **हिम् भूर्भुवःस्वरो३म् । शोꣳसावो३म्**

**आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजांसि सुक्रतो३म्** (इति त्रिः)

**उरुशंसा नमोवृधा मह्ना दक्षस्य राजथः । द्राघिष्ठाभिः शुचिव्रतोꣳ**

**गृणाना जमदग्निना योनावृतस्य सीदतम् । पातं सोममृतावृधोꣳ** [३ ।६२ ।१६–१८]

**शोꣳसावो३ मा नो गन्तं रिशादसा वरुण मित्र बर्हणा । उपेमं चारुमध्वरोꣳ**

**विश्वस्य हि प्रचेतसा वरुण मित्र राजथः । ईशाना पिप्यतं धियो३म्**

**उप नः सुतमा गतं वरुण मित्र दाशुषः । अस्य सोमस्य पीतायोꣳ** [५ ।७१ ।१–३]

**शोꣳसावोꣳ प्र वो मित्राय गायत वरुणाय विपा गिरा । महिक्षत्रावृतं बृहोꣳ**

**सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च । देवा देवेषु प्रशस्तोꣳ**

**ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य । महि वां क्षत्रं देवेषो३म्**

**ऋतमृतेन सपन्तेषिरं दक्षमाशाते । अद्रुहा देवौ वर्धतोꣳ**

**वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः । बृहन्तं गर्तमाशातोꣳ**

**प्र मित्रयोर्वरुणयोः स्तोमो न एतु शूष्यः । नमस्वान् तुविजातयोꣳ**

**या धारयन्त देवाः सुदक्षा दक्षपितरा । असुर्याय प्रमहसोꣳ**

**ता नः स्तिपा तनूपा वरुण जरितॄणाम् । मित्र साधयतं धियोꣳ**

**यदद्य सूर उदितेऽनागा मित्रो अर्यमा । सुवाति सविता भगोꣳ**

**सुप्रावीरस्तु स क्षयः प्र नु यमन्त्सुदानवः । ये नो अंहोतिपिप्रतो३म्**

**उत स्वराजो असितिरदब्धस्य व्रतस्य ये । महो राजान ईशतोꣳ**

**प्रति वां सूर उदिते मित्रं गृणीषे वरुणम् । अर्यमणं रिशादसोꣳ**

**राया हिरण्यया मतिरियमवृकाय शवसे । इयं विप्रा मेधसातयोꣳ**

**शोꣳसावोꣳ ते स्याम देव वरुण ते मित्र सूरिभिः सह । इषं स्वश्च धीमहो३म्** [७ ।६६ ।१–९]

इति त्रिः परिदध्यात् ।

**ये३ यजामह आ यातं मित्रावरुणा जुषाणावाहुतिं नरा पातं सोममृतावृधा३ वौ३षट्** ॥ [७ ।६६ ।१९]

**अथ ब्राह्मणाच्छंसिशस्त्रम् ।**

प्रस्तोत्रा **एष** इति प्रोक्त उद्गातुर्हिङ्कारे **हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**

**आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो ममो३म्** (इति त्रिः)

**आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना । उप ब्रह्माणि नः शृणो३ं**

**ब्रह्माणस्त्वा वयं युजा सोमपामिन्द्र सोमिनः । सुतावन्तो हवामहो३ं**

**शो३ंसावो३मा नो याहि सुतावतोऽस्माकं सुष्टुतीरुप । पिबा सु शिप्रिन्नन्धसो३म्**

**आ ते सिञ्चामि कुक्ष्योरनु गात्रा विधावतु । गृभाय जिह्वया मधो३ं**

**स्वादुष्टे अस्तु संसुदे मधुमान् तन्वे तव । सोमः शमस्तु ते हृदो३ं**

**शो३ंसावो३मयमु त्वा विचर्षणे जनीरिवाभि संवृतः । प्र सोम इन्द्र सर्पतो३ं**

**तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे । इन्द्रो वृत्राणि जिघ्नतो३म्**

**इन्द्र प्रेहि पुरस्त्वं विश्वस्येशान ओजसा । वृत्राणि वृत्रहञ्जहो३ं**

**दीर्घस्ते आस्त्वङ्कुशो येना वसु प्रयच्छसि । यजमानाय सुन्वतो३म्**

**अयं त इन्द्र सोमो निपूतो अधि बर्हिषि । एहीमस्य द्रवा पिबो३ं**

**शाचिगो शाचिपूजनायं रणाय ते सुतः । आखण्डल प्रहूयसो३ं**

**यस्ते शृङ्गवृषो नपात् प्रणपात् कुण्डपाय्यः । न्यस्मिन् दध्र आमनो३म्** [८ ।१७ ।१–१३]

**इन्द्र त्वा वृषभं वयं सुते सोमे हवामहे । स पाहि मध्वो अन्धसो३म्**

**इन्द्र क्रतुविदं सुतं सोमं हर्य पुरुष्टुत । पिबा वृषस्व तातृपो३म्**

**इन्द्र प्र णो धितावानं यज्ञं विश्वेभिर्देवेभिः । तिरस्तवान विश्पतो३म्**

**इन्द्र सोमाः सुता इमे तव प्रयन्ति सत्पते । क्षयं चन्द्रास इन्दवो३ं**

**दधिष्वा जटरे सुतं सोममिन्द्र वरेण्यम् । तव द्युक्षास इन्दवो३ं**

**गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे । इन्द्र त्वादातमिद्यशो३म्**

**अभि द्युम्नानि वनिन इन्द्रं सचन्ते अक्षिता । पीत्वी सोमस्य वावृधो३म्**

**अर्वावतो न आ गहि परावतश्च वृत्रहन् । इमा जुषस्व नो गिरो३ं**

**यदन्तरा परावतमर्वावतं च हूयसे । इन्द्रेह तत आ गहो३म्** [३ ।४० ।१–९]

**उद्घेदभि श्रुतामघं वृषभं नर्यापसम् । अस्तारमेषि सूर्यो३ं**

**नव यो नवतिं पुरो बिभेद बाह्वोजसा । अहिं च वृत्रहावधो३ं**

**शो३ंसावो३ं स न इन्द्रः शिवः सखाश्वावद्गोमद्यवमत् । उरुधारेव दोहतो३म्** [८ ।९३ ।१–३]

इति त्रिः परिदध्यात् ।

**ये३ यजामह इन्द्र क्रतुविदं सुतं सोमं हर्य पुरुष्टुत पिबा वृषस्व तातृपी३ं वौ३षट् ॥** [३ ।४० ।२]

**अथाच्छावाकशस्त्रम् ।**

प्रस्तोत्रा **एष** इति प्रोक्त उद्गातुर्हिङ्कारे **हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**
**इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषितो३म्** इति त्रिः
**इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः । अया पातमिमं सुतो३म्**
**इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे । ता सोमस्येह तृम्पतो३ं** [३ ।१२ ।१–३]
**शो३ंसावो३मिन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः । ऋतस्य पथ्या अनो३म्**
**इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च । युवोरप्तूर्यं हितो३म्**
**इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यो३ं** [३ ।१२ ।७–९]
**शो३ंसावो३ं तोशा वृत्रहणा हुवे सजित्वानापराजिता । इन्द्राग्नी वाजसातमो३ं**
**प्र वामर्चन्त्युक्थिनो निथाविदो जरितारः । इन्द्राग्नी इष आ वृणो३म्**
**इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणो३म्** [३ ।१२ ।४–६]
**इहेन्द्राग्नी उप ह्वये तयोरित् स्तोममुश्मसि । ता सोमं सोमपातमो३ं**
**ता यज्ञेषु प्रशंसतेन्द्राग्नी शुम्भता नरः । ता गायत्रेषु गायतो३ं**
**ता मित्रस्य प्रशस्तय इन्द्राग्नी ता हवामहे । सोमपा सोमपीतयो३म्**
**उग्रा सन्ता हवामह उपेदं सवनं सुतम् । इन्द्राग्नी एह गच्छतो३ं**
**ता महान्ता सदस्पती इन्द्रग्नी रक्ष उब्जतम् । अप्रजाः स्न्त्वत्रिणो३ं**
**तेन सत्येन जागृतमधि प्रचेतुने पदे । इन्द्राग्नी शर्म यच्छतो३म्** [१ ।२१ ।१–६]
**इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः । अभ्राद्वृष्टिरिवाजनो३ं**
**शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः । ईशाना पिप्यतं धियो३ं**
**मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये । मनो रीरधतं निदो३म्**
**इन्द्रे अग्ना नमो बृहत् सुवृक्तिमेरयामहे । धिया धेना अवस्यवो३ं**
**ता हि शश्वन्त ईळत इत्था विओरास ऊतये । सबाधो वाजसातयो३ं**
**ता वां गीर्भिर्विपन्यवः प्रयस्वन्तो हवामहे । मेधसाता सनिष्यवो३म्**
**इन्द्राग्नी अवसा गतमस्मभ्यं चर्षणीसहा । मा नो दुःशंस ईशतो३ं**
**मा कस्य नो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । इन्द्राग्नी शर्म यच्छतो३ं**
**शो३ंसावो३ं गोमद्धिरण्यवद्वसु यद्वामश्वावदीमहे । इन्द्राग्नी तद्वनेमहो३म्** [७ ।९४ ।१–९]
इति त्रिः परिदध्यात् ।
**ये३ यजामह इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता३ वौ३षट् ॥** [३ ।१२ ।१]

अथ माध्यन्दिनं सवनम्

ग्रावस्तुदभिष्टवनम् ।

अभि त्वा देव सवितरीशानं वार्याणाम् । सदावन् भागमीमहो३ं इति त्रिः [१ ।२४ ।३]

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।

वि होत्रा दधेवयुनाविदेक इन् मही देवस्य सवितुः परिष्टुतो३म् [५ ।८१ ।१]

आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय । मह हस्ती दक्षिणेनो३म् [८ ।८२ ।१]

मा चिदन्यद् विशंसत सखायो मारिषण्यत ।

इन्द्रमित् स्तोता वृषणं सचा सुते मुहुरुक्था च शंसतो३ं [८ ।१ ।१]

प्रैते वदन्तु ओर वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः ।

यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनो३म्

एते वदन्ति शतवत् सहस्रवदभि क्रन्दन्ति हरितेभिरासभिः ।

विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित् पूर्वे हविरद्यमाशतो३म्

एते वदन्त्यविदन्नना मधु न्यूङ्खयन्ते अधि पक्व आमिषि ।

वृक्षस्य शाखामरुणस्य बप्सतस्ते सूभर्वा वृषभाः प्रेमराविषो३ं

बृहद्वदन्ति मदिरेण मन्दिनेन्द्रं क्रोशन्तोऽविदन्नना मधु ।

संरभ्या धीराः स्वसृभिरनर्तिषुराघोषयन्तः पृथिवीमुपब्दिभो३ं

सुपर्णा वाचमक्रतोप द्यव्याखरे कृष्णा इषिरा अनर्तिषुः ।

न्यङ्नि यन्त्युपरस्य निष्कृतं पुरू रेतो दधिरे सूर्यश्वितो३म्

उग्राइव प्रवहन्तः समायमुः साकं युक्ता वृषणो बिभ्रतो धुरः ।

यच्छ्वसन्तो जग्रसाना अराविषुः शृण्व एषां प्रोथतो अर्वतामिवो३ं

दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः ।

दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यो३ं

ते अद्रयो दशयन्त्रास आशवस्तेषामाधानं पर्येति हर्यतम् ।

त ऊ सुतस्य सोम्यस्यान्धसोंऽशोः पीयूषं प्रथमस्य भेजिरो३ं

ते सोमादो हरी इन्द्रस्य निंसतेंऽशुं दुहन्तो अध्यासते गवि ।

तेभिर्दुग्धं पपिवान्त्सोम्यं मध्विन्द्रो वर्धते प्रथते वृषायतो३ं

वृषा वो अंशुर्न किला रिषाथनेळावन्तः सदमित् स्थनाशिताः ।

रैवत्येव महसा चारवः स्थन यस्य देवा ग्रावाणो अजुषध्वमध्वरो३ं

तृदिला अतृदिलासो अद्रयोऽश्रमणा अशृथिता अमृत्यवः ।

अनातुरा अजराः स्थामविष्णवः सुपीवसो अतृषिता अतृष्णजो३ं
ध्रुवा एव वः पितरो युगेयुगे क्षेमकामासः सदसो न युञ्जते ।
अजुर्यासो हरिषाचो हरिद्रव आ द्यां रवेण पृथिवीमशुश्रवो३ं
तदिद्वदन्त्यद्रयो विमोचने यामन्नञ्जस्पाइव घेदुपब्दिभिः ।
वपन्तो बीजमिव धान्याकृतः पृञ्चन्ति सोमं न मिनन्ति बप्सतो३म् [१० ।९४ ।१–१३]
आ व ऋञ्जस ऊर्जां व्युष्टिष्विन्द्रं मरुतो रोदसी अनक्तन ।
उभे यथा नो अहनी सचाभुवा सदःसदो वरिवस्यात उद्भिदो३ं
तदु ज्येष्ठं सवनं सुनोतनात्यो न हस्तयतो अद्रिः सोतरि ।
विदद्ध्यर्यो अभिभूति पौंस्यं महो राये चित् तरुते यदर्वतो३ं
तदिद्ध्यस्य सवनं विवेरपो यथा पुरा मनवे गातुमश्रेत् ।
गोअर्णसि त्वाष्ट्रे अश्वनिर्णिजि प्रेमध्वरेष्वध्वराँ अशिश्रयो३म्
अप हत रक्षसो भङ्गुरावतः स्कभायत निर्ऋतिं सेधतामतिम् ।
आ नो रयिं सर्ववीरं सुनोतन देवाव्यं भरत श्लोकमद्रयो३ं
दिवश्चिदा वोऽमवत्तरेभ्यो विभ्वना चिदाश्वपस्तरेभ्यः ।
वायोश्चिदा सोमरभस्तरेभ्योऽग्नेश्चिदर्च पितुकृत्तरेभ्यो३ं
भुरन्तु नो यशसः सोत्वन्धसो ग्रावाणो वाचा दिविता दिवित्मता ।
नरो यत्र दुहते काम्यं मध्वाघोषयन्तो अभितो मिथस्तुरो३ं
सुन्वन्ति सोमं रथिरासो अद्रयो निरस्य रसं गविषो दुहन्ति ते ।
दुहन्त्यूधरुपसेचनाय कं नरो हव्या न मर्जयन्त आसभो३म्
एते नरः स्वपसो अभूतन य इन्द्राय सुनुथ सोममद्रयः ।
वामंवामं वो दिव्याय धाम्ने वसुवसु वः पार्थिवाय सुन्वतो३ं [१० ।७६]
प्र वो ग्रावाणः सविता देवः सुवतु धर्मणा । धूर्षु युज्यध्वं सुनुतो३ं
ग्रावाणो अप दुच्छुनामप सेधत दुर्मतिम् । उस्राः कर्तन भेषजो३ं
ग्रावाण उपरेष्वा महीयन्ते सजोषसः । वृष्णे दधतो वृष्ण्यो३ं
ग्रावाणः सविता नु वो देवः सुवतु धर्मणा । यजमानाय सुन्वतो३ं [१० ।१७५]
स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतो३ं [९ ।१ ।१]
सुते अध्वरे अधि वाचमक्रता क्रीळयो न मातरं तुदन्तः ।
वि षू मुञ्चा सुषुवुषो मनीषां वि वर्तन्तामद्रयश्चायमानो३म् [१० ।९४ ।१४] इति त्रिः परिदध्यात् ।
दधिघर्मेण चरन्ति प्रवर्ग्यवांश्चेत् । तस्योक्तमृगावानं घर्मेण । इज्या भक्षिणश्च । **होतर्वदस्व** इत्युक्तः

**उत्तिष्ठाताव पश्यतेन्द्रस्य भागमृत्वियं यदि श्रातो जुहोतन यद्यश्रातो ममत्तनो४म्** इत्याह ।

**श्रातं हविः** इत्युक्तोऽन्वाह–

**श्रातं हविरोष्विन्द्र प्र याहि जगाम सूरो अध्वनो विमध्यं**

**परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरन्तो४म्** ॥

**दधिघर्मस्य यज** इति प्रेषितः–

**ये३ यजामहे श्रातं मन्य ऊधनि श्रातमग्नौ सुश्रातं मन्ये तदृतं नवीयो**

**माध्यन्दिनस्य सवनस्य दध्नः पिबेन्द्र वज्रिन् पुरुकृज्जुषाणा३ वौ३षट्** ॥ [१० ।१७९]

**अग्ने वीही३ वौ३षट्** इति अनुवषट्कारः । **दधिघर्मस्याग्ने वीही३ वौ३षट्** इति वा । द्विर्वागोजः ।

**मयि त्यदिन्द्रियं बृहन्मयि द्युम्नमुत क्रतुः । त्रिश्रुद्धर्मो विभातु मा आकूत्या मनसा सह । विराजा ज्योतिषा सह ।**

**तस्य दोहमशीय ते तस्य त इन्द्रपीतस्य त्रिष्टुप्छन्दस उपहूतस्योपहूतो भक्षयामि** इति भक्षजपः ।

सवनीयानां पुरस्ताद्वोपरिष्टाद्वा पशुपुरोडाशेन चरन्ति ।

पशुपुरोडाशे प्रशास्ता– **अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा ।**

**पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयो४म्** ॥ [१ ।१८९ ।२]

**होता यक्षदग्निं पुरोळाशस्य जुषतां हविर्होतर्यज ।**

होता– **ये३ यजामहे यथा विप्रस्य मनुषो हविर्भिर्देवो अयजः कविभिः कविः सन् ।**

**एवा होतः सत्यतर त्वमद्याग्ने मन्द्रया जुह्वा यजस्वा३ वौ३षट्** ॥ [१ ।७६ ।५]

सवनीयपुरोडाशे प्रशास्ता– **माध्यन्दिनस्य सवनस्य धानाः पुरोळाशमिन्द्र कृष्वेह चारुम् ।**

**प्रयत् स्तोता जरिता तूर्ण्यर्थो वृषायमाण उप गीर्भिरीट्टो३म्** ॥ [३ ।५२ ।५]

**होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपः ।**

**माध्यन्दिनस्य सवनस्य पुरोळाशाँ इन्द्रः प्रस्थितां जुषाणो वेतु होतर्यज ।**

होता– **ये३ यजामहे हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपः ।**

**माध्यन्दिनस्य सवनस्य पुरोळाशाँ इन्द्रः प्रस्थितां जुषाणो वेतू३ वौ३षट् ।**

स्विष्टकृति प्रशास्ता– **माध्यन्दिने सवने जातवेदः पुरोळाशमिह कवे जुषस्व ।**

**अग्ने यह्वस्य तव भागधेयं न प्र मिनन्ति विदथेषु धीरो३म्** । [३ ।२८ ।४]

**होता यक्षदग्निं पुरोळाशानां जुषतां हविर्होतर्यज** ॥

होता– **ये३ यजामहे हविरग्ने वीही३ वौ३षट्** ॥

उन्नीयमानेभ्यः प्रेषितो मैत्रावरुणोऽनभिहिंकृत्य

असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच ।
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा नः स्तोममन्धसो मदेषो३म् इति त्रिः
प्र यन्ति यज्ञं विपयन्ति बर्हिः सोममादो विदथे दुध्रवाचः ।
न्यु भ्रियन्ते यशसो गृभादा दूरउपब्दो वृषणो नृषाचो३ं
त्वमिन्द्र स्रवितवा अपस्कः परिष्ठिता अहिना शूर पूर्वीः ।
त्वद्वावक्रे रथ्यो न धेना रेजन्ते विश्वा कृत्रिमाणि भीषो३ं
भिमो विवेषायुभिरेषामपांसि विश्वा नर्याणि विद्वान् ।
इन्द्रः पुरो जर्हृषाणो वि दूधोद्वि वज्रहस्तो महिना जघानो३ं
न यातव इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः ।
स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नो३म्
अभि क्रत्वेन्द्र भूरध ज्मन् न ते विव्यङ् महिमानं रजांसि ।
स्वेना हि वृत्रं शवसा जघन्थ न शत्रुरन्तं विविदद्युता तो३ं
देवाश्चित्ते असुर्याय पूर्वेऽनु क्षत्राय ममिरे सहांसि ।
इन्द्रो मघानि दयते विषह्येन्द्रं वाजस्य जोहुवन्त सातो३ं
कीरिश्चिद्धि त्वामवसे जुहावेशानमिन्द्र सौभगस्य भूरेः ।
अवो बभूथ शतमूते अस्मे अभिक्षत्तिस्त्वावतो वरूतो३ं
सखायस्त इन्द्र विश्वह स्याम नमोवृधासो महिना यरुत्र ।
वन्वन्तु स्मा तेऽवसा समीकेऽभीतिमर्यो वनुषां शवांसो३ं
स न इन्द्र त्वयताया इषे धास्त्मना च ये मघवानो जुनन्ति ।
वस्वी षु ते जरित्रे अस्तु शक्तिर्यूयं पात स्वस्तिभिः सदा नो३म् । [७ ।२१ ।१–१०] इति त्रिः परिदध्यात् ।
होता यक्षदिन्द्रं माध्यन्दिनस्य सवनस्य निष्केवल्यस्य भागस्यात्तारं पातारं श्रोतारं हवमागन्तारमस्या धियोऽवितारं सुन्वतो यजमानस्य वृधम् । ओभा कुक्षी पृणतां वार्त्रघ्नं च माघोनं चेमे अस्मै शुक्रा मधुश्चुतः प्रस्थिता इन्द्राय सोमास्तां जुषतां वेतु पिबतु सोमं होतर्यज ।
होता– ये३ यजामहे पिबा सोममभि यमुग्र तर्द ऊर्वं गव्यं महि गृणान इन्द्र ।
वि यो धृष्णो वधिषो वज्रहस्त विश्वा वृत्रममित्रिया शवोभी३ वौं३षट् ॥ [६ ।१७ ।१]
सोमस्याग्ने वीही३ वौ३षट् ॥ इत्यनुवषट्कारः । द्विर्वागोजः ।
प्रशास्तर्यज इति प्रेषितः प्रशास्ता–
ये३ यजामहे स ईं पाहि य ऋजीषी तरुत्रो यः शिप्रवान् वृषभो यो मतीनाम् ।
यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः स इन्द्र चित्राँ अभि तृन्धि वाजा३ न्वौ३षट् ॥ [६ ।१७ ।२]

**सोमस्याग्ने वीही३ वौ३षट्** ॥ द्विर्वागोजः ।

**ब्रह्मन् यज** इति प्रेषितो ब्राह्मणाच्छंसी–

**ये३ यजामह एवा पाहि प्रत्नथा मन्दतु त्वा श्रुधि ब्रह्म वावृधस्वोत गीर्भिः ।**

**आविःसूर्यं कृणुहि पीपिहीषो जहि शत्रूँरभि गा इन्द्र तृन्धी३ वौ३षट्** ॥ [६ ।१७ ।३]

**सोमस्याग्ने वीही३ वौ३षट्** ॥ द्विर्वागोजः ।

**पोतर्यज** इति प्रेषितः पोता–

**ये३ यजामहेऽर्वाघेहि सोमकामं त्वाहुरयं सुतस्तस्य पिबा मदाय ।**

**उरुव्यचा जठर आवृषस्व पितेव नः शृणुहि हूयमाना३ वौ३षट्** ॥ [१ ।१०४ ।९]

**नेष्टर्यज** इति प्रेषितो नेष्टा–

**ये३ यजामहे त्वायं सोमस्तमेह्यर्वाङ् शश्वत्तमं सुमना अस्य पाहि ।**

**अस्मिन् यज्ञे बर्हिष्या निषद्या दधिष्वेमम् जठर इन्दुमिन्द्रा३ वौ३षट्** ॥ [३ ।३५ ।६]

**सोमस्याग्ने वीही३ वौ३षट्** ॥ द्विर्वागोजः ।

**अच्छावाक यज** इति प्रेषितोऽच्छावाकः–

**ये३ यजामह इन्द्राय सोमाः प्रदिवो विदाना ऋभुर्येभिर्वृषपर्वा विहायाः ।**

**प्रयम्यमानान् प्रति षू गृभायेन्द्र पिब वृषधूतस्य वृष्णा३ वौ३षट्** । [३ ।३६ ।२]

**अग्नीद्यज** इति प्रेषितोऽग्नीत्–

**ये३ यजामह आपूर्णो अस्य कलशः स्वाहा सेक्तेव कोशं सिसिचे पिबध्यै ।**

**समु प्रिया आववृत्रन् मदाय प्रदक्षिणिदभि सोमास इन्द्रा३ं वौ३षट्** ॥ [३ ।३२ ।१५]

**सोमस्याग्ने वीही३ वौ३षट्** ॥ द्विर्वागोजः ।

अथ होता आगतमध्वर्युम् **अयाडग्नीत्** इति पृच्छति । **अयाट्** इत्यध्वर्युः प्रत्याह । **स भद्रमकर्यो नः सोमस्य पाययिष्यति** इति होता जपति । इडोपाह्वानादि समानमानाराशंससादनात् । न त्विह द्विदेवत्या । एतस्मिन् काले दक्षिणा नीयन्ते । उन्नेष्यमाणासु दक्षिणासु आग्नीध्रीये आहुती जुह्वति ।

**ददानीत्यग्निर्वदति वायुराह तथेति तत् । हन्तेति चन्द्रमाः सत्यमादित्यः सत्यमोमापस्तत् सत्यमाभरन् ।**

**दिशो यज्ञस्य दक्षिणा दक्षिणानां प्रियो भूयासं स्वाहा ।**

**प्राचि ह्येधि प्राचीं जुषाणा प्राच्याज्यस्य वेतु स्वाहा ।**

विहारदेशमतीत्य नीतेषु दक्षिणाद्रव्येषु यत् प्राणि द्रव्यं तदनुमन्त्रयेत ।

**क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी पतिगृह्णातु** इति । अभिमृशेदप्राणि कन्यां च । प्रतिगृह्याग्नीध्रीयं प्राप्य हविरुच्छिष्टं सर्वे प्राश्नीयुः । प्राश्य प्रतिप्रसृप्य मरुत्वतीयेन ग्रहेण चरन्ति

**इन्द्राय मरुत्वते प्रेष्य** इति प्रेषिते प्रशास्ता– **इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य ।**
**तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञो३म् ॥** [३ ।५१ ।७]
**होता यक्षदिन्द्रं मरुत्वन्तमिन्द्रो मरुत्वान् जुषतां वेतु पिबतु सोमं होतर्यज ॥**
होता– **ये३ यजामहे सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ।**
**जहि शत्रूँरप मृधो नुदस्वाथाभयं कृणुहि विश्वतो ना३ वौ३षट् ॥** [३ ।४७ ।२]
**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः ।
अध्वर्युं प्रतिप्रस्थातारं चोपहूय भक्षयित्वैतत् पात्रं मरुत्वतीयं शंसं शंसेत् ।
**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शो३ंसावो३म्**
**आ त्वा रथं यथितये सुम्याय वर्तयामसि ।**
**तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पतो३ं** इति त्रिः
**तुविशुष्म तुविक्रतो शचीवो विश्वया मते । आ पप्राथ महित्वनो३ं**
**यस्य ते महिना महः परिज्मायन्तमीयतुः । हस्ता वज्रं हिरण्ययो३ं** [८ ।६८ ।१–३]
**शो३ंसावो३म् इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम् । अनाभयिन् ररिमा तो३ं**
**नृभिर्धूत्तः सुतो अश्नैरव्यो वारैः परिपूतः । अश्वो न निक्तो नदीषो३ं**
**तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणन्तः । इन्द्र त्वास्मिन् त्सदमादो३ं** [८ ।२ ।१–३]
**शो३ंसावो३म् इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।**
**आ शन्तम शन्तमाभिरभिष्टिभिरास्वापे स्वापिभो३म्**
**आ स्वापे स्वापिभिराजितुरं सत्पतिं विश्वचर्षणिम् । कृधि प्रजास्वाभगो३ं**
**कृधि प्रजास्वाभगं प्र सू तिरा शचीभिर्ये त उक्थिनः । ऋतुं पुनत आनुषो३ं** [८ ।५३ ।५–६]
**शो३ंसावो३ं प्र नूनं ब्रह्मणस्पतिं मन्त्रं वदत्युक्थ्यम् ।**
**यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरो३ं**
**देवा ओकांसि चक्रिरे तमिद्वोचेमा विदथेषु शम्भुवम् । मन्त्रं देवा अनेहसो३ं**
**मन्त्रं देवा अनेहस्मिमां च वाचं प्रतिहर्यथा नरः । विश्वेद् वामा वो अश्नवो३ं** [१ ।४० ।५–६]
**शो३ंसावो३म् अग्निर्नेता भग इव क्षितीनाम् । दैवीनां देव ऋतुपा ऋतावो३ं**
**स वृत्रहा सनयो विश्ववेदाः । पर्षद्विश्वानि दुरिता गृणन्तो३ं** [३ ।२० ।४]
**शो३ंसावो३ं त्वं सोम ऋतुभिः सुक्रतूर्भूः । त्वं दक्षैः सुदक्षो विश्ववेदो३ं**
**त्वं वृषा वृषत्वेभिर्महित्वा । द्युम्नेभिर्द्युम्न्यभवो नृचक्षो३ं** [१ ।९१ ।२]
**शो३ंसावो३ं पिन्वन्त्यपो मरुतः सुदानवः । पयो घृतवद्विदथेष्वाभुवो३म्**
**अत्यं न मिहे विनयन्ति वाजिनम् । उत्सं दुहन्ति स्तनयन्तमक्षितो३ं** [१ ।६४ ।६]

शो३ंसावो३ं प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत । वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणो३म्
अभि प्र भर धृषता धृषन्मनः श्रवश्चित्ते असद्बृहत् ।
अर्षन्त्वापो जवसा वि मातरो हनो वृत्रं जया स्वो३ं [८ ।८९ ।३–४]
शो३ंसावो३ं जनिष्ठा उग्रः सहसे तुराय । मन्द्र ओजिष्ठो बहुलाभिमानो३म्
अवर्धन्निन्द्रं मरुतश्चिदत्र । माता यद्वीरं दधनद्धनिष्ठो३ं
द्रुहो निषत्ता पृशनी चिदेवैः । पुरूशंसेन वावृधुष्ट इन्द्रो३म्
अभीवृतेव ता महापदेन । ध्वान्तात् प्रपित्वादुदरन्त गर्भो३म्
ऋष्वा ते पादा प्र यज्जिगासि । अवर्धन् वाजा उत ये चिदत्रोप्३ं
त्वमिन्द्र सालावृकान् त्सहस्रम् । आसन् दधिषे अश्विना ववृत्यो३ं
समना तूर्णिरुप याहि यज्ञम् । आ नासत्या सख्याय वक्षो३ं
वसाव्यामिन्द्र धारयः सहस्रा । अश्विना शूर ददतुर्मघानो३ं
मन्दमान ऋतादधि प्रजायै । सखिभिरिन्द्र इषिरेभिरर्थो३म्
आभिर्हि माया उप दस्युमागात् । मिहः प्र तम्रा अवपत् तमांसो३ं
सनामाना चिद्ध्वसयो न्यस्मै । अवाहन्निन्द्र उषसो यथा नो३म्
ऋष्वैरगच्छः सखिभिर्निकामैः । साकं प्रतिष्ठा हृद्या जघन्थो३ं
शो३ंसावो३म् इन्द्रो मरुत्वान् त्सोमस्य पिबतु । मरुत्स्तोत्रो मरुद्गणः । मरुत्सखा मरुद्वृधः । घ्नन् वृत्रा सृजदपः । मरुतामोजसा सह । य ईमेनं देवा अन्वमदन् । अप्तूर्ये वृत्रतूर्ये । शम्बरहत्ये गविष्टौ । अर्चन्तं गुह्या पदा । परमस्यां परावति । आर्दीं ब्रह्माणि वर्धयन् । अनाधृष्टान्योजसा । कृण्वन् देवेभ्यो दुवः । मरुद्भिः सखिभिः सह । इन्द्रो मरुत्वाँ इह श्रवदिह सोमस्य पिबतु । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमो३ं
त्वं जघन्थ नमुचिं मखस्युम् । दासं कृण्वान ऋषये विमायो३ं
त्वं चकर्थ मनवे स्योनान् । पयो देवत्राञ्जसेव यानो३ं
त्वमेतानि पप्रिषे वि नाम । ईशान इन्द्र दधिषे गभस्तो३म्
अनु त्वा देवाः शवसा मदन्ति । उपरिबुध्नान् वनिनश्चकर्थो३ं
चक्रं यदस्याप्स्वा निषत्तम् । उतो तदस्मै मध्विच्चच्छद्यो३ं
पृथिव्यामतिषितं यदूधः । पयो गोष्वदधा ओषधीषो३म्
अश्वादियायेति यद्वदन्ति । ओजसो जातमुत मन्य एनो३ं
मन्योरियाय हर्म्येषु तस्थौ । यतः प्र जज्ञ इन्द्रो अस्य वेदो३ं
शो३ंसावो३ं वयः सुपर्णा उप सेदुरिन्द्रम् । प्रियमेधा ऋषयो नाधमानो३म्

**अप ध्वान्तमूर्णुहि पूर्धि चक्षुः । मुमुग्ध्यस्मान् निधयेव बद्धो३म्** [१० ।७३ ।१–११] इति अक्षिणी मृजानः परिदध्याद् ध्यायन्नेन आत्मनः । **उक्थं वाचीन्द्राय शृण्वते त्वा** इति शस्त्वा जपेत् ।

**ये३ यजामहे ये त्वाहिहत्ये मघवन्नवर्धन् ये शाम्बरे हरिवो ये गविष्टौ ।**

**ये त्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमं सगणो मरुद्भी३ वौँ३षट्** ॥ [३ ।४७ ।४]

**सोमस्याग्ने वीही३ वौ३षट्** ॥ द्विर्वागोजः ।

**अथ निष्केवल्यशस्त्रम् ।**

प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे **हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शो३ंसावो३म्**

**अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषो३म्** इति त्रिः

**ईशानमिन्द्र तस्थुषो न त्वावाँ अन्यो दिव्यो न पार्थिवः । न जातो न जनिष्यतो३ं**

**न जातो न जनिष्यतेऽश्वायन्तो मघवन्निन्द्र वाजिनः । गव्यन्तस्त्वा हवामहो३ं** [७ ।३२ ।२२–२३]

**शो३ंसावो३म् अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः । समीचीनास ऋभवः समस्वरन् रुद्रा गृणन्त पूर्व्यो३ं**

**रुद्रा गृणन्त पूर्व्यमस्येदिन्द्रो वावृधे वृष्ण्यं शवः । मदे सुतस्य विष्णवो३ं**

**मदे सुतस्य विष्ण्यद्या तमस्य महिमानमायवः । अनुष्टुवन्ति पूर्वथो३ं** [८ ।३ ।७–८]

**शो३ंसावो३ं यद्यावान पुरुतमं पुराषाट् । आ वृत्रहेन्द्रो नामान्यप्रो३म्**

**अचेति प्रासहस्पतिस्तुविष्मान् । यदीमुश्मसि कर्तवे करत् तो३ं** [१० ।७४ ।६]

**शो३ंसावो३ं पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः ।**

**आपिर्नो बोधि सधमाद्यो वृधे३ ऽस्माँ अवन्तु ते धियो३ं**

**भूयाम ते सुमतौ वाजिनो वयं मा नः स्तरभिमातये ।**

**अस्माञ्चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामयो३ं** [८ ।३ ।१–२]

**शो३ंसावो३म् इन्द्रस्य नु वीर्याणि प्रवोचम् । यानि चकार प्रथमानि वज्रो३म्**

**अहन्नहिमन्वपस्ततर्द । प्र वक्षणा अभिनत् पर्वतानो३म्**

**अहन्नहिं पर्वते शिश्रियाणम् । त्वष्टास्मै वज्रं स्वर्यं ततक्षो३ं**

**वाश्रा इव धेनवः स्यन्दमानाः । अञ्जः समुद्रमव जग्मुरापो३ं**

**वृषायमाणोऽवृणीत सोमम् । त्रिकद्रुकेष्वपिबत् सुतस्यो३म्**

**आ सायकं मघवादत्त वज्रम् । अहन्नेनं प्रथमजामहीनो३ं**

**यदिन्द्राहन् प्रथमजा महीनाम् । आन्मायिनाममिनाः प्रोत मायो३म्**

**आत् सूर्यं जनयन् द्यामुषासम् । तादीत्ना शत्रुं न किला विवित्सो३म्**

अहन् वृत्रं वृत्रतरं व्यंसम् । इन्द्रो वज्रेण महता वधेनो३ं
स्कन्धांसीव कुलिशेना विवृक्णा । अहिः शयत उपपृक् पृथिव्यो३म्
अयोद्धेव दुर्मद आ हि जुह्वे । महावीरं तुविबाधमृजीषो३ं
नातारीदस्य समृतिं वधानाम् । सं रुजानाः पिपिष इन्द्रशत्रो३म्
अपादहस्तो अपृतन्यदिन्द्रम् । आस्य वज्रमधि सानौ जघानो३ं
वृष्णो वध्रिः प्रतिमानं बुभूषन् । पुरुत्रा वृत्रो अशयद्व्यस्तो३ं
नदं न भिन्नममुया शयानम् । मनो रुहाणा अति यन्त्यापो३ं
याश्चिद्वृत्रो महिना पर्यतिष्ठत् । तासामहिः पत्सुतःशीर्बभूवो३ं
शो३ंसावो३म् इन्द्रो देवः सोमं पिबतु । एकजानां वीरतमः । भूरिजानां तवस्तमः । हर्योःस्थाता । पृश्नेः प्रेता ।
वज्रस्य भर्ता । पुरां भेत्ता । अपां स्रष्टा । अपां नेता । सत्वनां नेता । निजघ्निर्दूरेश्रवाः । उपमातिकृद्दंसनावान् ।
इहोशन् देवो बभूवान् । इन्द्रो देव इह श्रवदिह सोमस्य पिबतु । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म
प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमो३ं
नीचावया अभवद् वृत्रपुत्रा । इन्द्रो अस्या अव वधर्जभारो३म्
उत्तरा सूरधरः पुत्र आसीत् । दानुः शये सह वत्सा न धेनो३म्
अतिष्ठन्तीनामनिवेशनानाम् । काष्ठानां मध्ये निहितं शरीरो३ं
वृत्रस्य निण्यं विचरन्त्यापः । दीर्घं तम आशयदिन्द्रशत्रो३ं
दासपत्नीरहिगोपा अतिष्ठन् । निरुद्धा आपः पणिनेव गावो३म्
अपां बिलमपिहितं यदासीत् । वृत्रं जघन्वाँ अप तद्ववारो३म्
अश्व्यो वारो अभवस्तदिन्द्र । सृके यत् त्वा प्रत्यहन् देव एको३म्
अजयो गा अजयः शूर सोमम् । अवासृजः सर्तवे सप्त सिन्धो३ं
नास्मै विद्युन्न तन्यतुः सिषेध । न यां मिहमकिरद्ध्रादुनिं चो३म्
इन्द्रश्च यद्युयुधाते अहिश्च । उतापरीभ्यो मघवा वि जिग्यो३म्
अहेर्यातारं कमपश्य इन्द्र । हृदि यत् तेजघ्नुषो भीरगच्छो३ं
नव च यन्नवतिं च स्रवन्तीः । श्येनो न भीतो अतरो रजांसो३ं
शो३ंसावो३म् इन्द्रो यातोऽवसितस्य राजा । शमस्य च शृङ्गिणो वज्रबाहो३ं
सेदु राजा क्षयति चर्षणीनाम् । अरान् न नेमिः परि ता बभूवो३म् [३ ।३२] इति त्रिः परिदध्यात् ।
उक्थं वाचीन्द्रायोपशृण्वते त्वा इति शस्त्वा जपेत् ।
ये३ यजामहे पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ।
सोतुर्बाहुभ्यां सुयतो नार्वा३ वौ३षट् ॥ [७ ।२२ ।१]

**सोमस्याग्ने वीही३ वौ३षट्** ॥ द्विर्वागोजः ।

**बृहत् पृष्ठे स्तोत्रियनुरूपौ–**

**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शो३ंसावो३ं**

**त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेषिन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतो३ं** इति त्रिः

**नरस्त्वां काष्ठास्वर्वतः स त्वं नश्चित्र वज्रहस्त धृष्णुया । महः स्तवानो अद्रिवो३ं**

**महस्तवानो अद्रिवो गामश्वं रथमिन्द्र सं किर । सत्रा वाजं न जिग्युषो३ं** [६ ।४६ ।१–२]

**शो३ंसावो३ं त्वं ह्येहि चेरवे विदा भगम् वसुत्तये । उद्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टयो३म्**

**उदिन्द्राश्वमिष्टये त्वं पुरू शहस्राणि शतानि च । यूथा दानाय मंहसो३ं**

**यूथा दानाय मंहस आ पुरन्दरं चकृम विप्रवचसः । इन्द्रं गायन्तोऽवसो३म्** [८ ।६१ ।७–८]

सामप्रगाथः– **उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः ।**

**सत्राच्या मघवा सोमपीतये धिया शविष्ठ आ गमो३ं**

**तं हि स्वराजं वृषभं तमोजसे धिषणे निष्टतक्षतुः ।**

**उतोपमानां प्रथमो निषीदसि सोमकामं हि ते मनो३म्** । [८ ।६१ ।१–२] अन्यत् सर्वं समानम् ।

**मैत्रावरुणशस्त्रम् ।**

प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे **हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शो३ंसावो३ं**

**कया नश्चित्र आ भुवदूती सदवृधः सखा । कया शचिष्ठया वृतो३ं** इति त्रिः

**कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृह्ळा चिदारुजे वसो३म्**

**अभी षु णः सखीनामविता जरितृणाम् । शतं भवास्यूतिभो३ं** [४ ।३१ ।१–३]

**शो३ंसावो३ं कया त्वं न ऊत्याभि प्र मन्दसे वृषन् । कया स्तोतृभ्य आ भरो३ं**

**कस्य वृषा सुते सचा नियुत्वान् वृषभो रणत् । वृत्रया सोमपीतयो३म्**

**अभी षु णस्त्वं रयिं मन्दसानः सहस्रिणम् । प्रयन्ता बोधि दाशुषो३ं** [८ ।९३ ।१९–२१]

**शो३ंसावो३ं कस्तमिन्द्र त्वा वसुमा मर्त्यो दधर्षति ।**

**श्रद्धा इत् ते मघवन् पार्ये दिवि वाजी वाजं सिषासतो३म्**

**मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिय वसु ।**

**तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरितो३ं** [७ ।३२ ।१४–१५]

**शो३ंसावो३ं सद्यो ह जातो वृषभः कनीनः । प्रभर्तुमावदन्धसः सुतस्यो३ं**

**साधोः पिब प्रतिकामं यथा ते । रसाशिरः प्रथमं सोम्यस्यो३ं**

यज्जायथास्तदहरस्य कामे । अंशोः पीयूषमपिबो गिरिष्ठो३ं
तं ते माता परि योषा जनित्री । महः पितुर्दम आ सिञ्चदग्रो३म्
उपस्थाय मातरमन्नमैट्ट । तिग्ममपश्यमभि सोममूधो३ं
प्रयावयन्नचरद् गृत्सो अन्यान् । महानि चक्रे पुरुधप्रतीको३म्
उग्रस्तुराषाळभिभूत्योजाः । यथावशं तन्वं चक्र एषो३ं
त्वष्टारमिन्द्रो जनुषाभिभूय । आमुष्या सोममपिबच्चमूषो३ं
शुनं हुवेम मघवानमिन्द्रम् । अस्मिन् भरे नृतमं वाजसातो३ं
शृण्वन्तमुग्रमूतये समत्सु । घ्नन्तं वृत्राणि संजितं धनानो३म् [३ ।४७ ।१–५]
एवा त्वामिन्द्र वज्रिन्नत्र । विश्वे देवासः सुहवास ऊमो३ं
महामुभे रोदसी वृद्धमृष्वम् । निरेकमिद्वृणते वृत्रहत्यो३म्
अवासृजन्त जिव्रयो न देवाः । भुवः स्म्राळिन्द्र सत्ययोनो३म्
अहन्नहिं परिशयानमर्णः । प्र वर्तनीररदो विश्वधेनो३म्
अतृप्णुवन्तं वियतमबुध्यम् । अबुध्यमाणं सुषुपाणमिन्द्रो३ं
सप्त प्रति प्रवत आशयानम् । अहिं वज्रेण वि रिणा अपर्वो३म्
अक्षोदयच्छवसा क्षाम बुध्नम् । वार्ण वातस्तविषीभिरिन्द्रो३ं
दृह्ळान्यौभ्नादुशमान ओजः । अवाभिनत् ककुभः पर्वतानो३म्
अभि प्र दद्रुर्जनयो न गर्भम् । रथा इव प्र ययुः साकमद्रयो३म्
अतर्पयो विसृत उब्ज ऊर्मीन् । त्वं वृताँ अरिणा इन्द्र सिन्धो३ं
त्वं महीमवनिं विश्वधेनाम् । तुर्वीतये वय्याय क्षयन्तो३म्
अरमयो नमसैजदर्णः । सुतरणाँ अकृणोरिन्द्र सिन्धो३ं
प्राग्रुवो नभन्वो न वक्वाः । ध्वस्रा अपिन्वद् युवतीर्ऋतज्ञो३ं
धन्वान्यज्राँ अपृणक् तृषाणान् । अधोगिन्द्रः स्तर्यो दंसुपत्नो३ं
पूर्वीरुषसः शरदश्च गूर्ताः । वृत्रं जघन्वाँ असृजद्वि सिन्धो३ं
परिष्ठिता अतृणद्बद्बधानाः । सीरा इन्द्रः स्रवितवे पृथिव्यो३ं
वम्रीभिः पुत्रमग्रुवो अदानम् । निवेशनाद्धरिव आ जभर्थो३ं
व्यन्धो अख्याहिमाददानः । निर्भूदुखच्छित् समरन्त पर्वो३ं
प्र ते पूर्वाणि करणानि विप्र । आविद्वाँ आह विदुषे करांसो३ं
यथायथा वृष्ण्यानि स्वगूर्ता । अपांसि राजन् नर्याविवेषो३ं
शो३ंसावो३ं नू ष्टुत इन्द्र नू गृणानः । इषं जरित्रे नद्यो न पीपो३म्

**अकारि ते हरिवो ब्रह्म नव्यम् । धिया स्याम रथ्यः सदासो३म्** [४ ।१९ ।१–११] इति त्रिः परिदध्यात् ।

**उक्थं वाचीन्द्राय** इति शस्त्वा जपः ।

**ये३ यजामह उशन्नु षु णः सुमना उपाके सोमस्य नु सुषुतस्य स्वधावः ।**

**पा इन्द्रस्य प्रति भृतस्य मध्वः समन्धसा ममदः पृष्ठ्येना३ वौ३षट् ॥** [४ ।२० ।४]

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः ।

**ब्राह्मणाच्छंसीशस्त्रम् ।**

प्रस्तोत्रा **एष** इति प्रोक्ते  प्रतिहारे **हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शो३ंसावो३ं**

**तं वो दस्ममृतीषहम् वसोर्मन्दानमन्धसः ।**

**अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहो३म्** इति त्रिः

**इन्द्रं गीर्भिर्नवामहे द्युक्षं सुदानुं तविषीभिरावृतम् । गिरिं न पुरुभोजसो३ं**

**गिरिं न पुरुभोजसं क्षुमन्तं वाजं शतिनं सहस्रिणम् । मक्षू गोमन्तमीमहो३ं** [८ ।८८ ।१–२]

**शो३ंसावो३ं तत् त्वा यामि सुवीर्यं तद्ब्रह्म पूर्वचित्तये ।**

**येना यतिभ्यो भृगवे धने हिते येन प्रस्कण्वमाविथो३ं**

**येन प्रस्कण्वमाविथ येना समुद्रमसृजो महीरपः । तदिन्द्र वृष्णि ते शवो३ं**

**तदिन्द्र वृष्णि ते शवः सद्यः सो अस्य महिमा न संनशे । यं क्षोणीरनुचक्रदो३ं** [८ ।३ ।९–१०]

**शो३ंसावो३म् उदु त्ये मधुमत्तमा गिरः स्तोमास ईरते ।**

**सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथाइवो३ं**

**कण्वाइव भृगवः सूर्याइव विश्वमिद् धीतमानशुः ।**

**इन्द्रं स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरो३ं** [८ ।३ ।१५–१६]

**शो३ंसावो३म् इन्द्रः पुर्भिदातिरद्दासमर्कैः । विदद्वसु दयमानो वि शत्रो३ं**

**ब्रह्मजूतस्तन्वा वावृधानः । भूरिदात्र आपृणद् रोदसीभो३ं**

**मखस्य ते तविषस्य प्र जूतिम् । इयर्मि वाचममृताय भूषो३म्**

**इन्द्र क्षितीनामसि मानुषीणाम् । विशां दैवीनामुत पूर्वयावो३म्**

**इन्द्रो वृत्रमवृणोच्छर्धनीतिः । प्र मायिनाममिनाद्वर्पणीतो३म्**

**अहन् व्यंसमुशधग्वनेषु । आविर्धेना अकृणोद्राम्याणो३म्**

**इन्द्रः स्वर्षा जनयन्नहानि । जिगायोशिग्भिः पृतना अभिष्टो३ं**

**प्रारोचयन्मनवे केतुमह्नाम् । अविन्दज्ज्योतिर्बृहते रणायो३म्**

**इन्द्रस्तुजो बर्हणा आ विवेश । नृवद्दधानो नर्या पुरूणो३म्**

अचेतयद्धिय इमा जरित्रे । प्रेमं वर्णमतिरच्छुक्रमासो३ं
महो महानि पनयन्त्यस्य । इन्द्रस्य कर्म सुकृता पुरूणो३ं
वृजनेन वृजिनान् त्सं पिपेष । मायाभिर्दस्यूँरभिभूत्योजो३ं
युधेन्द्रो मह्वा वरिवश्चकार । देवेभ्यः सत्पतिश्चर्षणिप्रो३ं
विवस्वतः सदने अस्य तानि । विप्रा उक्थेभिः कवयो गृणन्तो३ं
सत्रासाहं वरेण्यं सहोदाम् । ससवांसं स्वरपश्च देवो३ं
ससान यःपृथिवी द्यामुतेमाम् । इन्द्रं मदन्त्यनु धीरणासो३ं
ससानात्याँ उत सूर्यं ससान । इन्द्रः ससान पुरुभोजसं गो३ं
हिरण्ययमुत भोगं ससान । हत्वी दस्यून प्रार्यं वर्णमावो३म्
इन्द्र ओषधीरसनोदहानि । वनस्पतीँरसनोदन्तरिक्षो३ं
बिभेद वलं नुनुदे विवाचः । अथाभवद्दमिताभिक्रतूनो३ं
शुनं हुवेम मघवानमिन्द्रम् ।अस्मिन् भरे नृतमं वाजसातो३ं
शृण्वन्तमुग्रमूतये समत्सु । घ्नन्तं वृत्राणि संजितं धनानो३म् [३ ।३४]
उदु ब्रह्माण्यैरत श्रवस्या । इन्द्रं समर्ये महया वसिष्ठो३म्
आ यो विश्वानि शवसा ततान । उपश्रोता म ईवतो वचांसो३म्
अयामि घोष इन्द्र देवजामिः । इरज्यन्त यच्छुरुधो विवोचो३ं
न हि त्वमायुश्चिकिते जनेषु । तानीदंहांस्यति पर्ष्यस्मो३ं
युजे रथं गवेषणं हरिभ्याम् । उप ब्रह्माणि जुजुषाणमस्थो३ं
वि बाधिष्ट स्य रोदसी महित्वा । इन्द्रो वृत्राण्यप्रती जघन्वो३म्
आपश्चित् पिप्युः स्तर्यो न गावः । नक्षन्नृतं जरितारस्त इन्द्रो३ं
याहि वायुर्न नियुतो नो अच्छा । त्वं हि धीभिर्दयसे वि वाजो३ं
ते त्वा मद इन्द्र मादयन्तु । शुष्मिणं तुविराधसो जरित्रो३म्
एको देवत्रा दयसे हि मर्तान् । अस्मिञ्छूर सवने मादयस्वो३ं
शो३ंसावो३म् एवेदिन्द्रं वृषणं वज्रबाहुम् । वसिष्ठासो अभ्यर्चन्त्यर्को३ं
स नः स्तुतो वीरवद्धातु गोमत् । यूयं पात स्वस्तिभिः सदा नो३म् ॥ [७ ।२३] इति त्रिः परिदध्यात् ।
**उक्थं वाचीन्द्राय** इति शस्त्वा जपः ।
ये३ यजामह ऋजीषी वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा ।
युक्त्वा हरिभ्यामुप यासदर्वाङ् माध्यन्दिने सवने मत्सदिन्द्रा३ वौ३षट् ॥ [५ ।४०४]
सोमस्याग्ने वीही३ वौ३षट् ॥ द्विर्वागोजः ।

**बृहत्पृष्ठे स्तोत्रियः ।**

**अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।**

**यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षतो३ं**

**सहस्रेणेव शिक्षति शतानीकेव प्र जिगाति धृष्णुया । हन्ति वृत्राणि दाशुषो३ं**

**हन्ति वृत्राणि दाशुषे गिरेरिव प्र रसा अस्य पिन्विरे । दत्राणि पुरुभोजसो३म्** अन्यत् सर्वं समान्म् ।

**अच्छावाकशस्त्रम् ।**

प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे **हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शो३ंसावो३ं**

**तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये ।**

**बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणो३ं** इति त्रिः

**हुवे भरं न कारिणं न यं दुध्रा वरन्ते न स्थिरा मुरः । मदे सुशिप्रमन्धसो३ं**

**मदे सुशिप्र मन्धसो य आदृत्या शशमानाय सुन्वते । दाता जरित्र उक्थ्यो३म्** [८ ।६६ ।१–२]

**शो३ंसावो३ं तरणिरित् सिषासति वाजं पुरन्ध्या युजा ।**

**आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्र्वो३ं**

**नेमिं तष्टेव सुद्र्वं न दुष्टुती मर्त्यो विन्दते वसु । न स्रेधन्तं रयिर्नशो३ं**

**न स्रेधन्तं रयिर्नशत् सुशक्तिरिन्मघवन् तुभ्यं मावते । देष्णं यत् पार्ये दिवो३ं** [७ ।३२ ।२०–२१]

**शो३ंसावो३म् उदिन्वस्य रिच्यतेंऽशो धनं न जिग्युषः ।**

**य इन्द्रो हरिवान् न दभन्ति तं रिपो दक्षं दधाति सोमिनो३ं**

**मन्त्रमखर्वं सुधितं सुपेशसं दधात यज्ञेयेष्वा ।**

**पूर्वीश्चन प्रसितयस्तरन्ति तं य इन्द्रे कर्मणा भुवो३ं** [७ ।३२ ।१२–१३]

**शो३ंसावो३ं भूय इद्वावृधे वीर्याय । एको अजुर्यो दयते वसूनो३ं**

**प्ररिरिचे दिव इन्द्रः पृथिव्याः । अर्धमिदस्य प्रति रोदसी उभो३म्**

**अधा मन्ये बृहदसुर्यमस्य । यानि दाधार नकिरा मिनातो३ं**

**दिवेदिवे सूर्यो दर्शतो भूत् । वि सद्मान्युर्विया सुक्रतुर्धो३म्**

**अद्या चिन्नू चित् तदपो नदीनाम् । यदाभ्यो अरदो गातुमिन्द्रो३ं**

**नि पर्वता अद्मसदो न सेदुः । त्वया दृह्ळानि सुक्रतो रजांसो३ं**

**सत्यमित् तन्न त्वावाँ अन्यो अस्ति । इन्द्र देवो न मर्त्यो ज्यायो३म्**

**अहन्नहिं परिशयानमर्णः । अवासृजो अपो अच्छा समुद्रो३ं**

**त्वमपो वि दुरो विषूचीः । इन्द्र दृह्ळमरुजह् पर्वतस्यो३ं**
**राजाभवो जगतश्चर्षणीनाम् । साकं सूर्यं जनयन् द्यामुषासो३म्** [६ ।३०]
**इमामू षु प्रभृतिं सातये धाः । शश्वच्छश्वदूतिभिर्यादमानो३ं**
**सुतेसुते वावृधे वर्धनेभिः । यः कर्मभिर्महद्भिः सुश्रुतो भो३म्**
**इन्द्राय सोमाः प्रदिवो विदानाः । ऋभुर्येभिर्वृषपर्वा विहायो३ं**
**प्रयम्यमानान् प्रति षू गृभाय । इन्द्र पिब वृषधूतस्य वृष्णो३ं**
**पिबा वर्धस्व तव घा सुतासः । इन्द्र सोमासः प्रथमा उतेमो३ं**
**यथापिबः पूर्व्याँ इन्द्र सोमान् । एवा पाहि पन्यो अद्या नवीयो३ं**
**महाँ अमत्रो वृजने विरप्शी । उग्रं शवः पत्यते धृष्णवोजो३ं**
**नाह विव्याच पृथिवी चनैनम् । यत् सोमासो हर्यश्व ममन्दो३ं**
**महाँ उग्रो वावृधे वीर्याय । समाचक्रे वृषभः काव्येनो३म्**
**इन्द्रो भगो वाजदा अस्य गावः । प्रजायन्ते दक्षिणा अस्य पूर्वो३ं**
**प्र यत् सिन्धवः प्रसवं यथायन् । आपः समुद्रं रथ्येव जग्मो३म्**
**अतश्चिदिन्द्रः सदसो वरीयान् । यदीं सोमः पृणाति दुग्धो अंशो३ं**
**समुद्रेण सिन्धवो यादमानाः । इन्द्राय सोमं सुषुतं भरन्तो३म्**
**अंशुं दुहन्ति हस्तिनो भरित्रैः । मध्वः पुनन्ति धारया पवित्रो३ं**
**ह्रदाइव कुक्षयः सोमधानाः । समी विव्याच सवना पुरूणो३म्**
**अन्ना यदिन्द्रः पथमा व्याश । वृत्रं  जघन्वाँ अवृणीत सोमो३म्**
**आ तू भर माकिरेतत् परिष्ठात् । विद्मा हि त्वा वसुपतिं वसूनो३म्**
**इन्द्र यत्ते माहिनं दत्रमस्ति । अस्मभ्यं तद्धर्यश्व प्र यन्धो३ं**
**शो३ंसावो३ं शुनं हुवेम मघवानमिन्द्रम् । अस्मिन् भरे नृतमं वाजसातो३ं**
**शृण्वन्तमुग्रमूतये समत्सु । घ्नन्तं वृत्राणि संजितं धनानो३म्** [३ ।३६] इति त्रिः परिदध्यात् ।
**उक्थं वाचीन्द्राय** इति शस्त्वा जपः ।
**ये३ यजामहे पिबा वर्धस्व तव घा सुतास इन्द्र सोमासः प्रथमा उतेमे ।**
**यथापिबः पूर्व्याँ इन्द्र सोमाँ एवा पाहि पन्यो अद्या नवीया३ न्वौ३षट् ॥** [३ ।३६ ।३]
**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः ।

**अथ तृतीयसवनमुत्तमस्वरेण ।** आदित्यग्रहेण चरन्ति ।

प्रशास्ता– **आदित्यानामवसा नूतनेन सक्षीमहि शर्मणा शन्तमेन ।**

**अनागास्त्वे अदितित्वे तुरास इमं यज्ञं दधतु श्रोषमाणो३म् ॥** [७ ।५१ ।१]

**होता यक्षदादित्यान् प्रियान् प्रियधाम्नः प्रियव्रतान् महस्वसरस्यपतीनुरोरन्तरिक्षस्याध्यक्षान्त्स्वादित्यानवोदधतस्मै सुन्वते यजमानाय करन्नेवमादित्या जुषतां मदन्तां व्यन्तु पिबन्तु सोमं होतर्यज ॥**

होता– **ये३ यजामह आदित्यासो अदितिर्मादयन्तां मित्रो अर्यमा वरुणो रजिष्ठाः ।**

**अस्माकं सन्तु भुवनस्य गोपाः पिबन्तु सोममवसे नो अद्या३ वौ३षट् ॥** [७ ।५१ ।२]

नैनं ग्रहमीक्षेत हूयमानम् । नानुवषट्कारः । स्तुते आर्भवे पवमाने विहृत्याङ्गारन् मनोतादि पश्विडान्तं पशुकर्म ।

तत्र हविर्यागे प्रशास्ता– **पायि नो अग्ने पायुभिरजस्रैरुत प्रिये सदन आ शुशुक्वान् ।**

**मा ते भयं जरितारं यविष्ठ नूनं विदन्मापरं सहस्वो३म् ॥** [१ ।१८९ ।४]

**होता यक्षदग्निं छागस्य हविष आददद्यमध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्यागृभः । घसन्नूनं घासे अज्राणां यवस प्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवो पवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोङ्गादङ्गादवत्तानां करदेवाग्निर्जुषतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे प्र कारवो मनना वच्यमाना देवद्रीचीं नयत देवयन्तः ।**

**दक्षिणावाड् वाजिनी प्राच्येति हविर्भरन्त्यग्नये घृताची३ वौ३षट् ॥** [३ ।६ ।१]

वनस्पतियागप्रैषे प्रशास्ता– **होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्टया रशनयाधित । यत्राग्नेराज्यस्य हविषः प्रियाधामानि यत्र सोमस्याज्यस्य हविषः प्रियाधामानि यत्राग्नेश्छागस्य हविषः प्रियाधामानि यत्र वनस्पतेः प्रियापाथांसि यत्र देवानामाज्यपानां प्रियाधामानि यत्राग्नेर्होतुः प्रियाधामानि तत्रैतं प्रस्तुत्येवोपस्त्युत्येवोपावस्रक्षद् रभीयांसमिव कृत्वीकरदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज ।**

स्विष्टकृत्प्रैषे प्रशास्ता– **होता यक्षदग्निं स्विष्टकृतमयाळग्निरग्नेराज्यस्य हविषः प्रियाधामान्ययाट् सोमस्याज्यस्य हविषः प्रियाधामान्ययाळग्नेश्छागस्य हविषः प्रियाधामान्ययाड् वनस्पतेः प्रियापाथांस्ययाड् देवानामाज्यपानां प्रियाधामानि यक्षदग्नेर्होतुः प्रियाधामानि यक्षत्स्वं महिमानामायजतामेज्या इषः कृणातु सो अध्वरा जातवेदा जुषतां हविर्होतर्यज ॥** इति विशेषः ।

सवनीये प्रशास्ता– **तृतीये धानाः सवने पुरुष्टुत पुरोळाशमाहुतं मामहस्व नः ।**

**ऋभुमन्तं वाजवन्तं त्वा कवे प्रयस्वन्त उप शिक्षेम धीतिभो३म् ॥** [३ ।५२ ।६]

**होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपः । तृतीयस्य सवनस्य पुरोळाशाँ इन्द्रः प्रस्थितां जुषाणो वेतु होतर्यज ॥**

होता– **ये३ यजामहे हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपः । तृतीयस्य सवनस्य पुरोळाशाँ इन्द्रः प्रस्थितां जुषाणो वेतू३ वौ३षट् ॥**

स्विष्टकृति प्रशास्ता– **अग्ने तृतीये सवने हि कानिषः पुरोळाशं सहसः सूनवाहुतम् ।**

अथा देवेष्वध्वरं विपन्यया धा रत्नवन्तममृतेषु जागृवो३म् ॥ [३ ।२८ ।५]

होता यक्षदग्निं पुरोळाशानां जुषतां हविर्होतर्यज ॥

होता– ये३ यजामहे हविरग्ने वीही३ वौ३षट् ॥

उन्नीयमानेभ्यः प्रेषितो मैत्रावरुणोऽनभिहिंकृत्य

इहोप यात शवसो नपातः सौधन्वना ऋभवो माप भूत ।

अस्मिन् हि वः सवने रत्नधेयं गमन्त्विन्द्रमनु वो मदासो३म् इति त्रिः

आगन्नृभूणामिह रत्नधेयमभूत् सोमस्य सुषुतस्य पीतिः ।

सुकृत्यया यत् स्वपस्यया चँ एकम् विचक्र चमसं चतुर्धो३ं

व्यकृणोत चमसं चतुर्धा सःए वि शिक्षेत्यब्रवीत ।

अथैत वाजा अमृतस्य पन्थां गणं देवानामृभवः सुहस्तो३ं

किंमयः स्विच्चमसएष आस यं काव्येन चतुरो विचक्र ।

अथा सुनुध्वं सवनं मदाय पात ऋभवो मधुनः सोम्यस्यो३ं

शच्याकर्त पितरा युवाना शच्याकर्त चमसं देवपानम् ।

शच्या हरी धनुतरावतष्टेन्द्रवाहावृभवो वाजरत्नो३ं

यो वः सुनोत्यभिपित्वे अह्नां तीव्रं वाजासः सवनं मदाय ।

तस्मै रयिमृभवः सर्ववीरमा तक्षत वृषणो मन्दसानो३ं

प्रातः सुतमपिबो हर्यश्व माध्यन्दिनं सवनं केवलं ते ।

समृभुभिः पिबस्व रत्नधेभिः सकीँर्याँ इन्द्र चकृषे सुकृत्यो३ं

ये देवासो अभवता सुकृत्या श्येनाइवेदधि दिवि निषेद ।

ते रत्नं धात शवसो नपातः सौधन्वना अभवतामृतासो३ं

यत् तृतीयं सवनं रत्नधेयमकृणुध्वं स्वपस्या सुहस्ताः ।

तदृभवः परिषिक्तं व एतत् सं मदेभिरिन्द्रियेभिः पिबध्वो३म् [४ ।३५] इति त्रिः परिदध्यात् ।

प्रशास्ता–होता यक्षदिन्द्रं तृतीयस्य सवनस्य ऋभुमतो विभुमतो वाजवतो ब्रुहस्पतिवतो विश्वदेव्यावतः समस्यमदाः प्रातस्तना अग्मत संमाध्यन्दिनाः समिदातनास्तेषां समुक्षितानां गौर इव प्रगाह्यावृषायस्वायूया बाहुभ्यामुप याहि हरिभ्यां प्रप्रुथ्या शिप्रेनिष्पृथ्य ऋजीषमिमे अस्मै तीव्रा आशीर्वन्तः प्रस्थिता इन्द्राय सोमास्तां जुषतां वेतु पिबतु सोमं होतर्यज ॥

होता– ये३ यजामह इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितं सुतं सोममा वृषस्वा गभस्त्योः ।

धियेषितो मघवन् दाशुषो गृहे सौधन्वनेभिः सह मत्स्वा नृभी३ वौँ३षट् ॥ [३ ।६० ।५]

**प्रशास्तर्यज** इति प्रेषितः प्रशास्ता–

**ये३ यजामह इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रता ।**

**युवो रथो अध्वरं देववीतये प्रति स्वसरमुप याहि पीतया३इ वौ३षट् ॥** [६ ।६८ ।१०]

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः ।

**ब्रह्मन् यज** इति प्रेषितो ब्राह्मणाच्छंसी–

**ये३ यजामह इन्द्रश्च सोमं पिबतं बृहस्पतेऽस्मिन् यज्ञे मन्दसाना वृषण्वसू ।**

**आ वां विशन्त्विन्दवः स्वाभुवोऽस्मे रयिं सर्ववीरं नि यच्छता३ँ वौ३षट् ॥** [४ ।५० ।१०]

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः ।

**पोतर्यज** इति प्रेषितः पोता–

**ये३ यजामह आ वो वहन्तु सप्तयो रघुष्यदो रघुपत्वानः प्र जिगात बाहुभिः ।**

**सीदता बर्हिरुरु वः सदस्कृतं मादयध्वं मरुतो मध्वो अन्धसा३ वौ३षट् ॥** [१ ।८५ ।६]

**नेष्टर्यज** इति प्रेषितो नेष्टा–

**ये३ यजामहेऽमेव नः सुहवा आ हि गन्तन नि बर्हिषि सदतना रणिष्टन ।**

**अथा मन्दस्व जुजुषाणो अन्धसस्त्वष्टर्देवेभिर्जनिभिः सुमद्गणा३ वौ३षट् ॥** [२ ।३६ ।३]

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः ।

**अच्छावाक यज** इति प्रेषितोऽच्छावाकः–

**ये३ यजामह इन्द्राविष्णू पिबतं मध्वो अस्य सोमस्य दस्रा जठरं पृणेथाम् ।**

**आ वामन्धांसि मदिराण्यग्मन्नुप ब्रह्माणि शृणुतं हवं मा३इ वौ३षट् ।** [६ ।६९ ।७]

**अग्नीद्यज** इति प्रेषितोऽग्नीत्–

**ये३ यजामह इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।**

**भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तवा३ वौ३षट् ॥** [१ ।९४ ।१]

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः ।

अथ होता आगतमध्वर्युम् **अयाडग्नीत्** इति पृच्छति । **अयाट्** इत्यध्वर्युः प्रत्याह । **स भद्रमकर्यो नः सोमस्य पाययिष्यति** इति होता जपति । इडोपाह्वानादि समानमानाराशंससादनात् । सन्नेषु नाराशंसेषु मृदिष्ठात् पुरोडाशस्य तिस्रस्तिस्रः पिण्ड्यो दक्षिणतः प्रतिस्वंचमसेभ्यः स्वेभ्यः पितृभ्य उपास्येयुः **अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्** इति । सव्यावृत आग्नीध्रीयं प्राप्य हविरुच्छिष्टं सर्वे प्राश्नीयुः । सावित्रेण ग्रहेन चरन्ति ।

प्रशास्ता– **अभूद्देवः सविता वन्द्यो नु न इदानीमह्न उपवाच्यो नृभिः ।**

**वि यो रत्ना भजति मानवेभ्यः श्रेष्ठं नो अत्र द्रविणं यथा दधो३म् ॥** [४ ।५४ ।१]

**होता यक्षद्देवं सवितारं परामीवांसाविषत् पराघशंसं सुसावित्रमासाविषदस्मै सुन्वते यजमानाय करदेवं देवः सविता जुषतां मदतां वेतु पिबतु सोमं होतर्यज ॥**

होता– **ये३ यजामहे दमूना देवः सविता वरेण्यो दधद्रत्नादक्ष पितृभ्य आयुनि ।**

**पिबात् सोमममदन्नेनमिष्टयः परिज्मा चिद्रमते अस्य धर्मणी३ वौ३षट् ॥** नानुवषट्करोति । न भक्षयति ।

**वैश्वदेवशस्त्रम् ।**

होता सर्वादिशो ध्यायेच्छंसिष्यन् । यस्यां द्वेष्यो न ताम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे

**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शोशो३ंसावो३ं**

**तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् ।**

**श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहो३म्** इति त्रिः

**अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियम् । न मिनन्ति स्वराज्यो३ं**

**स हि रत्नानि दाशुषे सुवाति सविता भगः । तं भागं चित्रमीमहे ॥** (५।८२।१–३)

**शो३ंसावो३म् अद्या नो देव सवितः प्रजावत्सावीः सौभगम् । परा दुष्वप्न्यं सुवो३ं**

**विश्वानि देव सवितर्दुरितानि परा सुव । यद्भद्रं तन्न आ सुवो३म्**

**अनागसो अदितये देवस्य सवितुः सवे । विश्वा वामानि धीमहो३ं** (५।८२।४–६)

**शो३ंसावो३म् अभूद्देवः सविता वन्द्यो नु नः । इदानीमह्न उपवाच्यो नृभो३ं**

**वि यो रत्ना भजति मानवेभ्यः । श्रेष्ठं नो अत्र द्रविणं यथा दधो३ं**

**देवेभ्यो हि प्रथमं यज्ञियेभ्यः । अमृतत्वं सुवसि भागमुत्तमो३म्**

**आदिद्दामानं सवितर्व्यूर्णुषे । अनूचीना जीविता मानुषेभ्यो३म्**

**अचित्ती यच्चकृमा दैव्ये जने । दीनैर्दक्षैः प्रभूती पूरुषत्वतो३ं**

**देवेषु च सवितर्मानुषेषु च । त्वं नो अत्र सुवतादनागसो३ं**

**न प्रमिये सवितुर्दैव्यस्य तत् । यथा विश्वं भुवनं धारयिष्यतो३ं**

**यत्पृथिव्या वरिमन्ना स्वङ्गुरिः । वर्ष्मन् दिवः सुवति सत्यमस्य तो३म्**

**इन्द्रज्येष्ठान्बृहद्भ्यः पर्वतेभ्यः । क्षयाँ एभ्यः सुवसि पस्त्यावतो३ं**

**यथा यथा पतयन्तो वियेमिरे । एवैव तस्थुः सवितः सवाय तो३ं**

**शो३ंसावो३ं सविता देवः सोमस्य पिबतु । हिरण्यपाणिः सुजिह्वः । सुबाहुः स्वङ्गुरिः । त्रिरहन्त् सत्यसवनः । यः प्रासुवद्वसुधिती । उभे जोष्ट्री सवीमनि । श्रेष्ठं सावित्रमासुवम् । दोग्ध्रीं धेनुम् । वोह्ळारमनड्वाहम् । आशुं सप्तिम् । पुरन्धिं योषाम् । जिष्णुं रथेष्ठाम् । सभेयम् युवानम् । परामीवांसाविषत् पराघशंसम् । सविता देव इह श्रवदिह**

सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमो३ं

ये ते त्रिरहन्त्सवितः सवासः । दिवे दिवे सौभगमासुवन्तो३म्

इन्द्रो द्यावापृथिवी सिन्धुरद्भिः । आदित्यैर्नो अदितिः शर्म यंसो३ं (४।५४।१–६)

शो३ंसावो३म् एकया च दशभिश्च स्वभूते । द्वाभ्यामिष्टये विंशत्या चो३ं

तिसृभिश्च वहसे त्रिंशता च । नियुद्भिर्वायविह ता विमिञ्चो३ं

शो३ंसावो३ं प्र द्यावा यज्ञैः पृथिवी ऋतावृधा । मही स्तुषे विदथेषु प्रचेतसो३ं

देवेभिर्ये देवपुत्रे सुदंससा । इत्था धिया वार्याणि प्रभूषतो३म्

उत मन्ये पितुरद्रुहो मनः । मातुर्महि स्वतवस्तद्धवीमभो३ं

सुरेतसा पितरा भूम चक्रतुः । उरु प्रजाया अमृतं वरीमभो३ं

ते सूनवः स्वपसः सुदंससः । मही जज्ञुर्मातरा पूर्वचित्तयो३ं

स्थातुश्च सत्यं जगतश्च धर्मणि । पुत्रस्य पाथः पदमद्वयाविनो३ं

ते मायिनो ममिरे सुप्रचेतसः । जामी सयोनी मिथुना समोकसो३ं

नव्यं नव्यं तन्तुमा तन्वते दिवि । समुद्रे अन्तः कवयः सुदीतयो३ं

शो३ंसावो३ं द्यावापृथिवी सोमस्य मत्सताम् । पिता च माता च । पुत्रश्च प्रजननं च । धेनुश्च वृषभश्च । धन्या च धिषणा च । सुरेताश्च सुदुघाश्च । शम्भूश्च मयोभूश्च । ऊर्जस्वती च पयस्वती च । रेतोधाश्च रेतोभृच्च । द्यावापृथिवी इह श्रुतामिह सोमस्य मत्सताम् । प्रेमां देवी देवहूतिमवतां देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवताम् । चित्रे चित्राभिरूतिभिः । श्रुतां ब्रह्माण्यावसा गमो३ं

तद्राधो अद्य सवितुर्वरेण्यम् । वयं देवस्य प्रसवे मनामहो३म्

अस्मभ्यं द्यावापृथिवी सुचेतुना । रयिं धत्तं वसुमन्तं शतग्विनो३ं [१।१५९।१–५]

शो३ंसावो३ं सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यवि द्यवो३ं (१।४।१)

शो३ंसावो३ं तक्षन्रथं सुवृतं विद्मनापसः । तक्षन्हरी इन्द्रवाहा वृषण्वसो३ं

तक्षन् पितृभ्यामृभवो युवद्वयः । तक्षन् वत्साय मातरं सचाभुवो३म्

आ नो यज्ञाय तक्षत ऋभुमद्वयः । क्रत्वे दक्षाय सुप्रजावतीमिषो३ं

यथा क्षयाम सर्ववीरया विशा । तन्नः शर्धाय धासथा स्विन्द्रियो३म्

आ तक्षत सातिमस्मभ्यमृभवः । सातिं रथाय सातिमर्वते नरो३ं

सातिं नो जैत्रीं सं महेत विश्वहा । जामिमजामिं पृतनासु सक्षणो३म्

ऋभुक्षणमिन्द्रमा हुव ऊतये । ऋभून् वाजान् मरुतः सोमपीतयो३म्

उभा मित्रावरुणा नूनमश्विना । ते नो हिन्वन्तु सातये धिये जिषो३म्

शो३ंसावो३म् ऋभवो देवा सोमस्य मत्सन् । विष्ट्वी स्वपसः । कर्मणा सुहस्ताः । धन्या धनिष्ठाः । शम्या शमिष्ठाः । ये धेनुं विश्वजुवं विश्वरूपामरक्षन् । अरक्षन्धेनुमभवद्विश्वरूपी । अयुञ्जत हरी अयुर्देवाँ उप । अबुध्नन्त्संकनीनामदन्तः । संवत्सरे स्वपसो यज्ञियं भागमायन् । ऋभवो देवा इह श्रवन्निह सोमस्य मत्सन् । प्रेमां देवा देवहूतिमवन्तु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवन्तु । चित्राश्चित्राभिरूतिभिः । श्रवन् ब्रह्माण्यावसा गमो३म्

ऋभुर्भराय सं शिशातु सातिम् । समर्यजिद्वाजो अस्माँ अवष्टो३ं

तन्नो मित्रो वरुणो मामहन्ताम् । अदितिः सिन्धुः पृथिवी उत द्यो३ं (१।१११।१–५)

शो३ंसावो३म् अयं वेनश्चोदयत्पृश्निगर्भाः । ज्योतिर्जरायू रजसो विमानो३म्

इममपां सङ्गमे सूर्यस्य । शिशुं न विप्रा मतिभी रिहन्तो३ं (१०।१२३।१)

शो३ंसावो३ं येभ्यो माता मधुमत्पिन्वते पयः । पीयूषं द्यौरदितिरद्रिबर्हो३म्

उक्थशुष्मान् वृषभरान्त्स्वप्नसः । ताँ आदित्याँ अनु मदा स्वस्तयो३ं (१०।६३।३)

शो३ंसावो३म् एवा पित्रे विश्वदेवाय वृष्णे । यज्ञैर्विधेम नमसा हविर्भो३म्

बृहस्पते सुप्रजा वीरवन्तः । वयं स्याम पतयो रयीणो३ं (४।५०।६)

शो३ंसावो३म् आ नो भद्राः क्रतवो यन्तु विश्वतः । अदब्धासो अपरीतास उद्भिदो३ं

देवा नो यथा सदमिद्वृधे । असन्नप्रायुवो रक्षितारो दिवे दिवो३ं

देवानां भद्रा सुमतिर्ऋजूयताम् । देवानां रातिरभि नो नि वर्ततो३ं

देवानां सख्यमुप सेदिमा वयम् । देवा न आयुः प्र तिरन्तु जीवसो३ं

तान्पूर्वया निविदा हूमहे वयम् । भगं मित्रमदितिं दक्षमस्रिधो३म्

अर्यमणं वरुणं सोममश्विना । सरस्वती नः सुभगा मयस्करतो३ं

तन्नो वातो मयोभु वातु भेषजम् । तन्माता पृथिवी तत्पिता द्यो३ं

तद्ग्रावाणः सोमसुतो मयोभुवः । तदश्विना शृणुतं धिष्ण्या युवो३ं

तमीशानुागतस्तस्थुषस्पतिम् । धियंजिन्वमवसे हूमहे वयो३म्

पूषा नो यथा वेदसामसद्वृधे । रक्षिता पायुरदब्धः स्वस्तयो३ं

स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदो३ं

स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातो३म्

पृषदश्वा मरुतः पृश्निमातरः । शुभंयावानो विदथेषु जग्मयो३म्

अग्निजिह्वा मनवः सूरचक्षसः । विश्वे नो देवा अवसा गमन्निहो३म्

भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्रो३ं

स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः । व्यशेम देवहितं यदायो३ं

**शो३ंसावो३ं विश्वे देवाः सोमस्य मत्सन् । विश्वे वैश्वानराः । विश्वे हि विश्वमहसः । महि महान्तः । तक्वान्नेमतिथीवानः । आस्क्राः पचतवाहसः । वातात्मानो अग्निदूताः । ये द्यां च पृथिवीं चातस्थुः । अपश्च स्वश्च । ब्रह्म च क्षत्रं च । बर्हिश्च वेदिं च । यज्ञं चोरु चान्तरिक्षम् । ये स्थ त्रय एकादशाः । त्रयश्च त्रिंशच्च । त्रयश्च त्री च शता । त्रयश्च त्री च सहस्रा । तावन्तोऽभिपाचः । तावन्तोऽभिषाचः । तावतीः पत्नीः । तावतीर्ग्नाः । तावन्त उदरणे । तावन्तो निवेशने । अतो देवा भूयांसः स्थ । मा वो देवा अभिशसा मा परिशसा वृक्षि । विश्वे देवा इह श्रवन्निह सोमस्य मत्सन् । प्रेमां देवा देवहूतिमवन्तु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवन्तु । चित्राश्चित्राभिरूतिभिः । श्रवन् ब्रह्माण्यावसा गमो३ं**

**शतमिन्नु शरदो अन्ति देवाः । यत्रा नश्चक्रा जरसं तनूनो३म्**
**पुत्रासो यत्र पितरो भवन्ति । मा नो मध्या रीरिषतायुर्गन्तो३ं**
**शो३ंसावो३म् अदितिर्द्यौरदितिरन्तरिक्षम् । अदितिर्माता स पिता स पुत्रो३ं**
**विश्वे देवा अदितिः पञ्च जनाः । अदितिर्जातमदितिर्जनित्वो३म्** इति द्विः पच्छः
**अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।**
**विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वो३म्** (१।८९।१–१०) इति सकृदर्धर्चशो भूमिमुपस्पृशन् परिदद्यात् । **उक्थं वाचीन्द्राय देवेभ्य आश्रुत्यै त्वा** इति शस्त्वा जपेत् ।
**ये३ यजामहे विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ ।**
**ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वा३ं वौ३षट् ॥** (६।५२।१३)
**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । सर्वभक्षाश्चमसाः ।

**सौम्यचरुः**

तं घृतयाज्याभ्यामुपांशूभयतः परियजन्ति । घृतस्य यजेत्युक्तः
**ये३ यजामहे** (उपांशु) **घृताहवनो घृतपृष्ठो अग्निर्घृते श्रितो घृतम्वस्य धाम ।**
**घृतप्रुषस्त्वा हरितो वहन्तु घृतं पिबन् यजसि देव देवा३न् वौ३षट् ॥** [आ.श्रौ.५।१९] इति पुरस्तात् ।
सौम्यस्य यजेत्युक्ते उच्चैः –
**ये३ यजामहे त्वं सोम पितृभिः संविदानोऽनुद्यावापृथिवी आततन्थ ।**
**तस्मै त इन्दो हविषा विधेम वयं स्याम पतयो रयीणा३ं वौ३षट् ॥** [८।४८।१३]
पुनः घृतस्य यज इत्युक्ते उपांशु–
**ये३ यजामह उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।**
**घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिरा३ वौ३षट् ॥** [आ.श्रौ.५।१९]

घृतयागस्यानतरपक्षश्चेत् –

**ये३ यजामह** (उपांशु) **अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा ।**

**दमे दमे सुष्टुतिर्वामियाना प्रति वां जिह्वा घृतमुच्चरण्या३ द्वौ३षट् ॥**

अध्वर्युणा ाँ स्३ॐयं पूर्वमुद्गातृभ्यो गृहीत्वावेक्षेत–

**यत्ते चक्षुर्दिवि यत् सुपर्णे येनैकराज्यमजहिना ।**

**दीर्घं यच्चक्षुरदितेरनन्तं सोमो नृचक्षा मयि तद्दधातु** इति । घृतप्लुत ईक्षमाणाः स्वच्छायां यदि न पश्येत् तदा–

**दिस्पृक् क्रतुस्पृग् वर्चोधा वर्चो अस्मासु धेहि ।**

**यन्मे मनो यमं गतं यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसि ।**

**भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।**

**स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥** [१।८९।८] इति च । अङ्गुष्ठेनोपकनिष्ठिकाभ्यामाज्येनाक्षिणी अज्य च्छन्दोगेभ्यः प्रयच्छेत् ।

**पात्नीवतग्रहयाजनम्**

वि ेषु शालाकेष्वाग्नीध्रः पात्नीवतस्योपांशु यजति–

**ये३ यजामह** (उपांशु) **ऐभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः ।**

**पत्नीवतस्त्रिंशतं त्रीँश्च देवाननुष्वधमा वह मादयस्वा३ वौ३षट् ॥** (३।६।९) इति । आग्नीध्रो नेष्टुर्विसंस्थितसंवरेण नेष्टारमनुप्रपद्य तस्योपस्थ उपविश्य अध्वर्युमुपहूय भक्षयेत् पात्नीवतम् । अथ यथेतं सदस आग्नीध्रं प्रति निष्क्रामेत् ।

**आग्निमारुतशस्त्रम् । (यज्ञायज्ञीयम्)**

स्तोत्रोपाकरणकालादारभ्य प्रावृतशिरस्का भवेयुः । अथ होता स्वभ्यग्रम् (सत्वरितम्) आग्निमारुतं शंसेत् । तस्याद्यामृचमृगावानं शंसेत् । यदि असा पच्छः शस्या भवेत्तदा पादे पादेऽवसायानुच्छवसन्नेव शंसेत् ।

प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे **हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शोशो३ंसावो३म्**

**वैश्वानराय पृथुपाजसे विपः । रत्ना विधन्त धरुणेषु गातवो३म्**

**अग्निर्हि देवाँ अमृतो दुवस्यति । अथा धर्माणि सनता न दूदुषो३म्** इति त्रिः

**अन्तर्दूतो रोदसी दस्म ईयते । होता निषत्तो मनुषः पुरोहितो३ं**

**क्षयं बृहन्तं परि भूषति द्युभिः । देवेभिरग्निरिषितो धियावसो३ं**

**केतुं यज्ञानां विदथस्य साधनम् । विप्रासो अग्निं महयन्त चित्तिभो३म्**

**अपांसि यस्मिन्नधि संदधुर्गिरः । तस्मिन्त्सुम्नानि यजमान आ चको३म्**

**पिता यज्ञानामसुरो विपश्चिताम् । विमानमग्निर्वयुनं च वाघतो३म्**

**आ विवेश रोदसी भूरिवर्पसा । पुरुप्रियो भन्दते धामभिः कवो३ं**

चन्द्रमग्निं चन्द्ररथं हरिव्रतम् । वैश्वानरमप्सुषदं स्वर्विदो३ं
विगाहं तूर्णिं तविषीभिरावृतम् । भूर्णिं देवास इह सुश्रियं दधो३म्
अग्निर्देवेभिर्मनुषश्च जन्तुभिः । तन्वानो यज्ञं पुरुपेशसं धियो३ं
रथीरन्तरीयते साधदिष्टिभिः । जीरो दमूना अभशस्तिचातनो३म्
अग्ने जरस्व स्वपत्य आयुनि । ऊर्जा पिन्वस्व समिषो दिदीहि नो३ं
वयांसि जिन्व बृहतश्च जागृवे । उशिग् देवानामसि सुक्रतुर्विपो३ं
विश्पतिं यह्वमतिथिं नरः सदा । यन्तारं धीनामुशिजं च वाघतो३म्
अध्वराणां चेतनं जातवेदसम् । प्र शंसन्ति नमसा जूतिभिर्वृधो३ं
विभावा देवः सुरणः परि क्षितीः । अग्निर्बभूव शवसा सुमद्रथो३ं
तस्य व्रतानि भूरिपोषिणो वयम् । उप भूषेम दम आ सुवृक्तिभो३ं
वैश्वानर तव धामान्या चके । येभिः स्वर्विदभवो विचक्षणो३ं
जात आपृणो भुवनानि रोदसी । अग्ने ता विश्वा परिभूरसि त्मनो३ं
शो३ंसावो३म् अग्निर्वैश्वानरः सोमस्य मत्सत् । विश्वेषां देवानां समित् । अजस्रं दैव्यं ज्योतिः । यो विड्भ्यो मानुषीभ्यो अदीदेत् । द्युषु पूर्वेषु दिद्युतानः । अजर उषसामनीके । आ योद्यां भात्या पृथिवीम् । ओर्वन्तरिक्षम् । ज्योतिषा यज्ञाय शर्म यंसत् । अग्निर्वैश्वानर इह श्रवदिह सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमो३ं
वैश्वानरस्य दंसनाभ्यो बृहत् । अरिणादेकः स्वपस्यया कवो३म्
उभा पितरा महयन्नजायत । अग्निर्द्यावापृथिवी भूरिरेतसो३ं (३।३।१–११)
शो३ंसावो३ं शं नः करत्यर्वते सुगं मेषाय मेष्ये । नृभ्यो नारिभ्यो गवो३ं (१–४३–६)
शो३ंसावो३म् प्रत्वक्षसः प्रतवसो विरप्शिनः । अनानता अविथुरा ऋजीषिणो३ं
जुष्टतमासो नृतमासो अञ्जिभिः । व्यानज्रे केचिदुस्रा इव स्तृभो३म्
उपह्वरेषु यदचिध्वं ययिम् । वय इव मरुतः केन चित्पथो३ं
श्चोतन्ति कोशा उप वो रथेष्वा । घृतमुक्षता मधुवर्णमर्चतो३म्
प्रैषामज्मेषु विथुरेव रेजते । भूमिर्यामेषु यद्ध युञ्जते शुभो३ं
ते क्रीळयो धुनयो भ्राजदृष्टयः । स्वयं महित्वं पनयन्त धूतयो३ं
स हि स्वसृत्पृषदश्वो युवा गणः । अया ईशानस्तविषीभिरावृतो३म्
असि सत्य ऋणयावानेद्यः । अस्या धियः प्राविताथा वृषा गणो३म्
पितुः प्रत्नस्य जन्मना वदामसि । सोमस्य जिह्वा प्र जिगाति चक्षसो३ं
यदीमिन्द्रं शम्यृक्वाण आशत । आदिन्नामानि यज्ञियानि दधिरो३ं

शो३ंसावो३म् मरुतो देवाः सोमस्य मत्सन् । सुष्टुभः स्वर्काः । अर्कस्तुभो बृहद्वयसः । शूरा अनाधृष्टरथाः । त्वेषासः पृश्निमातरः । शुभ्रा हिरण्यखादयः । तवसो भन्ददिष्टयः । नभस्या वर्षनिर्णिजः । मरुतो देवा इह श्रवन्निह सोमस्य मत्सन् । प्रेमां देवा देवहूतिमवन्तु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवन्तु । चित्राश्चित्राभिरूतिभिः । श्रवन् ब्रह्माण्यावसा गमो३ं

श्रियसे कं भानुभिः सं मिमिक्षिरे । ते रश्मिभिस्त ऋक्वभिः सुखादयो३ं

ते वाशीमन्त इष्मिणो अभीरवः । विद्रे प्रियस्य मारुतस्य धाम्नो३ं (१।८७।१–६)

शो३ंसावो३ं यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे ।

प्र प्र वयममृतं जातवेदसम् प्रियं मित्रं न शंसिषो३म्

प्रियं मित्रं न शंसिषमूर्जो नपातं स हिनायमस्मयुः । दाशेम हव्यदातयो३ं

दाशेम हव्यदातये भुवद्वाजेष्वविता भुवद्वृधः । उत त्राता तनूनो३ं (६।४८।१–२)

शो३ंसावो३ं देवो वो द्रविणोदाः पूर्णां विवष्ट्यासिचम् ।

उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहतो३म्

आदिद्वो देव ओहते तं होतारमध्वरस्य प्रचेतसम् । वह्निं देवा अकृण्वतो३ं

वह्निं देवा अकृण्वत दधाति रत्नं विधते सुवीर्यम् । अग्निर्जनाय दाशुषो३ं (७।१६।११–१२)

शो३ंसावो३म् प्र तव्यसीं नव्यसीं धीतिमग्नये । वाचो मतिं सहसः सूनवे भरो३म्

अपां नपाद्यो वसुभिः सह प्रियः । होता पृथिव्यां न्यसीददृत्वियो३ं

स जायमानः परमे व्योमनि । आविरग्निरभवन्मातरिश्वनो३म्

अस्य क्रत्वा समिधानस्य मज्मना । प्र द्यावा शोचिः पृथिवी अरोचयो३म्

अस्य त्वेषा अजरा अस्य भानवः । सुसंदृशः सुप्रतीकस्य सुद्युतो३म्

भात्वक्षसो अत्यक्तुर्न सिन्धवः । अग्ने रेजन्ते अससन्तो अजरो३ं

यमेरिरे भृगवो विश्ववेदसम् । नाभा पृथिव्या भुवनस्य मज्मनो३म्

अग्निं तं गीर्भिर्हिनुहि स्व आ दमे । य एको वस्वो वरुणो न राजतो३ं

न यो वराय मरुतामिव स्वनः । सेनेव सृष्टा दिव्या यथाशनो३म्

अग्निर्जम्भैस्तिगितैरत्ति भर्वति । योधो न शत्रून्त्स वना न्यृञ्जतो३ं

कुविन्नो अग्निरुचथस्य वीरसत् । वसुष्कुविद्वसुभिः काममावरो३ं

चोदः कुवित्तुतुज्यात्सातये धियः । शुचिप्रतीकं तमया धिया गृणो३ं

घृतप्रतीकं व ऋतस्य धूर्षदम् । अग्निं मित्रं न समिधान ऋञ्जतो३म्

इन्धानो अक्रो विदथेषु दीद्यत् । शुक्रवर्णामुदु नो यंसते धियो३ं

शो३ंसावो३म् अग्निर्जातवेदाः सोमस्य मत्सत् । स्वनीकश्चित्रभानुः । अप्रोषिवान् गृहपतिः । तिरस्तमांसि दर्शतः । घृताहवन ईड्यः । बहुलवर्मास्तृतयज्वा । प्रतीत्या शत्रून् जेतापराजितः । अग्ने जातवेदोऽभिद्युम्नमभि सह आयच्छस्व । समेद्धारं स्तोतारमंहसस्पाहि । अग्निर्जातवेदा इहश्रवदिह सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमो३म्

अप्रयुच्छन्नप्रयुच्छद्भिरग्ने । शिवेभिर्नः पायुभिः पाहि शग्मो३म्

अदब्धेभिरदृपितेभिरिष्टे । अनिमिषद्भिः परि पाहि नो जो३ं (१।१४३।१–८)

अथापोहिष्ठीये वियतं स्थित्वा स्थित्वा अपश्चोपस्पृशञ्छंसेत् । उद्गात्रादिष्वन्वारब्धेष्वपावृतशिरस्कः

शो३ंसावो३म् आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसो३ं

यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरो३ं

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नो३ं (१०।९।१–३)

शो३ंसावो३म् उत नोऽहिर्बुध्न्यः शृणोतु । अज एकपात्पृथिवी समुद्रो३ं

विश्वे देवा ऋतावृधो हुवानाः । स्तुता मन्त्राः कविशस्ता अवन्तो३ं (६।५०।१४)

शो३ंसावो३म् देवानां पत्नीरुशतीरवन्तु नः । प्रावन्तु नस्तुजये वाजसातयो३ं

याः पार्थिवासो या अपामपि व्रते । ता नो देवीः सुहवाः शर्म यच्छतो३म्

उत ग्ना व्यन्तु देवपत्नीः । इन्द्राण्यग्नाय्यश्विनी रो३म्

आ रोदसी वरुणानी शृणोतु । व्यन्तु देवीर्य ऋतुर्जनीनो३ं (५।४६।७–८)

शो३ंसावो३ं राकामहं सुहवां सुष्टुती हुवे । शृणोतु नः सुभगा बोधतु त्मनो३ं

सीव्यत्वपः सूच्या च्छिद्यमानया । ददातु वीरं शतदायमुक्थ्यो३ं

यास्ते राके सुमतयः सुपेशसः । याभिर्ददासि दाशुषे वसूनो३ं

ताभिर्नो अद्य सुमना उपागहि । सहस्रपोषं सुभगे रराणो३ं (२।३२।४–५)

शो३ंसावो३म् पावीरवी कन्या चित्रायुः । सरस्वती वीरपत्नी धियं धो३ं

ग्नाभिरच्छिद्रं शरणं सजोषाः । दुराधर्षं गृणते शर्म यंसो३ं। (६।४९।७)

शो३ंसावो३म् इमं यम प्रस्तरमा हि सीद । अङ्गिरोभिः पितृभिः संविदानो३म्

आ त्वा मन्त्राः कविशस्ता वहन्तु । एना राजन्हविषा मादयस्वो३ं (१०।१४।४)

शो३ंसावो३म् मातली कव्यैर्यमो अङ्गिरोभिः । बृहस्पतिर्ऋक्वभिर्वावृधानो३ं

यांश्च देवा वावृधुर्ये च देवान् । स्वाहान्ये स्वधयान्ये मदन्तो३ं (१०।१४।३)

शो३ंसावो३म् उदीरतामवर उत्परासः । उन्मध्यमाः पितरः सोम्यासो३म्

असुं य ईयुरवृका ऋतज्ञाः । ते नोऽवन्तु पितरो हवेषो३ं (१०।१५।१)

**शो३ंसावो३म् आहं पितॄन्सुविदत्राँ अवित्सि । नपातं च विक्रमणं च विष्णो३म्**

**बर्हिषदो ये स्वधया सुतस्य । भजन्त पित्वस्त इहागमिष्ठो३ं** (१०।१५।३)

**शो३ंसावो३म् इदं पितृभ्यो नमो अस्त्वद्य । ये पूर्वासो य उपरास ईयो३ं**

**ये पार्थिवे रजस्या निषत्ताः । ये वा नूनं सुवृजनासु विक्षो३ं** (१०।१५।२)

**शो३ंसावो३ं स्वादुष्किलायं मधुमाँ उतायम् । तीव्रः किलायं रसवाँ उतायो३म्**

**उतो न्वस्य पपिवांसमिन्द्रम् । न कश्चन सहत आहवेषो३म्**

**अयं स्वादुरिह मदिष्ठ आस । यस्येन्द्रो वृत्रहत्ये ममादो३म्**

**पुरूणि यश्चौत्ना शम्बरस्य । वि नवतिं नव च देह्यो हो३म्**

**अयं मे पीत उदियर्ति वाचम् । अयं मनीषामुशतीमजीगो३म्**

**अयं षळुर्वीरमिमीत धीरः । न याभ्यो भुवनं कच्चनारो३म्**

**अयं स यो वरिमाणं पृथिव्याः । वर्ष्माणं दिवो अकृणोदयं सो३म्**

**अयं पीयूषं तिसृषु प्रवत्सु । सोमो दाधारोर्वन्तरिक्षो३ं** (६।४७।१–४)

**शो३ंसावो३म् ययो रोजसा स्कभिता रजांसि । वीर्येभिर्वीरतमा शविष्ठो३ं**

**या पत्येते अप्रतीता सहोभिः । विष्णू अगन् वरुणा पूर्वहूतो३ं**

**विष्णोर्नु कं वीर्याणि प्र वोचम् । यः पार्थिवानि विममे रजांसो३ं**

**यो अस्कभायदुत्तरं सधस्थम् । विचक्रमाणस्त्रेधोरुगायो३ं** (१।१५४।१)

**शो३ंसावो३ं तन्तुं तन्वन्रजसो भानुमन्विहि । ज्योतिष्मतः पथो रक्ष धिया कृतो३म्**

**अनुल्बणं वयत जोगुवामपः । मनुर्भव जनया दैव्यं जनो३ं** (१०।५३।६)

**शो३ंसावो३म् एवा न इन्द्रो मघवा विरप्शी । करत्सत्या चर्षणीधृदनर्वो३ं**

**त्वं राजा जनुषां धेह्यस्मे । अधि श्रवो माहिन्यज्जरित्रो३म्** (४।१७।२०) भूमिमुपस्पृशन्नस्या ऋचो मध्यमे वचन उत्तमं पादमवशिष्य स्थित्वा उत्तमेन वचनेन ध्रुवावनयनं काङ्क्षेत् । **उक्थं वाचीन्द्राय देवेभ्य आश्रुताय त्वा** इति शस्त्वा जपेत् ।

**ये३ यजामहेऽग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मन्दसानो गणश्रिभिः ।**

**पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजू३ वौ३षट् ॥** (५।६०।८)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः ।

**पाशुकं कर्म**

अथानूयाजादि सूक्तवाके विशेषः –

प्रशास्ता– **अग्निमद्य होयारमवृणीतायं सुन्वन् यजमानः पचन् पक्तीः पचन् पुरोळाशान् गृह्णन्नग्नय आज्यं गृह्णन्त्सोमायाज्यं बध्नन्नग्नये छागं सुन्वन्निन्द्राय सोमं भृञ्जन् हरिभ्यां धानाः सूपस्था अद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनाग्नये छागेनेन्द्राय सोमेन हरिभ्यां धानाभिरघत्तं मेदस्तः प्रतिपचताग्रभीदवीवृधत पुरोळाशैरपादिन्द्रः सोमं गवाशिरं यवाशिरं तीव्रान्तं बहुदमध्यमुपोत्थामदाश्रौद्विमदाँ आनळवीवृधतां गूषैस्त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं सुन्वन् यजमानो बहुभ्य आसङ्गतेभ्यः । एष मे देवेषु वसुवार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रू३हि ॥**

होता– **इदं द्यावापृथिवी** इत्यदि **अग्निरिदं..., सोम इदं..., अग्निरिदं..., वनस्पतिरिदं..., इन्द्रो वसुमानिदं..., इन्द्रो रुद्रवानिदं..., इन्द्र आदित्यवानृभुमान् विभुमान् बृहस्पतिवान् विश्वदेव्यावानिदं..., देवा आज्यपा** इत्यादि । **अस्यामृधेद्धोत्रायां देवङ्गमायामाशास्तेऽयं सुन्वन् यजमानः** अत्र नामादेशः कर्तव्यः । **आयुराशास्ते** इत्यादि । शंयुवाकः । वाजिनयागः ।

**अथ हारियोजनम् ।**

प्रशास्ता– **अपाः सोममस्तमिन्द्र प्रयाहि कल्याणीर्जाया सुरणं गृहे ते ।**

**यत्रा रथस्य बृहतो निदानं विमोचनं वाजिनो दक्षिणावतो३म्** ॥ [३।५३।६]

**धाना सोमानामिन्द्राद्धि च पिब च बब्धान्तं हरीधाना उप ऋजीषं जिघ्रतामा रथचर्षणे सिञ्चस्व यत्त्वा पृच्छाद्विशन्पत्नीः क्वामीमदथा इत्यस्मिन् त्सुन्वति यजमाने तस्मै किमराथाः सुष्टु सुवीर्यं यज्ञस्यागुर उदृचं यद्यदृचीकमतोतो तत्तथा भूद्धोतर्यज ॥**

होता– **ये३ यजामहे युनज्मि ते ब्रह्मणा केशिना हरी उप प्र याहि दधिषे गभस्त्योः ।**

**उत्त्वा सुतासो रभसा अमन्दिषुः पूषण्वान् वज्रिन्त्समु पत्न्यामदा३ वौ३षट् ॥** (१।८२।६)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः ।

आहृतमुन्नेत्रा द्रोणकलशमिळामिव प्रतिगृह्योपहवमिष्ट्वावेक्षेत–

**हरिवतस्ते हारियोजनस्य स्तुतस्तोमस्य शस्तोक्थस्येष्टयजुषो यो भक्षो गोसनिरश्वसनिस्तस्य त उपहूतस्योपहूतो भक्षयामि** इति प्राणभक्षं भक्षयित्वा प्रतिप्रदाय द्रोणकलशमात्मानमाप्याय्य होता **उदायुषा** इत्येतेनोपोत्थाय उत्तरेण सर्वान् धिष्णियान् गत्वा पूर्वय द्वारा निष्क्रामत्येवमेव होत्रकाः । अच्छावाकस्त्वपरया द्वारा निष्क्रामति । विनिसृप्य आग्नीध्रीये विनिःसृप्ताहुती जुह्वति–

**अयं पीत इन्दुरिन्द्रं मदेधादयं विप्रो वाचमर्चन्नियच्छन् ।**

**अयं कस्यचिद्द्रुहतादभीके सोमो राजा न सखायं रिषेधात् स्वाहा । सोमायेदं न मम** इति यजमानः ।

**इदं राधो अग्निना दत्तमागाद्यशो भर्गः सह ओजो बलं च ।**

**दीर्घायुत्वाय शतशारदाय प्रतिगृभ्णामि महते वीर्याय स्वाहा । अग्नय इदं .**

आहवनीये षट्शकलान्यभ्यादधाति– **देवकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । आत्मकृतस्यैनसोऽवयजनमसि स्वाहा । एनस एनसोऽवयजनमसि स्वाहा । यद्वो देवाश्चकृम जिह्वया गुरु मनसो वा प्रयुती देवहेळनम् ।**

**अरावा यो नो अभि दुच्छुनायते तस्मिन् तदेनो वसवो नि धेतन स्वाहा ॥** (१०।३७।१२)

द्रोणकलशाद्धाना गृहीत्वा अवेक्षेरन् – **आपूर्याः स्थामापूरयत प्रजया च धनेन च ।**

**इन्द्रस्य कामदुघाः स्थ कामान् मे धुङ्ग्ध्वम् प्रजाँश्च पशूँश्च** इति । तूष्णीमवघ्रायान्तःपरिधिदेशे निवपेयुः । विनिःसृओताहुति प्रभृति एतावत् सर्वैः कर्तव्यम् । तेषां मध्ये ये चमसिनस्ते प्रत्येत्य सव्यावृतो भूत्वा तीर्थदेशे पूर्णाश्चमसातान् व्रजन्ति । स्वस्वचमसात् पश्चादुपविश्य हरिततृणानि दूर्वानि विमृज्य दूर्वारसयुक्ता अपो गृहीत्वा ताभिरद्भिः स्वं स्वमात्मानं दक्षिणैः पाणिभिरप्रदक्षिणं , सव्यैर्वा पाणिभिः प्रदक्षिणं पर्युक्षन्ते– **स्वधा पित्रे स्वधा पितामहाय स्वधा प्रपितामहाय** इति । जीवत्पितृकस्य न पर्युक्षणम् । पाणींश्चमसेष्ववधाय–

**अप्सु धूतस्य देव सोम ते मतिविदो नृभिः सुतस्य स्तुतस्तोमस्य शस्तोक्थस्येष्टयजुषो यो भक्षो गोसनिरश्वसनिस्तस्य त उपहूतस्योपहूतो भक्षयामि** इति प्राणभक्षान् भक्षयित्वा

**माहं प्रजां परासिचं या नः सयावरी स्थन । समुद्रे वो निनयानि स्वं पाथो अपीथ ॥** इत्येतेनाभ्यात्मं स्वचमसस्था अपो भूमौ निनीयात् ।

**अच्छायं वो मरुतः श्लोक एत्वच्छा विष्णुं निषिक्तपामवोभिः ।**

**उत प्रजायै गृणते वयो धुर्यूयं पात स्वस्तिभिः सदा नः ॥** (७।३६।९) इत्येतया भूमौ निषिक्ता आपोऽभिमृशन्ति ।

**दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।**

**सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥** (४।३९।६) इत्याध्रीये दधिद्रप्सान् प्राश्य सख्यानि विसृजन्ते परस्परं हस्तसंस्पर्शनेन–

**उभा कवी युवाना सत्यादा धर्मणस्पती ।**

**परि सत्यस्य धर्मणा वि सख्यानि सृजामहै ॥** इति ।

वेदग्रहणादि पत्नीसंयाजैश्चरित्वा वेदस्तरणं कृत्वाकृत्वा वा सर्वप्रायश्चित्तनि जुहुयादितरैरन्वारब्धः । न संस्थाजपः । अनुबन्ध्याया अकरणपक्षे पशुकर्तृभिः हृगयशूलोद्वासनमन्त्रैव कर्तव्यम् । तीर्थेन निष्क्रम्याग्निपशुकेतनान्यव्यवयन्तो हृदयशूलमुपोयमानमनुमन्त्रयेरन्– **शुगसि योऽस्मान् द्वेष्टि यच्च वयं द्विष्मस्तमभिशोच** इति । तस्योपरिष्टादप उपस्पृशन्ति–

**द्वीपे राज्ञो वरुणस्य गृहो मितो हिरण्ययः ।**

**स नो धृतव्रतो राजा धाम्नो धाम्न इह मुञ्चतु ॥**

**धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च ।**

**यदापो अघ्निया इति वरुणेति शपामह ततो वरुण नो मुञ्च ।**

**मयि वापो मोषधीर्हिंसीरतो विश्वव्यचा अभूस्त्वेतो वरुण नो मुञ्च ॥**

**सुमित्र्या न आप ओषधयो भवन्तु दुर्मित्रास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥** इति ।

अस्पृष्ट्वानवेक्षमाणा हृदयशूलम् परस्परमसंस्पृशन्तः प्रत्यायन्तः सर्वे तिस्रस्तिस्रः समिधो गृह्णीयुः एकैकः ।

**अग्नेः समिदसि तेजोऽसि तेजो मे देहि** इति प्रथमाम् । **एधोऽस्येधिषीमहि** इति द्वितीयाम् । **समिदसि समेधीषीमहि** इति तृतीयाम् । ततस्तीर्थेन प्रविश्य प्रत्यगुदगाहवनीयादवस्थायाहवनीयमुपतिष्ठन्ते–

**आपो अद्यान्वचारिषं रसेन समगस्महि ।**

**पयस्वानग्न आ गहि तं मा संसृज वर्चसा ॥** [१ ।२३ ।२३] इति ।

ततः समिधोऽभ्यादधाति यथा गृहीतम् । **अग्नेः समिदसि तेजोऽसि तेजो मेऽदाः स्वाहा** इति प्रथमाम् । **सोमस्य समिदसि दुरिष्टेर्मा पाहि स्वाहा** इति द्वितीयाम् । **पितॄणां समिदसि मृत्योर्मा पाहि स्वाहा** इति तृतीयाम् ।

अथावभृतं व्रजन्ति । व्रजन्तः साम्नो निधनमुपयन्ति । **ए३ विश्वं समत्रिणं दह३४५** इति । मैत्रावरुणो दण्डमाहरति ।

**॥ अथावभृतेष्टिः ॥**

अवभृतेष्ट्या तिष्ठन्तश्चरन्ति । प्रयाजाद्यनुयाजान्ता । नास्यामिडा । न बर्हिष्मन्तौ प्रयाजानुयाजाः । उदकमनुस्पृशन् बहिः पश्चादवस्थाय स्रुगादापनमाह– **अग्निर्होता वे**त्त्वित्यादि बर्हिर्वर्जं त्रीन् प्रयाजान् यजति ।

उत्तमे प्रयाज– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहा वरुणं स्वाहा देवा आज्यपा** इत्यादि ।

अप्सुमन्तावाज्यभागौ–

**अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे । गर्भे सञ्जायसे पुनो३म् ॥** [८ ।४३ ।९]

**अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशम्भुवो३म् ॥** [१० ।९ ।६] इति पुरोनुवाक्ये ।

प्रधानस्य–

वरुणस्य याज्यानुवाक्या–

**अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ।**

**क्षयन्नस्मभ्यमसुरप्रचेता राजन्नेनांसि शिश्रथः कृतानो३म् ॥** [१ ।२४ ।१४]

**ये३ यजामहे वरुणमुदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय ।**

**अथा वयमादित्य व्रते तवानागसो अदितये स्यामा३ वौ३षट् ॥** [१ ।२४ ।१५]

आनिगदः स्विष्टकृत्–**त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळोऽव यासिसीष्ठाः ।**

**यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मो३म् ॥** [४ ।१ ।४]

**ये३ यजामहेऽग्नीवरुणौ स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।**

**अव यक्ष्म नो वरुणं रराणो वीहि मृळीकं सुहवो न एधी३ वौ३षट् ॥** [४ ।१ ।५]

नेडा । अनुयाजपक्षे बर्हिर्वर्जानुयाजाः ।

संस्थितायां पादानुदकान्तेवदद्युः– **नमो नरुणायाभिष्टितो वरुणस्य पाशः** । तत आचामन्ति– **भक्षस्यावभृथोऽसि** इति प्रोथ्य प्रष्ठीवन्ति (प्रोथनमिति उत्तरास्य शोधनार्थः क्रियाविशेषः । तं कृत्वा निष्ठीवेयुः ।) । शौचार्थमाचमनं कृत्वा, **भक्षितस्यावभृतोऽसि ।** इति पुनरपः पीत्वा प्रोथ्य प्रगिरन्ति । । **भक्षं कृतस्यावभृतोऽसि ।** पूर्ववत् प्रोथनप्रगिरणे । तत आचम्याप्लवन्ते–

**आपो अस्मान् मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।**
**विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि ॥** [१० ।१७ ।१०]
**इदमापः प्रवहत यत्किञ्च दुरितं मयि ।**
**यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥** [१ ।२३ ।२२]

**सुमित्र्या न आप ओषधयो भवन्तु दुर्मित्रास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ।** इति स्नानं कुर्युः । अदीक्षिता एभिर्मन्त्रैरभ्युक्षेरन् स्नानं कुर्युरिति वा । उन्नेता सर्वानुदकादुन्नयति । **उन्नेतरुन्नोन्नयोन्नेतर्वस्वो अभ्युनयानः** इत्युन्नीयमाना जपन्ति ।

**उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।**
**देवं देवत्रा सूर्यमगन्महि ज्योतिरुत्तमम् ॥** [१ ।५० ।१०]

इत्युदेत्य अस्पृष्ट्वा अनवेक्षमाणा असंस्पृशन्तः प्रत्यायन्तः समिधः कुर्वते तिस्रस्तिस्र एकैकः ।

**अग्नेः समिदसि तेजोऽसि तेजो मे देहि** इति प्रथमाम् । **एधोऽस्येधिषीमहि** इति द्वितीयाम् । **समिदसि समेधीषीमहि** इति तृतीयाम् । ततस्तीर्थेन प्रविश्य प्रत्यगुदगाहवनीयादवस्थायाहवनीयमुपतिष्ठन्ते–

**आपो अद्यान्वचारिषं रसेन समगस्महि ।**
**पयस्वानग्न आ गहि तं मा संसृज वर्चसा ॥** [१ ।२३ ।२३]

ततः समिधोऽभ्यादधाति यथा गृहीतम् । **अग्नेः समिदसि तेजोऽसि तेजो मेऽदाः स्वाहा** इति प्रथमाम् । **सोमस्य समिदसि दुरिष्टेर्मा पाहि स्वाहा** इति द्वितीयाम् । **पितृणां समिदसि मृत्योर्मा पाहि स्वाहा** इति तृतीयाम् ।

ततः संस्थाजपेनोपस्थानम् ।

**उदयनीयेष्टिः ।**

गार्हपत्य उदयनीयया चरन्ति । सा प्रायणीयावत् । अस्या इष्टेः पञ्चदशसामिधेन्यः । नाज्यभागौ । अग्निः, सोमः, सविता, पथ्या स्वस्तिः, अदितिश्च प्रधानदेवताः । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

**नमः प्रवक्त्रे** इत्यादि प्रकृतिवत् सामिधेन्यः ।

आवाहने– (उपांशु) **अग्निम्** (उच्चैः) **अग्न आ३वह ।** (उपांशु) **सोमम् आ३वह ।** (उपांशु) **सवितारम् आ३वह ।** (उपांशु) **पथ्यां स्वस्तिम् आ३वह ।** (उपांशु) **अदितिम् आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहा स्वाहा** (उपांशु) **अग्निं स्वाहा** (उपांशु) **सोमं स्वाहा** (उपांशु) **सवितारं स्वाहा** (उपांशु) **पथ्यां स्वस्तिं** (उपांशु) **अदितिं स्वाहा देवा आज्यपा** इत्यादि ।

प्रधानानां याज्यानुवाक्याः–

(उपांशु) **आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोह्ळुम् ।**

**अग्निर्विद्वान् त्स यजात् सेदु होता सो अध्वरान् त्स ऋतून् कल्पयाति ओ३म् ॥** [१०।२।३]

**ये३ यजामहे** (उपांशु) **अग्निमग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।**

**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेमा३ वौ३षट् ॥** [१।१८९।१]

(उपांशु **या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ।**

**तेभिर्नो विश्वैः सुमना अहेळन् राजन् त्सोम प्रति हव्या गृभाय ओ३म् ॥** [१।९१।४]

**ये३ यजामहे** (उपांशु) **सोमं त्वं सोम प्रचिकितो मनीषा त्वं रजिष्ठमनुनेषि पन्थाम् ।**

**तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीरा३ वौ३षट् ॥** [१।९१।१]

(उपांशु) **य इमा विश्वा जातान्या श्रावयति श्लोकेन । प्र च सुवाति सविता ओ३म् ॥**[५।८२।७]

**ये३ यजामहे** (उपांशु) **सवितारमा विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे ।**

**सत्यसवं सविताराइं वौ३षट् ॥** [५।८२।७]

(उपांशु) **स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।**

**सा नो अमा सो अरणो निपातु स्वावेशा भवतु देवगोपा ओ३म् ॥**

**ये३ यजामहे** (उपांशु) **पथ्यां स्वस्तिं स्वस्ति नः पथ्यासु धन्वसु स्वस्त्यप्सु वृजने स्वर्वति ।**

**स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातना३ वौ३षट् ॥** [१०।६३।१६–१५]

(उपांशु) **महीमूषु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम ।**

**तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतीम् ओ३म् ॥**

**ये३ यजामहे** (उपांशु) **अदितिं सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।**

**दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तया३इ वौ३षट् ॥** [१०।६३।१०]

स्विष्टकृदि–

**सेदग्निरग्नीँरत्यस्त्वन्यान् यत्र वाजी तनयो वीळुपाणिः । सहस्रपाथा अक्षरा समोतो३म् ॥**

**ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निः** (उपांशु) **अग्नेः प्रियाधामान्ययाट्** (उपांशु) **सोमस्य प्रियाधामान्ययाट्** (उपांशु) **सवितुः प्रियाधामान्ययाट्** (उपांशु) **पथ्याः स्वस्तेः प्रियाधामान्ययाट्** (उपांशु) **अदितेः प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि ।...जुषतां हविः**

**सेदग्निर्यो वनुष्यतो निपाति समेद्धारमंहस उरुष्यात् । सुजातासः परिचरन्ति वीरा३ वौ३षट् ॥**

इळासूक्तवाकौ प्रकृतिवत् । सूक्तवाके विशेषः– (उपांशु) **अग्निः इदं...,** (उपांशु) **सोमः इदं...,** (उपांशु) **सविता इदम्...,** (उपांशु) **पथ्या स्वस्तिः इदं...,** (उपांशु) **अदितिः इदं..., देवा आज्यपा** इत्यादि । शंय्वन्ता सन्तिष्ठते ।

**मैत्रावरुण्यानूबन्ध्या**

तस्याग्नीषोमीयवत् प्रयोगः । सदस्येके उत्तरवेद्यामेके समामनन्ति ।

वपायागे–

प्रशास्ता– **आ वां मित्रावरुणा हव्यजुष्टिं नमसा देवाववसा ववृत्याम् ।**

**अस्माकं ब्रह्म पृतनासु सह्या अस्माकं वृष्टिर्दिव्या सुपारो३म् ॥** (१।१५२।७)

**होता यक्षन्मित्रावरुणाविस्राया वपाया मेदसो जुषेतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मन्तवो ह सर्गाः ।**

**अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे३ वौ३षट् ॥** (१।१५२।१)

पुरोळाशयागे–

प्रशास्ता– **आ यातं मित्रावरुणा सुशस्त्युप प्रिया नमसा हूयमाना ।**

**सं यावप्न स्थो अपसेव जनाञ् च्छ्रुधीयतश्चिद्यतथो महित्वो३म् ॥** (६।६७।३)

**होता यक्षन्मित्रावरुणौ पुरोळाशस्य जुषेतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन ।**

**आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा३ वौ३षट् ॥** (७।६२।५)

हविर्यागे–

प्रशास्ता– **आ नो मित्रावरुणा हव्यजुष्टिं घृतैर्गव्यूतिमुक्षतमिळाभिः ।**

**प्रति वामत्र वरमा जनाय पृणीतमुद्नो दिव्यस्य चारो३म्** ॥ (७।६५।४)

**होता यक्षन्मित्रावरुणावुस्राया हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्यागृभः । घस्तां नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवं मित्रावरुणौ जुषेतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे यद्बंहिष्ठं नातिविधे सुदानू अच्छिद्रं शर्म भुवनस्य गोपा ।**

**तेन नो मित्रावरुणावविष्टं सिषासन्तो जिगीवांसः स्यामा३ वौ३षट् ॥** (५।६२।९)

शूलोद्वासनादि संस्थाजपान्तं निरूढवत् । यदि अग्नीषोमीयस्थाने सवनीयस्थाने वा पश्वेकादशिनी प्रयुक्ता स्यात् तर्ह्यनूबन्ध्यायां वपायां हुतायां होतृमैत्रावरुणौ आग्नीध्रीयायतनं सदश्चोत्तरेण गत्वा पूर्वया द्वारा शालामुखीयं प्रविश्य तत्र त्वाष्ट्रेण पशुना चरन्ति । तं पशुं यूपाञ्जनादि पर्यग्निकरणान्तं कृत्वोत्सृजन्ति । यदि त्वधर्यव आज्येन समाप्नुयुस्तथैव होता कुर्यात् । आवाहने– **अग्निमग्न आ३वह । सोममा३वह । त्वष्टारमा३वह । वनस्पतिमा३वह । देवाँ आज्यपाँ आ३वहे**त्यादि । आज्येन समापने अनेकाः पक्ष भवन्ति । आज्यशब्देन संव्यवहारमात्रं कृत्वा पशुवदेव क्रियते इत्येकः पक्षः । संव्यवहारोऽपि पशुशब्देनेत्यपरः । इष्टिवदेवाज्येन त्वाष्ट्रयाग इत्येके । इष्टिपक्षेऽपि वपापुरोडाशहविःस्थानेषु त्रिःकृत्वः क्रियते इत्यपरः पक्षः । यद्यन्यत्यापि कुर्युः तस्य तस्यानुगुणमादेशानस्मदीयाः

कुर्युः । आज्येन क्रियमाणे पशुवत्क्रियायां निपातान् पशुवदेव ब्रूयात् । यद्यनूबन्ध्ये पशुपुरोडाशमनु देविकाहवींषि निर्वपेयुस्तर्हि **धातानुमती राका सिनीवाली कुहू** इति देवताक्रमः । देवीनां चेत् **सूर्यो द्यौरुषा गौः पृथिवी** इति । धात्रादीनां याज्यापुरोनुवाक्याः । नात्रदेवतादेशः ।

(उपांशु) **धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम् ।**

**वयं देवस्य धीमहि सुमतिं वाजिनीवतः ओ३म् ॥** [आ.श्रौ.६।१४।१६]

**ये३ यजामहे** (उपांशु) **धाता प्राजानामुत राय ईशे धातेदं विश्वं भुवनं जजान ।**

**धाता कृष्टीरनिमिषाभिचष्टे धात्र इद्धव्यं घृतवज्जुहोता३ वौ३षट् ॥** [आ.श्रौ.६।१४।१६]

अनुमत्याः– (उपांशु) **अनुनोद्यामनुमतिर्यज्ञं देवेषु मन्यताम् ।**

**अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ओ३म् ॥**

**ये३ यजामहे**(उपांशु) **अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।**

**क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषाद्३ वौ३षट् ॥**

राकायाः– (उपांशु) **राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।**

**सीव्यत्वपः सूच्या च्छिद्यमानया दधातु वीरं शतदायमुक्थ्यम् ओ३म् ॥** [२ ।३२ ।४]

**ये३ यजामहे** (उपांशु) **यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।**

**ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा३ वौ३षट् ॥** [२ ।३२ ।५]

सिनीवाल्याः– (उपांशु) **सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।**

**जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ओ३म् ॥** [२ ।३२ ।६]

**ये३ यजामहे** (उपांशु) **या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी ।**

**तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतना३ वौ३षट् ॥** [२ ।३२ ।७]

कुह्वाः– (उपांशु) **कुहूमहं सुवृतं विद्मनापसमस्मिन् यज्ञे सुहवां जोहवीमि ।**

**सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ओ३म् ॥**

**ये३ यजामहे** (उपांशु) **कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु ।**

**सं दाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधातू३ वौ३षट् ॥**

सूर्यादीनां देवीनां याज्यापुरोनुवाक्याः–

(उपांशु) **तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रोचनम् ओ३म् ॥** [१ ।५० ।४]

**ये३ यजामहे** (उपांशु) **चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।**

**आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तथुषश्चा३ वौ३षट् ॥** [१ ।११५ ।१]

दिवः–(उपांशु) **स्मत्पुरंधिर्न आ गहि विश्वतोधीर्न ऊतये ।**

**दिवो अमुष्य शासतो दिवं यय दिवावसो ओ३म् ॥** (८।३४।६)

**ये३ यजामहे** (उपांशु) **आ नो याहि महेमते सहस्रोते शतामघ ।**

**दिवो अमुष्य शासतो दिवं यय दिवावसो ३ वौ३षट् ॥** (८।३४।७)

उषसः– (उपांशु) **आ द्यां तनोषि रश्मिभिरान्तरिक्षमुरु प्रियम् । उषः शुक्रेण शोचिषा ओ३म् ॥** (४।५२।७)

**ये३ यजामहे** (उपांशु) **आवहन्ती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना ।**

**ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वै३ द्वौ३षट् ॥** (१।११३।१५)

गोः– (उपांशु) **न ता अर्वा रेणुककाटो अश्नुते न संस्कृतत्रमुप यन्ति ता अभि ।**

**उरुगायमभयं तस्य ता अनु गावो मर्तस्य वि चरन्ति यज्वनः ओ३म् ॥** (६।२८।४)

**ये३ यजामहे** (उपांशु) **न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति ।**

**देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सहा३ वौ३षट् ॥** (६।२८।३)

पृथिव्याः– (उपांशु) **बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।**

**प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ओ३म् ॥** (५।८४।१)

**ये३ यजामहे** (उपांशु) **दृळ्हा चिद्या वनस्पतीन् क्ष्मया दर्धर्ष्योजसा ।**

**यत्ते अभ्रस्य विद्युतो दिवो वर्षन्ति वृष्टया३ वौ३षट् ॥** (५।८४।३)

**मैत्रावरुण्यामिक्षा ।**

अनूबन्ध्यास्थाने पश्वलाभे पयस्या मैत्रावरुण्या कर्तव्या । आज्यभागप्रभृति वाजिनान्ता । स्थानाचमने कृत्वा तीर्थेन प्रविश्य उत्तरवेदिसमीपे निरसनोपवेशने कृत्वा स्रुगादापनम् । वार्त्रघ्नावज्यभागौ । प्रधानस्य–

**आ नो मित्रावरुणा हव्यजुष्टिं घृतैर्गव्यूतिमुक्षतमिळाभिः ।**

**प्रति वामत्र वरमा जनाय पृणीतमुद्नो दिव्यस्य चारो३म् ॥** (७।६५।४)

**ये३ यजामहे मित्रावरुणौ यद्बंहिष्ठं नातिविधे सुदानू अच्छिद्रं शर्म भुवनस्य गोपा ।**

**तेन नो मित्रावरुणावविष्टं सिषासन्तो जिगीवांसः स्यामा३ वौ३षट् ॥** (५।६२।९)

प्रकृत्या संयाज्ये अनिगदे । वाजिनयागः । कर्मिणो वाजिनं भक्षयेयुः । अथाध्वर्युप्रत्ययानुसारेण प्रधानप्रभृतीडान्ता भवति । देविकाहवींषि तु पूर्ववत् । संस्थितायां सर्वप्रायश्चित्तनि हुत्वा संस्थाजपेनोपतिष्ठेत ।

**उदवसानीयेष्टिः ।**

अस्या इष्टेः पञ्चदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । अग्निः प्रधानदेवता । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । अग्निमा३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं स्वाहा देवा आज्यपा** इत्यादि ।

वार्त्रघ्नावाज्यभागौ– **अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः ।**

अग्नेर्याज्यानुवाक्याः–

**अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथो३म्॥** (४।१०।२)

**ये३ यजामहेऽग्निमाभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम ।**

**प्र ते दिवो न स्तनयन्ति शुष्मा३ वौ३षट् ॥** (४।१०।४)

स्विष्टकृति– **एभिनी अर्कैर्भवा नो अर्वाङ् स्वर्ण ज्योतिः । अग्ने विश्वेभिः सुमना अनीको३म् ॥** (४।१०।३)

**अयाळग्नेः प्रियाधामानि..., जुषतां हविर्**

**अग्ने तमद्याऽश्वं न स्तोमैः क्रतुं न भद्रं "दिस्पृशम् । ऋध्यामा त ओहै३ वौं३षट् ॥** (४।१०।१)

सूक्तवाके– **अग्निरिदं..., सोम इदं..., अग्निरिदं...**, इत्यादि । शेषं प्रकृतिवत् ॥

**इत्यग्निष्टोमप्रयोगः ॥**

## अथ साग्निचित्ये विशेषाः ॥

**उखासम्भरणीयेष्टिः ।**

अस्या इष्टेः पञ्चदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । अग्निर्ब्रह्मण्वान्, अग्निः क्षत्रवान्, अग्निः क्षत्रभृत् च प्रधानदेवताः । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । अग्निं ब्रह्मण्वन्तमा३वह ।अग्निं क्षत्रवन्तमाा३वह । अग्निं क्षत्रभृतमा३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

**ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं ब्रह्मण्वन्तं स्वाहाग्निं क्षत्रवन्तं स्वाहाग्निं क्षत्रभृतं स्वाहा देवा आज्यपा** इत्यादि ।

वार्त्रघ्नावाज्यभागौ– **अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः ।**

अग्नेर्ब्रह्मण्वतः याज्यानुवाक्या–

**एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा ।**

**उत प्र णेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्यो३म् ॥** (१।३१।१८)

**ये३ यजामहेऽग्निं ब्रह्मण्वन्तं ब्रह्म च ते जातवेदो नमश्चेयं च गीः सदमिद्वर्धनी भूत् ।**

**रक्षा णो अग्ने तनयानि तोका रक्षोत नस्तन्वो अप्रयुच्छा३न् वौ३षट् ॥** (१०।४।७)

अग्नेः क्षत्रवतः–

**पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन् वसुता ते अश्याम् ।**

**पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वो३म् ॥** (६।१।१३)

**ये३ यजामहेऽग्निं क्षत्रवन्तं स चित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम् ।**
**चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्र चन्द्राभिर्गृणते युवस्वा वौ३षट् ॥** (६।६।७)
अग्नेः क्षत्रभृतः–
**अग्निरीशे बृहतः क्षत्रियस्याग्निर्वाजस्य परमस्य रायः ।**
**दधाति रत्नं विधते यविष्ठो व्यानुषङ् मर्त्याय स्वधावो३म् ॥** (४।१२।३)
**ये३ यजामहेऽग्निं क्षत्रभृतम् अर्चामि ते सुमतिं घोष्यर्वाक्सं ते वावाता जरतामियं गीः ।**
**स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यू३ न्वौ३षट् ॥** (४।४।८)

**ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाळग्नेर्ब्रह्मण्वतः प्रियाधामान्ययाडग्नेः क्षत्रवतः प्रियाधामान्ययाडग्नेः क्षत्रभृतः प्रियाधामान्ययाट् देवानामाज्यपानां प्रियाधामानि** इत्यादि ।
सूक्तवाके– **अग्निरिदं..., सोम इदं..., अग्निर्ब्रह्मण्वानिदं..., अग्निः क्षत्रवानिदं..., अग्निः क्षत्रभृदिदं...,**
**देवा आज्यपा** इत्यादि । पौर्णमासवदन्यत् ।

**वायव्यः पशुः ।**
तस्यैन्द्राग्नवत् कल्पः । प्राजापत्यः पशुपुरोडाशः । विशेषस्तु–
अथावाहने– **अग्निमग्न आ३वह । सोममा३वह । वायुं नियुत्वन्तमा३वह । वनस्पतिमा३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।
अध्रिगौ– **मेधपतये मेधम्** इति ।
वपायागे–
प्रशास्ता– **आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार ।**
**उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयो३म् ॥** (७–९२–१)
**होता यक्षद वायुं नियुत्वन्तं छागस्य वपाया मेदसो जुषतां हविर्होतर्यज ॥**
होता– **ये३ यजामहे पीवोअन्नाँ रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः ।**
**ते वायवे समनसो वि तस्थुर्विश्वेन्नरः स्वपत्यानि चक्रू३ वौ३षट् ॥** (७–९१–३)
प्राजापत्यपशुपुरोळाशयागे–
प्रशास्ता– **य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।**
**यस्य च्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेमो३म् ॥** (१०–१२१–२)
**होता यक्षत् प्रजापतिं पुरोळाशस्य जुषेतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे येन द्यौरुग्रा पृथिवी च दृळ्हा येन स्वः स्तभितं येन नाकः ।**

**यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेमा३ वौ३षट्** ॥ (१०–१२१–५)

हविर्यागे–

प्रशास्ता– **आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि यज्ञम् ।**

**वायो अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नो३म्** ॥ (७–९२–५)

**होता यक्षद् वायुं नियुत्वन्तं छागस्य हविष आददद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्यागृभः । घसन् नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करदेव वायुर्नियुत्वान् जुषतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे प्र वायुमच्छा बृहती मनीषा बृहद्रयिं विश्ववारं रथप्राम् ।**

**द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्या३ वौ३षट्** ॥ (६–४९–४)

वनस्पतियागे विशेषः– **होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्टया रशनया धित । यत्राग्नेराज्यस्य हविषः प्रियाधामानि यत्र सोमस्याज्यस्य हविषः प्रियाधामानि यत्र वायोर्नियुत्वतश्छागस्य हविषः प्रियाधामानि यत्र वनस्पतेः प्रियापाथांसि यत्र देवानामाज्यपानां प्रियाधामानि यत्राग्नेर्होतुः प्रियाधामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद् रभीयसाविव कृत्वीकरदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज ॥**

स्विष्टकृत्प्रैषे विशेषः– **होता यक्षदग्निं स्विष्टकृतमयाळग्निरग्नेराज्यस्य हविषः प्रियाधामान्ययाट् सोमस्याज्यस्य हविषः प्रियाधामान्ययाड् वायोर्नियुत्वतश्छागस्य हविषः प्रियाधामान्ययाड् वनस्पतेः प्रियापाथांस्ययाड् देवानामाज्यपानां प्रियाधामानि यक्षदग्नेर्होतुः प्रियाधामानि यक्षत्स्वं महिमानामायजतामेज्या इषः कृणातु सो अध्वरा जातवेदा जुषतां हविर्होतर्यज ॥**

सूक्तवाकप्रैषे– **अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोळाशं गृह्णन्नग्नय आज्यं गृह्णन् त्सोमायाज्यं बध्नन् वायवे नियुत्वते छागं सूपस्था अद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येन वायवे नियुत्वते छागेनाघत्तं मेदस्तः प्रतिपचताग्रभीदवीवृधत पुरोळाशेन त्वामद्यर्ष आर्षेय ऋषीणांनपादवृणीतायं यजमानो बहुभ्य आसङ्गतेभ्यः । एष मे देवेषु वार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रू३हि ॥**

होता– **इदं द्यावापृथिवी** इत्यदि **अग्निरिदं..., सोम इदं..., वयुर्नियुत्वानिदं..., वनस्पतिरिदं..., देवा आज्यपा** इत्यादि । अन्यत् सर्वं प्रकृतिवत् ।

**दीक्षणीयेष्टिः ।**

अस्या इष्टेः सप्तदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । अग्नाविष्णू , वैश्वानरः, आदित्याः सरस्वती अदितिर्वा प्रधानदेवताः । स्विष्टकृत् प्रयाजादयोऽङ्गदेवताः, देवा आज्यपाश्च ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह ।** (उपांशु) **अग्नाविष्णू आ३वह ।** (उपांशु) **वैश्वानरम् आ३वह ।** (उपांशु) **आदित्यान् आ३वह ।** (उपांशु) **सरस्वतीम्** (**अदितिम्** वा) **आ३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहा** (उपांशु) **अग्नाविष्णू स्वाहा** (उपांशु) **वैश्वानरं स्वाहा** (उपांशु) **आदित्यान् स्वाहा** (उपांशु) **सरस्वतीं** (**अदितिम्** वा) **स्वाहा देवा आज्यपा** इत्यादि ।

वार्त्रघ्नावाज्यभागौ– **अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः ।**

अग्नाविष्ण्वोर्याज्यानुवाक्या–

(उपांशु) **अग्निर्मुखं प्रथमो देवतानां सङ्गतानामुत्तमो विष्णुरासीत् ।**

**यजमानाय परिगृह्य देवान् दीक्षयेदं हविरागच्छतं नः ओ३म् ॥**

**ये३ यजामहे (उपांशु) अग्नाविष्णू अग्निश्च विष्णो तप उत्तमं महो दीक्षापालाय वनतं हि शक्रा ।**

**विश्वैर्देवैर्यज्ञियैः संविदानौ दीक्षामस्मै यजमानाय धत्ता३ं वौ३षट् ॥**

वैश्वानरस्य–

(उपांशु) **वैश्वानरो अजीजनदग्निर्नो नव्यसीं मतिम् । क्ष्मया वृधान ओजसा ओ३म् ॥**

**ये३ यजामहे** (उपांशु) **पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ।**

**वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्ता३ं वौ३षट् ॥** [१ ।९७ ।२]

आदित्यानाम्–

**धारयन्त आदित्यासो जगत् स्था देवा विश्वस्य भुवनस्य गोपाः ।**

**दीर्घाधियो रक्षमाणा असुर्यमृतावानश्चयमाना ऋणानो३म् ॥** (२–२७–४)

**ये३ यजामहे** (उपांशु) **विद्यामादित्या अवसो वो अस्य यदर्यमन् भय आ चिन्मयोभु ।**

**युष्माकं मित्रावरुणा प्रणीतौ परि श्वभ्रेव दुरितानि वृज्या३ं वौ३षट् ॥** (२–२७–५)

सरस्वत्याः–

**पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसो३म् ॥** [१ ।३ ।१०]

**ये३ यजामहे पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।**

**ग्नाभिरच्छिद्रं शरणं सजोषा दुराधर्षं गृणते शर्म यंसा३द् वौ३षट् ॥** [६ ।४९ ।७]

पक्षे अदित्याः–

**उत त्वामदिते मह्यं देव्युपब्रुवे । सुमृळीकामभिष्टयो३म् ॥** [८ ।६७ ।१०]

**ये३ यजामहे मही मूषु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम ।**

**तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीती३ं वौ३षट् ॥**

स्विष्टकृतः याज्यानुवाक्या–

**प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वां शश्वन्त उपयन्ति वाजो३म् ॥**[७ ।१ ।३]

**ये३ यजामहेऽग्निं स्विष्टकृतमयाळग्निरग्नेः प्रियाधामान्ययाट् सोमस्य प्रियाधामान्ययाट्** (उपांशु) **अग्नाविष्ण्वोः प्रियाधामान्ययाट्** (उपांशु) **वैश्वानरस्य प्रियाधामान्ययाट्** (उपांशु) **आदित्यानाम् प्रियाधामान्ययाट्** (उपांशु) **सरस्वत्याः** (**अदित्याः** वा) **प्रियाधामान्ययाड् देवानामाज्यपानां प्रियाधामानि ।...जुषतां हवि–**
**रिमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ । प्रति न ईं सुरभीणि व्यन्तू३ वौ३षट् ॥** [७ ।१ ।१८]

सूक्तवाके– **अग्निरिदं..., सोम इदं...,** (उपांशु) **अग्नाविष्णू इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्** ।(उपांशु) **वैश्वानरः इदं...,** (उपांशु) **आदित्याः इदं...,** (उपांशु) **सरस्वती** (**अदितिः** वा) **इदं..., देवा आज्यपा** इत्यादि ।

प्रथमस्यामुपसदि वृत्तायां **चित्यग्निभ्यः प्रणीयमानेभ्यः** इति प्रेषितः पुरीष्यचितयेन्वाह यदि होता दीक्षितश्चेत् । अदीक्षिते यजमानो ब्रूयात् । सम्प्रैषात् पश्चात् पदमत्रेऽवस्थाय **हिम् भूर्भुवःस्वरो ३म् ।** इत्यभिहिंकृत्य
**पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः ।**
**जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महो३म् ॥** (३–२२–४) इत्युपांशु सप्रणवां त्रिरुक्त्वा व्रजत्स्वनुव्रजेत् । अनुवचनारम्भस्थाने स्थित्वा **भूर्भुवःस्वः** इति वाचं विसृज्य ततः **प्रणयत** इति सम्प्रैषं ब्रूयात् । सञ्चितेऽग्नौ छन्दोगैरनुगाने कृते पश्चादग्निपुच्छस्य निरसनोपवेशने कृत्वा अभिहिंकृत्य मध्यमया वाचा
**अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।**
**अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नामो३म् ॥** (३–२६–७) इति त्रिः शंसेत् ।

एतस्मिन्नेवासने अग्निप्रणयनीयानन्तरं वैश्वानरीयेष्टिः ।

अग्नेर्वैश्वानरस्य याज्यानुवाक्या–
**वैश्वानरो अजीजनदग्निर्नो नव्यसीं मतिम् । क्ष्मया वृधान ओजसा ओ३म् ॥**
**ये३ यजामहे पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ।**
**वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्ता३ं वौ३षट् ॥** [१ ।९७ ।२]

कृत्स्नेष्टिपक्षे– सप्तदशसामिधेन्यः । वार्त्रघ्नावाज्यभागौ । अग्निर्वैश्वानरः प्रधानदेवता । न स्विष्टकृत् । प्रयाजानूयाजाश्च विद्यन्ते । तीर्थेन प्रविश्यानिपुच्छस्य पश्चादवस्थाय **नमः पवक्त्रे** इत्यादि ।

आवाहने– **अग्निमग्न आ३वह । सोममा३वह । अग्निं वैश्वानरम् आ३वह । आवह जातवेद** इत्यादि ।

उत्तमे प्रयाजे– **ये३ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं वैश्वानरं स्वाहा जुषाणा** इत्यादि । उभयत्र **देवाँ आज्यपाँ** इत्यस्य लोपः ।

वार्त्रघ्नावाज्यभागौ– **अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः** । पूर्वोक्तयाजुआनुवाक्या । स्विष्टकृदादि लुप्यते आ सूक्तवाकात् । सूक्तवाके– **अग्निरिदं..., सोम इदं..., अग्निर्वैश्वानर इदं..., अस्यामृधेत्** इत्यादि इष्टिशेषः संस्थाजपवर्जम् ।

पशुपुरोडाशस्विष्टकितः पुरस्ताद् यदि देवसूनां हवींष्यन्वायातयेयुस्तदा अग्निर्गृहपतिः, सोमो वनस्पतिः, सविता सत्यप्रसवः, बृहस्पतिर्वाचस्पतिः, इन्द्रो ज्येष्ठः, मित्रः सत्यः, वरुणो धर्मपतिः, रुद्रः पशुमान् पशुपतिर्वा ।

तेषाम् उपांशु याज्यानुवाक्या देवतादेशवर्जम् ।

अग्नेर्गृहपतेः–

**त्वमग्ने बृहद्वयो दधासि देव दाशुषे । कविर्गृहपतिर्युवा ॐ ॥** (८–१०२–१)

**ये३ यजामहे हव्यवाळग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे ।**

**सुगार्हपत्याः समिषो दिदीह्यस्मद्यक् सं मिमीहि श्रवांसी३ वौ३षट् ॥** [५ ।४ ।२]

सोमस्य वनस्पतेः–

**त्वं च सोम नो वशो जीवातुं न मरामहे । प्रियस्तोत्रो वनस्पतिः ॐ ॥** (१–९१–६)

**ये३ यजामहे ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।**

**श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभा३ न्वौ३षट् ॥** (९–९६–६)

सवितुः सत्यप्रसवस्य–

**आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे । सत्यसवं सवितारम् ॐ ॥** [५ ।८२ ।७]

**ये३ यजामहे न प्रमिये सवितुर्दैव्यस्य तद्यथा विश्वं भुवनं धारयिष्यति ।**

**यत्पृथिव्या वरिमन्ना स्वङ्गुरिर्वर्ष्मन् दिवः सुवति सत्यमस्य ता३ द्वौ३षट् ॥** (४–५४–४)

बृहस्पतेर्वाचस्पतेः–

**बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरत नामधेयं दधानाः ।**

**यदेषां श्रेष्ठं यदरिप्रमासीत् प्रेणा तदेषां निहितं गुहाविः ॐ ॥** (१०–७१–१)

**ये३ यजामहे हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् ।**

**बृहस्पतिरभिकनिक्रदद् गा उत प्रास्तौदुच्च विद्वाँ अगाया३ द्वौ३षट् ॥** (१०–६७–३)

इन्द्रस्य ज्येष्ठस्य–

**प्र स साहिषे पुरुहूत शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु ।**

**इन्द्राभर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनाम् ॐ।** [१० ।१८० ।१]

**ये३ यजामहे भुवस्त्वमिन्द्र ब्रह्मणा महान् भुवो विश्वेषु सवनेषु यज्ञियः ।**

**भुवो नॄँः श्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणा३ इ वौ३षट् ॥** [१० ।५० ।४]

मित्रस्य सत्यस्य–

**अनमीवास इळया मदन्तो मितज्ञवो वरिमन्ना पृथिव्याः ।**

**आदित्यस्य व्रतमुपक्षियन्तो वयं मित्रस्य सुमतौ स्याम ॐ ॥** (३–५९–३)

**ये३ यजामहे प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन ।**

**न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरा३ द्वौ३षट्** ॥ (३–५९–२)

वरुणस्य धर्मपतेः–

**त्वां नष्टवान् महिमाय पृच्छते त्वया बद्धो मुमुक्षते ।**

**त्वं विश्वस्माद् भुवनात् पासि धर्मणा सूर्यात् पासि धर्मणा ॐ** ॥ [आ.श्रौ.४।११।६]

**ये३ यजामहे यत्किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।**

**अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषा३ वौ३षट्** ॥ (७–८९–५)

रुद्रस्य पशुमतः पशुपतेर्वा–

**उप ते स्तोमान् पशुपा इवाकरं रास्वा पितर्मरुतां सुम्नमस्मे ।**

**भद्रा हि ते सुमतिर्मृळयत्तमाथा वयमव इत्ते वृणीमहे ॐ** ॥ (१–११४–९)

**ये३ यजामहे आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे ते अस्तु ।**

**मृळा च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विबर्हा३ वौ३षट्** ॥ (१–११४–१०)

**सर्वपृष्ठेष्टिः ।**

यद्यु वै सर्वपृष्ठान्यन्वायातयेयुः अग्निर्गायत्रस्त्रिवृद् राथन्तरो वासन्तिकः, इन्द्रस्त्रैष्टुभः पञ्चदशो बार्हतो ग्रैष्मः, विश्वेदेवा जागताः सप्तदशा वैरूपा वार्षिका, मित्रावरुनावानुष्टुभावेकविंशौ वैराजौ शारदौ, बृहस्पतिः पाङ्क्तस्त्रिणवः शाक्वरोहैमन्तिकः, सवितातिच्छन्दास्त्रयस्त्रिंशो रैवतः शैशिरः, अदितिर्विष्णुपत्नी, अनुमतिः, वैश्वानरः, कः इति प्रधानदेवताः । उपांशु याज्यानुवाक्या देवतादेशवर्जम् ।

अग्नेः–

**समिद्दिशमाशयानः स्वर्विन् मधुरेतो माधवः पात्वस्मान् ।**

**अग्निर्देवो दुष्टरीतुरदाभ्य इदं क्षत्रं ददातु पात्वस्मान् ॐ ॥**

**रथन्तरं सामभिः पात्वस्मान् गायत्री छन्दसां विश्वरूपा ।**

**त्रिवृन्नो विष्ठया स्तोमो अह्नां समुद्रो वात इदमोजः पिपर्तू३ वौ३षट् ॥**

इन्द्रस्य–

**उग्रा दिशामभिभूतिर्वयोधाः शुचिः शुक्रेऽहन्योजसीनाम् ।**

**इन्द्राधिपतिः पिपृतादतो नो महि क्षत्रं विश्वतो धारयेदम् ॐ ॥**

**ये३ यजामहे बृहत्साम क्षत्रभृद् वृद्धवृष्ण्यं त्रिष्टुभौजः शुभितमुग्रवीरम् ।**

**इन्द्रः स्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्षा३ वौ३षट् ॥**

विश्वेषां देवानाम्–

**प्राची दिशां सहयशा यशस्वती विश्वेदेवाः प्रावृषाह्नां स्वर्वती ।**

इदं क्षत्रं दुष्टरमस्त्वोजोऽनाधृष्यं सहस्यं सहस्वत् ३ॐ ॥
ये३ यजामहे वैरूपे सामन्निह तच्छकेयं जगत्येनं विक्ष्वावेशयानि ।
विश्वेदेवाः सप्तदशेन वर्च इदं क्षत्रं सलिलवातमुग्रा३ं वौ३षट् ॥

मित्रावरुणयोः–

धर्त्री दिशां क्षत्रमिदं दाधारोपस्थाशानां मित्रवदस्त्वोजः ।
मित्रावरुणा शरदाह्नां चिकित्वमस्मै राष्ट्राय महि शर्म यच्छतम् ३ॐ ॥
ये३ यजामहे वैराजे सामन्नधि मे मनीषानुष्टुभा सम्भृतं वीर्यं सहः ।
इदं क्षत्रं मित्रवदार्द्रदातुं मित्रावरुणा रक्षतमाधिपत्या३इ वौ३षट् ॥

बृहस्पतेः–

सम्राड् दिशांसहसाम्नी सहस्वत् पृतुर्हेमन्तो विष्ठया नः पिपर्तु ।
अवस्यु वाता बृहती तु शक्वरीमं यज्ञमवतु नो घृताची ३ॐ ॥
ये३ यजामहे स्वर्वती सुदुघा नः पयस्वती दिशां देव्यवतु नो घृताची ।
त्वं गोपाः पुर एतोत पश्चाद् बृहस्पते याम्यां युङ्धि वाचा३ं वौ३षट् ॥

सवितुः–

ऊर्ध्वा दिशां रन्तिराशौषधीनां संवत्सरेण सविता नो अह्नाम् ।
रेवत्सामातिच्छन्दा उ च्छन्दोऽजातशत्रुः स्योना नो अस्तु ३ॐ ॥
ये३ यजामहे स्तोम त्रयस्त्रिंशे भुवनस्य पत्नि विवस्वद् वाते अभि नो गृणीहि ।
घृतवेती सवितुराधिपत्ये पयस्वती रन्तिराशा नो अस्तू३ वौ३षट् ॥

अदित्याः विष्णुपत्न्याः–

ध्रुवा दिशां विष्णुपत्न्यघोरास्येशाना सहसो या मनोता ।
बृहस्पतिर्मातरिश्वोत वायुः सन्ध्वाना वाता अभि नो गृणन्तु ३ॐ ॥
ये३ यजामहे विष्टम्भो दिवो धरुणः पृथिव्या अस्येशानाजगतो विष्णुपत्नी ।
व्यचस्वतीषयन्ती सुभूतिः शिवा नो अस्त्वदितेरुपस्था३इ वौ३षट् ॥

अनुमत्याः–

अनुनोद्यामनुमतिर्यज्ञं देवेषु मन्यताम् ।
अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ३ॐ ॥
ये३ यजामहेऽन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।
क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषाद्३ वौ३षट् ॥

वैश्वानरस्य–

**वैश्वानरो अजीजनदग्निर्नो नव्यसीं मतिम् । क्ष्मया वृधान ओजसा ओ३म् ॥**

**ये३ यजामहे  पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ।**

**वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्ताइं वौ३षट् ॥** [१ ।९७ ।२]

कस्य–

**को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।**

**आसन्निषून् त्सृत्स्वसो मयोभून् य एषां भृत्यामृणधत् स जीवात् ॐ ॥** (१–८४–१६)

**ये३ यजामहे क ईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को अन्ति ।**

**कस्तोकाय क इभायोत रायेऽधि ब्रवत्तन्वे को जनाया३ वौ३षट् ॥** (१–८४–१७)

समनं पशुपुरोडाशस्विष्टकृदादि ।

**अत्यग्निष्टोमः ।**

सर्वमग्निष्टोमवत् । आग्निमारुतादूर्ध्वं षोडशिशस्त्रम् । ततो मृगतीर्थसर्पणम् । ततोऽनुयाजादि यज्ञपुच्छम् ।

**उक्थ्यम् ।**

सवनीयपशोः प्रागग्निष्टोमवत् । न प्रवर्ग्यः । केवलोपसत् । सवनीयौ द्वौ पशू छागौ आग्नेय ऐन्द्राग्नश्च ।

अथावाहने– **आवह देवान् त्सुन्वते यजमानाय** इत्यवसाय **अग्निमग्न आ३वह । सोममा३वह । अग्निमावा३वह । इन्द्राग्नी आ३वह । वनस्पतिमा३वह । इन्द्रं वसुमन्तमा३वह । इन्द्रं रुद्रवन्तमा३वह । इन्द्रमादित्यवन्तमृभुवन्तं विभुमन्तं वाजवन्तं बृहस्पतिवन्तं विश्वदेव्यावन्तमा३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

अध्रिगौ विशेषः–**दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेधौ । प्राभ्यामग्निं भरत स्तृणीत बर्हिरन्वेनौ माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । उदीचीनाँ अनयोः पदो निधत्तात् सूर्यं चक्षुर्गमयताद् वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरे । एकधैकधानयोस्त्वचमाच्छयतात् पुरा पुरा नाभ्या अपिशसो वपे उत्खिदतादन्तरन्तरेवोष्माणं वारयध्वात् । श्येनमनयोर्वक्षसी कृणुतात् प्रशसो बाहूञ्छला दोषाणि कश्यपे वांसानच्छिद्राः श्रोणीः कवषोरूञ्स्रे कपर्णाष्ठीवतः षड्विंशतिः षड्विंशतिरनयोर्वंक्रयस्ता अनुष्ठ्यो च्यावयताद् गात्रं गात्रमनयोरनूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् ।** (उपांशु) **अस्ना रक्षः संसृजतात् । वनिष्ठू अनयोर्माराविष्टोरूकम्मन्यमाना नेद्वस्तोके तनये रवितारवत्** (उपांशु) **शमितारः । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ** (उपांशु) **अपाप । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ** (उपांशु) **अपाप । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ** (उपांशु) **अपाप । शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद्दुष्कृतमन्यत्र तत् ।**

आग्नेयस्य अग्निष्टोमसवनीयपशुवत्, ऐन्द्राग्नस्य तु निरूढवद् याज्यानुवाक्याप्रैषाः ।

वनस्पतियागे विशेषः– **होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्टया रशनया धित । यत्राग्नेराज्यस्य हविषः प्रियाधामानि यत्र सोमस्याज्यस्य हविषः प्रियाधामानि यत्राग्नेश्छागस्य हविषः प्रियाधामानि यत्रेन्द्राग्न्योश्छागस्य हविषः प्रियाधामानि यत्र वनस्पतेः प्रियापाथांसि यत्र देवानामाज्यपानां प्रियाधामानि यत्राग्नेर्होतुः प्रियाधामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद् रभीयसाविव कृत्वीकरदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज ॥** स्विष्टकृत्प्रैषे विशेषः– **होता यक्षदग्निं स्विष्टकृतमयाळग्निरग्नेराज्यस्य हविषः प्रियाधामान्ययाट् सोमस्याज्यस्य हविषः प्रियाधामान्ययाळग्नेश्छागस्य हविषः प्रियाधामान्ययाळिन्द्राग्न्योश्छागस्य हविषः प्रियाधामान्ययाड् वनस्पतेः प्रियापाथांस्ययाड् देवानामाज्यपानां प्रियाधामानि यक्षदग्नेर्होतुः प्रियाधामानि यक्षत्स्वं महिमानामायजतामेज्या इषः कृणातु सो अध्वरा जातवेदा जुषतां हविर्होतर्यज ॥**

केवलैन्द्राग्नपक्षे अध्रिगुप्रभृति सर्वं निरूढवत् । आग्निमारुतान्ते होत्रकाणामुक्थ्यप्रयुक्तानि त्रीणि शस्त्राणि ।

**मैत्रावरुणशस्त्रम् ।**

साकमश्वं स्तोत्रमेकविंशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे

**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शोशो३ंसावो३म्**

**एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्धास इन्दुभो३ं** इति त्रिः

**यत्र क्व च ते मनो दक्षं दधस उत्तरम् । तत्रा सदः कृणवसो३ं**

**नहि ते पूर्तमक्षिपद्भुवन्नेमानां वसो । अथा दुवो वनवसो३ं** (६।१६।१६–१८)

**शो३ंसावो३म् अग्निरगामि भारतो वृत्रहा पुरुचेतनः । दिवोदासस्य सत्पतो३ं**

**स हि विश्वानि पार्थिवा रयिं दाशन्महित्वना । वन्वन्नवातो अस्तृतो३ं**

**स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता । बृहत्ततन्थ भानुनो३ं** (६।१६।१८–२१)

**शो३ंसावो३ं चर्षणीधृतं मघवानमुक्थ्यम् । इन्द्रं गिरो बृहतीरभ्यनूषतो३ं**

**वावृधानं पुरुहूतं सुवृक्तिभिः । अमर्त्यं जरमाणं दिवे दिवो३ं**

**शतक्रतुमर्णवं शाकिनं नरम् । गिरो म इन्द्रमुप यन्ति विश्वतो३ं**

**वाजसनिं पूर्भिदं तूर्णिमप्तुरम् । धामसाचमभिषाचं स्वर्विदो३म्**

**आकरे वसोर्जरिता पनस्यते । अनेहसः स्तुभ इन्द्रो दुवस्यतो३ं**

**विवस्वतः सदन आ हि पिप्रिये । सत्रासाहमभिमातिहनं स्तुहो३म्** (३।५१।१–३)

**अस्तभ्नाद् द्यामसुरो विश्ववेदाः । अमिमीत वरिमाणं पृथिव्यो३म्**

**आसीदद्विश्वा भुवनानि सम्राट् । विश्वेत्तानि वरुणस्य व्रतानो३म्**

**एवा वन्दस्व वरुणं बृहन्तम् । नमस्या धीरममृतस्य गोपो३ं**

स नः शर्म त्रिवरूथं वि यंसत् । पातं नो द्यावापृथिवी उपस्थो३म्
इमां धियं शिक्षमाणस्य देव । क्रतुं दक्षं वरुण सं शिशाधो३ं
ययाति विश्वा दुरिता तरेम । सुतर्माणमधि नावं रुहेमो३म् (८।४२।१–३)
इन्द्रावरुणा युवमध्वराय नः । विशे जनाय महि शर्म यच्छतो३ं
दीर्घप्रयज्युमति यो वनुष्यति । वयं जयेम पृतनासु दूढ्यो३ं
सम्राळन्यः स्वराळन्य उच्यते वाम् । महान्ताविन्द्रावरुणा महावसो३ं
विश्वे देवासः परमे व्योमनि । सं वामोजो वृषणा सं बलं दधो३म्
अन्वपां खान्यतृन्तमोजसा । सूर्यमैरयतं दिवि प्रभो३म्
इन्द्रावरुणा मदे अस्य मायिनः । अपिन्वतमपितः पिन्वतं धियो३ं
युवामिद्युत्सु पृतनासु वह्नयः । युवां क्षेमस्य प्रसवे मितज्ञवो३म्
ईशाना वस्व उभयस्य कारवः । इन्द्रावरुणा सुहवा हवामहो३म्
इन्द्रावरुणा यदिमानि चक्रथुः । विश्वा जातानि भुवनस्य मज्मनो३ं
क्षेमेण मित्रो वरुणं दुवस्यति । मरुद्भिरुग्रः शुभमन्य ईयतो३म्
महे शुल्काय वरुणस्य नु त्विषे । ओजो मिमाते ध्रुवमस्य यत् स्वो३म्
अजामिमन्यः श्नथयन्तमातिरत् । दभ्रेभिरन्यः प्र वृणोति भूयसो३ं
न तमंहो न दुरितानि मर्त्यम् । इन्द्रावरुणा न तपः कुतश्चनो३ं
यस्य देवा गच्छथो वीथो अध्वरम् । न तं मर्तस्य नशते परिह्वृतो३म्
अर्वाङ् नरा दैव्येनावसा गतम् । शृणुतं हवं यदि मे जुजोषथो३ं
युवोर्हि सख्यमुत वा यदाप्यम् । मार्डीकमिन्द्रावरुणा नि यच्छतो३म्
अस्माकमिन्द्रावरुणा भरेभरे । पुरोयोधा भवतं कृष्ट्योजसो३ं
यद्वां हवन्त उभये अध स्पृधि । नरस्तोकस्य तनयस्य सातिषो३म्
अस्मे इन्द्रो वरुणो मित्रो अर्यमा । द्युम्नं यच्छन्तु महि शर्म सप्रथो३म्
अवध्रं ज्योतिरदितेर्ऋतावृधः । देवस्य श्लोकं सवितुर्मनामहो३म् (७।८२।१–१०)
आ वां राजानावध्वरे ववृत्याम् । हव्येभिरिन्द्रावरुणा नमोभो३म्
प्र वां घृताची बाह्वोर्दधाना । परि त्मना विषुरूपा जिगातो३ं
युवो राष्ट्रं बृहदिन्वति द्यौः । यौ सेतृभिररज्जुभिः सिनीथो३म्
परि नो हेळो वरुणस्य वृज्याः । उरुं न इन्द्रः कृणवदु लोको३ं
कृतं नो यज्ञं विदथेषु चारुम् । कृतं ब्रह्माणि सूरिषु प्रशस्तो३म्
उपो रयिर्देवजूतो न एतु । प्र ण स्पार्हाभिरूतिभिस्तिरेतो३म्

**अस्मे इन्द्रावरुणा विश्ववारम् । रयिं धत्तं वसुमन्तं पुरुक्षो३म्**
**प्र य आदित्यो अनृता मिनाति । अमिता शूरो दयते वसूनो३ं**
**शो३ंसावो३म् इयमिन्द्रं वरुणमष्ट मे गीः । प्रावत्तोके तनये तूतुजानो३ं**
**सुरत्नासो देववीतिं गमेम । यूयं पात स्वस्तिभिः सदा नो३म् ॥** (७।८४।१–५) इति त्रिः परिदध्यात् ।
**उक्थं वाचीन्द्राय देवेभ्यः** इति शस्त्वा जपः ।
**ये३ यजामह इन्द्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा वृषेथाम् ।**
**इदं वामन्धः परिषिक्तमस्मे आसद्यास्मिन् बर्हिषि मादयेथा३ं वौ३षट् ॥** (६।६८।११)
**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । स्वेन प्रातःसवनकीयेन समो भक्षविधिः ।

**ब्राह्मणाच्छंसीशस्त्रम् ।**

सोभरस्तोत्रमेकविंशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे
**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शोशो३ंसावो३ं**
**वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः । वाजे चित्रं हवामहो३ं**
**वाजे चित्रं हवामह उप त्वा कर्मन्नूतये स नो युवा । उग्रश्चक्राम यो धृषो३ं**
**उग्रश्चक्राम यो धृषत्त्वामिद्ध्यवितारं ववृमहे । सखाय इन्द्र सानसो३ं ॥** (८।२१।१–२)
**शो३ंसावो३ं यो न इदमिदं पुरा प्र वस्य आनिनाय तमु वः स्तुषे । सखाय इन्द्रमूतयो३ं**
**सखाय इन्द्रमूतये हर्यश्वं सत्पतिं चर्षणीसहम् । स हि ष्मा यो अमन्दतो३ं**
**स हि ष्मा यो अमन्दता तु नः स वयति गव्यमश्व्यम् । स्तोतृभ्यो मघवा शतो३ं ॥** (८।२१।९–१०)
**शो३ंसावो३म् प्र मंहिष्ठाय बृहते बृहद्रये । सत्यशुष्माय तवसे मतिं भरो३म्**
**अपामिव प्रवणे यस्य दुर्धरम् । राधो विश्वायु शवसे अपावृतो३म्**
**अध ते विश्वमनु हासदिष्टये । आपो निम्नेव सवना हविष्मतो३ं**
**यत्पर्वते न समशीत हर्यतः । इन्द्रस्य वज्रः श्नथिता हिरण्ययो३म्**
**अस्मै भीमाय नमसा समध्वरे । उषो न शुभ्र आ भरा पनीयसो३ं**
**यस्य धाम श्रवसे नामेन्द्रियम् । ज्योतिरकारि हरितो नायसो३म्**
**इमे त इन्द्र ते वयं पुरुष्टुत । ये त्वारभ्य चरामसि प्रभूवसो३ं**
**नहि त्वदन्यो गिर्वणो गिरः सघत् । क्षोणीरिव प्रति नो हर्य तद्वचो३ं**
**भूरि त इन्द्र वीर्यं तव स्मसि । अस्य स्तोतुर्मघवन्काममा पृणो३म्**
**अनु ते द्यौर्बृहती वीर्यं ममे । इयं च ते पृथिवी नेम ओजसो३ं**
**त्वं तमिन्द्र पर्वतं महामुरुम् । वज्रेण वज्रिन्पर्वशश्चकर्तिथो३म्**

अवासृजो निवृताः सर्तवा अपः । सत्रा विश्वं दधिषे केवलं सहो३म् (१।५७।१–६)

उदप्रुतो न वयो रक्षमाणाः । वावदतो अभ्रियस्येव घोषो३ं

गिरिभ्रजो नोर्मयो मदन्तः । बृहस्पतिमभ्यर्का अनावो३ं

सं गोभिराङ्गिरसो नक्षमाणः । भग इवेदर्यमणं निनायो३ं

जने मित्रो न दम्पती अनक्ति । बृहस्पते वाजयाशूँरिवाजो३ं

साध्वर्या अतिथिनीरिषिराः । स्पार्हाः सुवर्णा अनवद्यरूपो३म्

बृहस्पतिः पर्वतेभ्यो वितूर्य । निर्गा ऊपे यवमिव स्थिविभ्यो३म्

आप्रुषायन्मधुन ऋतस्य योनिम् । अवक्षिपन्नर्क उल्कामिव द्यो३म्

बृहस्पतिरुद्धरन्नश्मनो गाः । भूम्या उद्नेव वि त्वचं बिभेदो३म्

अप ज्योतिषा तमो अन्तरिक्षात् । उद्नः शीपालमिव वात आजो३म्

बृहस्पतिरनुमृश्या वलस्य । अभ्रमिव वात आ चक्र आ गो३ं

यदा वलस्य पीयतो जसुं भेत् । बृहस्पतिरग्नितपोभिरर्को३ं

दद्भिर्न जिह्वा परिविष्टमादत् । आविर्निधीँरकृणोदुस्रियाणो३म्

बृहस्पतिरमत हि त्यदासाम् । नाम स्वरीणां सदने गुहा यो३म्

आण्डेव भित्त्वा शकुनस्य गर्भम् । उदुस्रियाः पर्वतस्य त्मनाजो३म्

अश्नापिनद्धं मधु पर्यपश्यन् । मत्स्यं न दीन उदनि क्षियन्तो३ं

निष्टज्जभार चमसं न वृक्षात् । बृहस्पतिर्विरवेणा विकृत्यो३ं

सोषामविन्दत्स स्वः सो अग्निम् । सो अर्केण वि बबाधे तमांसो३म्

बृहस्पतिगीवपुषो वलस्य । निर्मज्जानं न पर्वणो जभारो३ं

हिमेव पर्णा मुषिता वनानि । बृहस्पतिनाकृपयद्वलो गो३म्

अनानुकृत्यमपुनश्चकार । यात्सूर्यामासा मिथ उच्चरातो३म्

अभि श्यावं न कृशनेभिरश्वम् । नक्षत्रेभिः पितरो द्यामपिंशो३ं

रात्र्यां तमो अदधुर्ज्योतिरहन् । बृहस्पतिर्भिनदद्रिं विदद् गो३म्

इदमकर्म नमो अभ्रियाय । यः पूर्वीरन्वानोनवीतो३म्

बृहस्पतिः स हि गोभिः सो अश्वैः । स वीरेभिः स नृभिर्नो वयो धो३म् (१०।६८।१–१२)

अच्छा म इन्द्रं मतयः स्वर्विदः । सध्रीचीर्विश्वा उशतीरनूषतो३म्

परि ष्वजन्ते जनयो यथा पतिम् । मर्यं न शुन्ध्युं मघवानमूतयो३ं

न घा त्वद्रिगप वेति मे मनः । त्वे इत्कामं पुरुहूत शिश्रयो३ं

राजेव दस्म नि षदोऽधि बर्हिषि । अस्मिन्त्सु सोमेऽवपानमस्तु तो३ं

विषूवृदिन्द्रो अमतेरुत क्षुधः । स इद्रायो मघवा वस्व ईशतो३ं
तस्येदिमे प्रवणे सप्त सिन्धवः । वयो वर्धन्ति वृषभस्य शुष्मिणो३ं
वयो न वृक्षं सुपलाशमासदन् । सोमास इन्द्रं मन्दिनश्चमूषदो३म्
प्रैषामनीकं शवसा दविद्युतत् । विदत्स्वर्मनवे ज्योतिरार्यो३ं
कृतं न श्वघ्नी वि चिनोति देवने । संवर्गं यन्मघवा सूर्यं जयो३ं
न तत्ते अन्यो अनु वीर्यं शकत् । न पुराणो मघवन्नोत नूतनो३ं
विशं विशं मघवा पर्यशायत । जनानां धेना अवचाकशद्वृषो३ं
यस्याह शक्रः सवनेषु रण्यति । स तीव्रैः सोमैः सहते पृतन्यतो३म्
आपो न सिन्धुमभि यत्समक्षरन् । सोमास इन्द्रं कुल्याइव ह्रदो३ं
वर्धन्ति विप्रा महो अस्य सादने । यवं न वृष्टिर्दिव्येन दानुनो३ं
वृषा न क्रुद्धः पतयद्रजः स्वा । यो अर्यपत्नीरकृणोदिमा अपो३ं
स सुन्वते मघवा जीरदानवे । अविन्दज्ज्योतिर्मनवे हविष्मतो३म्
उज्जायतां परशुर्ज्योतिषा सह । भूया ऋतस्य सुदुघा पुराणवो३ं
वि रोचतामरुषो भानुना शुचिः । स्वर्ण शुक्रं शुशुचीत सत्पतो३ं
गोभिष्टरेमामतिं दुरेवाम् । यवेन क्षुधं पुरुहूत विश्वो३ं
वयं राजभिः प्रथमा धनानि । अस्माकेन वृजनेना जयेमो३ं
शो३ंसावो३म् बृहस्पतिर्नः परि पातु पश्चात् । उतोत्तरस्मादधरादघायो३म्
इन्द्रः पुरस्तादुत मध्यतो नः । सखा सखिभ्यो वरिवः कृणोतो३म् (१०।४३।१–११) इति त्रिः परिदध्यात् ।
उक्थं वाचीन्द्राय देवेभ्यः इति शस्त्वा जपति ।
ये३ यजामहे बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य ।
धत्तं रयिं स्तुवते कीरये चिद्यूयं पात स्वस्तिभिः सदा ना३ वौ३षट् ॥ (७।९७।१०)
सोमस्याग्ने वीही३ वौ३षट् ॥ द्विर्वागोजः । स्वेन प्रातःसवनकीयेन समो भक्षविधिः ।

अच्छावाकशस्त्रम् ।

नार्मेधस्तोत्रमेकविंशस्तोमम् । प्रस्तोत्रा एष इति प्रोक्ते प्रतिहारे
हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शोशो३ंसावो३ं
अधा हीन्द्र गिर्वण उप त्वा कामान्महः ससृज्महे । उदेव यन्त उदभो३ं
वार्ण त्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि । वावृध्वांसं चिदद्रिवो दिवे दिवो३ं
युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे । इन्द्रवाहा वचोयुजो३ं (८।९८।७–९)

शो३ंसावो३म् इयं त इन्द्र गिर्वणो रातिः क्षरति सुन्वतः । मन्दानो अस्य बर्हिषो वि राजसो३ं
नूनं तदिन्द्र दद्धि नो यत्त्वा सुन्वन्त ईमहे । रयिं न श्चित्रमा भरा स्वर्विदो३ं
स्तोता यत्ते विचर्षणिरतिप्रशर्धयद् गिरः । वया इवानु रोहते जुषन्त यो३ं (८।१३।४–६)
शो३ंसावो३म् ऋतुर्जनित्री तस्या अपस्परि । मक्षू जात आविशद्यासु वर्धतो३ं
तदाहना अभवत्पिप्युषी पयः । अंशोः पीयूषं प्रथमं तदुक्थ्यो३ं
सध्रीमा यन्ति परि बिभ्रतीः पयः । विश्वप्स्न्याय प्र भरन्त भोजनो३ं
समानो अध्वा प्रवतामनुष्यदे । यस्ताकृणोः प्रथमं सास्युक्थ्यो३म्
अन्वेको वदति यद्ददाति तत् । रूपा मिनन्तदपा एक ईयतो३ं
विश्वा एकस्य विनुदस्तितिक्षते । यस्ताकृणोः प्रथमं सास्युक्थ्यो३म्
प्रजाभ्यः पुष्टिं विभजन्त आसते । रयिमिव पृष्ठं प्रभवन्तमायतो३म
असिन्वन्दंष्ट्रैः पितुरत्ति भोजनम् । यस्ताकृणोः प्रथमं सास्युक्थ्यो३म्
अधाकृणोः पृथिवीं संदृशे दिवे । यो धौतीनामहिहन्नारिणक्पथो३ं
तं त्वा स्तोमेभिरुदभिर्न वाजिनम् । देवं देवा अजनन्त्सास्युक्थ्यो३ं
यो भोजनं च दयसे च वर्धनम् । आर्द्रादा शुष्कं मधुमद्दुदोहिथो३ं
स शेवधिं नि दधिषे विवस्वति । विश्वस्यैक ईशिषे सास्युक्थ्यो३ं
यः पुष्पिणीश्च प्रस्वश्च धर्मणा । अधि दाने व्यवनीरधारयो३ं
यश्चासमा अजनो दिद्युतो दिवः । उरुरूर्वाँ अभितः सास्युक्थ्यो३ं
यो नार्मरं सहवसुं निहन्तवे । पृक्षाय च दासवेशाय चावहो३म्
ऊर्जयन्त्या अपरिविष्टमास्यम् । उतैवाद्य पुरुकृत् सास्युक्थ्यो३ं
शतं वा यस्य दश साकमाद्यः । एकस्य श्रुष्टौ यद्ध चोदमाविथो३ं
अरज्जौ दस्यून्त्समुनब् दभीतये । सुप्राव्यो अभवः सास्युक्थ्यो३ं
विश्वेदनु रोधना अस्य पौंस्यम् । ददुरस्मै दधिरे कृत्नवे धनो३ं
षळस्तभ्ना विष्टिरः पञ्च संदृशः । परि परो अभवः सास्युक्थ्यो३ं
सुप्रवाचनं तव वीर वीर्यम् । यदेकेन क्रतुना विन्दसे वसो३ं
जातूष्ठिरस्य प्र वयः सहस्वतः । या चकर्थ सेन्द्र विश्वास्युक्थ्यो३म्
अरमयः सरपसस्तराय कम् । तुर्वीतये च वय्याय च स्रुतो३ं
नीचा सन्तमुदनयः परावृजम् । प्रान्धं श्रोणं श्रवयन्त्सास्युक्थ्यो३म्
अस्मभ्यं तद्वसो दानाय राधः । समर्थयस्व बहु ते वसव्यो३म्
इन्द्र यच्चित्रं श्रवस्या अनु द्यून् । बृहद्वदेम विदथे सुवीरो३ं (२।१३।१–१३)

नू मर्तो दयते सनिष्यन् । यो विष्णव उरुगायाय दाशो३म्
प्र यः सत्राचा मनसा यजाते । एतावन्तं नर्यमाविवासो३ं
त्वं विष्णो सुमतिं विश्वजन्याम् । अप्रयुतामेवयावो मतिं दो३म्
पर्चो यथा नः सुवितस्य भूरेः । अश्वावतः पुरुश्चन्द्रस्य रायो३ं
त्रिर्देवः पृथिवीमेष एताम् । वि चक्रमे शतर्चसं महित्वो३म्
प्र विष्णुरस्तु तवसस्तवीयान् । त्वेषं ह्यस्य स्थविरस्य नामो३ं
वि चक्रमे पृथिवीमेष एताम् । क्षेत्राय विष्णुर्मनुषे दशस्यो३ं
ध्रुवासो अस्य कीरयो जनासः । उरुक्षितिं सुजनिमा चकारो३म्
प्र तत्ते अद्य शिपिविष्ट नाम । अर्यः शंसामि वयुनानि विद्वो३ं
तं त्वा गृणामि तवसमतव्यान् । क्षयन्तमस्य रजसः पराको३ं
किमित्ते विष्णो परिचक्ष्यं भूत् । प्र यद्ववक्षे शिपिविष्टो अस्मो३म्
मा वर्पो अस्मदप गूह एतत् । यदन्यरूपः समिथे बभूथो३ं
वषट् ते विष्णवास आ कृणोमि । तन्मे जुषस्व शिपिविष्ट हव्यो३ं
वर्धन्तु त्वा सुष्टुतयो गिरो मे । यूयं पात स्वस्तिभिः सदा नो३म् (७।१००।१–७)
भवा मित्रो न शेव्यो घृतासुतिः । विभूतद्युम्न एवया उ सप्रथो३म्
अधा ते विष्णो विदुषा चिदर्ध्यः । स्तोमो यज्ञश्च राध्यो हविष्मतो३ं
यः पूर्व्याय वेधसे नवीयसे । सुमज्जानये विष्णवे ददाशतो३ं
यो जातमस्य महतो महि ब्रवत् । सेदु श्रवोभिर्युज्यं चिदभ्यसो३ं
तमु स्तोतारः पूर्व्यं यथा विद । ऋतस्य गर्भं जनुषा पिपर्तनो३म्
आस्य जानन्तो नाम चिद्विवक्तन । महस्ते विष्णो सुमतिं भजामहो३ं
तमस्य राजा वरुणस्तमश्विना । क्रतुं सचन्त मारुतस्य वेधसो३ं
दाधार दक्षमुत्तममहर्विदम् । व्रजं च विष्णुः सखिवाँ अपोर्णुतो३म्
आ यो विवाय सचथाय दैव्यः । इन्द्राय विष्णुः सुकृते सुकृत्तरो३ं
वेधा अजिन्वत् त्रिषधस्थ आर्यम् । ऋतस्य भागे यजमानमाभजो३ं [१।१५६।१–६]
सं वां कर्मणा समिषा हिनोमि । इन्द्राविष्णू अपसस्पारे अस्यो३ं
जुषेथां यज्ञं द्रविणं च धत्तम् । अरिष्टैर्नः पथिभिः पारयन्तो३ं
या विश्वासां जनितारा मतीनाम् । इन्द्राविष्णू कलशा सोमधानो३म्
प्र वां गिरः शस्यमाना अवन्तु । प्र स्तोमासो गीयमानासो अर्को३म्
इन्द्राविष्णू मदपती मदानाम् । आ सोमं यातं द्रविणो दधानो३ं

**सं वामञ्जन्त्वक्तुभिर्मतीनाम् । सं स्तोमासः शस्यमानास उक्थो३म्**
**आ वामश्वासो अभिमातिषाहः । इन्द्राविष्णू सधमादो वहन्तो३ं**
**जुषेथां विश्वा हवना मतीनाम् । उप ब्रह्माणि शृणुतं गिरो मो३म्**
**इन्द्राविष्णू तत्पनयाय्यं वाम् । सोमस्य मद उरु चक्रमाथो३म्**
**अकृणुतमन्तरिक्षं वरीयः । अप्रथतं जीवसे नो रजांसो३म्**
**इन्द्राविष्णू हविषा वावृधाना । अग्राद्वाना नमसा रातहव्यो३ं**
**घृतासुती द्रविणं धत्तमस्मे । समुद्र स्थः कलशः सोमधानो३म्**
**इन्द्राविष्णू पिबतं मध्वो अस्य । सोमस्य दस्रा जठरं पृणेथो३म्**
**आ वामन्धांसि मदिराण्यग्मन् । उप ब्रह्माणि शृणुतं हवं मो३म्**
**शो३ंसावो३म् उभा जिग्यथुर्न परा जयेथे । न परा जिग्ये कतरश्चनैनो३म्**
**इन्द्रश्च विष्णो यदपस्पृधेथाम् । त्रेधा सहस्रं वि तद्वैरयेथो३म् ॥** (६।६९।१–८) इति त्रिः परिदध्यात् ।
**उक्थं वाचीन्द्राय देवेभ्यः** इति शस्त्वा जपति ।
**ये३ यजामह इन्द्राविष्णू मदपती मदानामा सोमं यातं द्रविणो दधाना ।**
**सं वामञ्जन्त्वक्तुभिर्मतीनां सं स्तोमासः शस्यमानास उक्थै३ वौषट् ॥** (६।६९।३)
**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । स्वेन प्रातःसवनकीयेन समो भक्षविधिः ।

ततो मृगतीर्थसर्पणं ततोऽनुयाजदि । सूक्तवकप्रैषे–

**अग्निमद्य होयारमवृणीतायं सुन्वन् यजमानः पचन् पक्तीः पचन् पुरोळाशान् गृह्णन्नग्नय आज्यं गृह्णन्त्सोमायाज्यं बध्नन्नग्नय इन्द्राग्नोभ्यां छागौ सुन्वन्निन्द्राय सोमं भृञ्जन् हरिभ्यां धानाः सूपस्था अद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनाग्नय इन्द्राग्निभ्यां छागाभ्यामिन्द्राय सोमेन हरिभ्यां धानाभिरद्यतं मेदस्तः प्रतिपचताग्रभीषुरवीवृधन्त पुरोळाशैरयाडिन्द्रः सोमं गवाशिरं यवाशिरं तीव्रान्तं बहुदमध्यमुपोत्थामदाश्रौद्विमदाँ आनळवीवृधतां गूषैस्त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं सुन्वन् यजमानो बहुभ्य आसङ्गतेभ्यः । एष मे देवेषु वसुवार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रू३हि ॥**

होता– **इदं द्यावापृथिवी** इत्यदि **अग्निरिदं..., सोम इदं..., अग्निरिदं..., इन्द्राग्नी इदं..., वनस्पतिरिदं..., इन्द्रो वसुमानिदं..., इन्द्रो रुद्रवानिदं..., इन्द्र आदित्यवानृभुमान् विभुमान् बृहस्पतिवान् विश्वदेव्यावानिदं..., देवा आज्यपा** इत्यादि । शंयुवाकादि यज्ञपुच्छं समानमान्तम् । समाप्तमुक्थ्यम् ॥

**षोळशी ।**

सवनीयपशोः प्रागग्निष्टोमवत् । सवनीयास्त्रयः पशव आग्नेय ऐन्द्राग्न ऐन्द्रश्चेति । तत्र द्वौ छागौ तृतीयो मेषः ।

अथावाहने– **आवह देवान् त्सुन्वते यजमानाय** इत्यवसाय **अग्निमग्न आ३वह । सोममा३वह । अग्निमावा३वह । इन्द्राग्नी आ३वह । इन्द्रमा३वह । वनस्पतिमा३वह । इन्द्रं वसुमन्तमा३वह । इन्द्रं रुद्रवन्तमा३वह । इन्द्रमादित्यवन्तमृभुवन्तं विभुमन्तं वाजवन्तं बृहस्पतिवन्तं विश्वदेव्यावन्तमा३वह । देवाँ आज्यपाँ आ३वहे**त्यादि ।

अध्रिगौ विशेषः–**दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्यादुर आशासाना मेधपतिभ्यो मेधान् । प्रैभ्योऽग्निं भरत स्तृणीत बर्हिरन्वेनान् माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । उदीचीनामेषां पदो निधत्तात् सूर्यं चक्षुर्गमयताद् वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीराणि । एकधैकधैषां त्वच आच्छयतात् पुरा पुरा नाभ्या अपिशसो वपा उत्खिदतादन्तरन्तरेवोष्माणं वारयध्वात् । श्येनमेषां वक्षांसि कृणुतात् प्रशसो बाहूञ्च्छला दोषाणि कश्यपे वांसानच्छिद्राः श्रोणीः कवषोरून्स्रे कपर्णाष्ठीवतः षड्विंशतिः षड्विंशतिरेषां वंक्रयस्ता अनुष्ठ्यो च्यावयताद् गात्रं गात्रमेषामनूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् ।** (उपांशु) **अस्ना रक्षः संसृजतात् । वनिष्ठूनेषां माराविष्टोरूकम्मन्यमाना नेद्वस्तोके तनये रवितारवत्** (उपांशु) **शमितारः । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ** (उपांशु) **अपाप । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ** (उपांशु) **अपाप । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ** (उपांशु) **अपाप । शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद्दुष्कृतमन्यत्र तत् ।**

आग्नेयस्य अग्निष्टोमसवनीयपशुवत्, ऐन्द्राग्नस्य तु निरूढवद् याज्यानुवाक्याप्रैषाः । अथेन्द्रस्य–

वपायागे प्रशास्ता– **इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः ।**

**शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नो३म् ॥** (७।२७।१)

**होता यक्षदिन्द्रं मेषस्य वपाया मेदसो जुषतां हविर्होतर्यज ॥**

होता– **ये३ यजामह उरुं नो लोकमनु नेषि विद्वान्त्स्वर्वज्ज्योतिरभयं स्वस्ति ।**

**ऋष्वा त इन्द्र स्थविरस्य बाहू उप स्थेयाम शरणा बृहन्ता३ वौ३षट् ॥** (६।४७।८)

पशुपुरोडाशे प्रशास्ता– **य इन्द्र शुष्मो मघवन्ते अस्ति शिक्षा सखिभ्यः पुरुहूत नृभ्यः ।**

**त्वं हि दृळ्हा मघवन्विचेता अपा वृधि परिवृतं न राधो४म् ॥** (७।२७।२)

**होता यक्षदिन्द्रं पुरोळाशस्य जुषतां हविर्होतर्यज ।**

होता– **ये३ यजामहे प्र स साहिषे पुरुहूत शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु ।**

**इन्द्राभर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीना३ं वौ३षट् ॥** [१०।१८०।१]

हविर्यागे प्रशास्ता– **इन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति ।**

**ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतश्चिदर्वा३म् ॥** [७।२७।३]

**होता यक्षदिन्द्रं मेषस्य हविष आददद्यमध्यतो मेद उद्धृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्यागृभः । घसन्नूनं घासे अज्राणां यवस प्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवो पवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोङ्गादङ्गादवत्तानां करदेवेन्द्रो जुषतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे स्वस्तये वाजिभिश्च प्रणेतः सं यन्महीरिष आसत्सि पूर्वीः ।**

**रायो वन्तारो बृहतः स्यामास्मे अस्तु भग इन्द्र प्रजावा३ न्वौ३षट् ॥** (३।३०।१८)

वनस्पतियागे विशेषः–– **होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्टया रशनयाधित । यत्राग्नेराज्यस्य हविषः प्रियाधामानि यत्र सोमस्याज्यस्य हविषः प्रियाधामानि यत्राग्नेश्छागस्य हविषः प्रियाधामानि यत्रेन्द्राग्न्योश्छागस्य हविषः प्रियाधामानि यत्रेन्द्रस्य मेषस्य हविषः प्रियाधामानि यत्र वनस्पतेः प्रियापाथांसि यत्र देवानामाज्यपानां प्रियाधामानि यत्राग्नेर्होतुः प्रियाधामानि तत्रैतान् प्रस्तुत्येवोपस्त्युत्येवोपावस्रक्षद् रभीयस इव कृत्वीकरदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज ।**

स्विष्टकृत्प्रैषे विशेषः– **होता यक्षदग्निं स्विष्टकृतमयाळग्निरग्नेराज्यस्य हविषः प्रियाधामान्ययाट् सोमस्याज्यस्य हविषः प्रियाधामान्ययाळग्नेश्छागस्य हविषः प्रियाधामान्ययाळिन्द्राग्न्योश्छागस्यहविषः प्रियाधामान्ययाळिन्द्रस्य मेषस्य हविषः प्रियाधामान्ययाड् वनस्पतेः प्रियापाथांस्ययाड् देवानामाज्यपानां प्रियाधामानि यक्षदग्नेर्होतुः प्रियाधामानि यक्षत्स्वं महिमानामायजतामेज्या इषः कृणातु सो अध्वरा जातवेदा जुषतां हविर्होतर्यज ॥**

केवलैन्द्रपक्षे अध्रिगुप्रभृति सर्वं तदनुसारेण कर्तव्यम् । आग्निमारुतशस्त्रानन्तरं त्रीण्युक्थशस्त्राणि ततः षोडशीशस्त्रम् । सा षोडशी द्विविधा– अविहृतो विहृतश्चेति । सामगा यदि नानदषोडशिसाम कुर्युस्तदा अविहृतः षोडशी शंस्तव्यः । यदि गौरिवीतं साम तदा विहृतषोडशी शंस्तव्यः ।

**अविहृतषोडशीशस्त्रम् ।**

नानदषोडशीस्तोत्रमेकविंशस्तोमम् । । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे

**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शोशो३ंसावो३म्**

**असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।**

**आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभो३म्**

**इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् ।**

**ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणो३म्**

**आ तिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी ।**

**अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुनो३ं**

**शो३ंसावो३म् इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।**

**शुक्रस्य त्वाभ्यक्षरन् धारा ऋतस्य सादनो३म्**

इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन ।

सुता अमत्सुरिन्दवो ज्येष्ठं नमस्यता सहो३ं

नकिष्ट्वद् रथीतरो हरी यदिन्द्र यच्छसे ।

नकिष्ट्वानु मज्मना नकिः स्वश्व आनशो३ं (१।८४।१–६)

(तिस्रो गायत्र्यः)

शो३ंसावो३म् आ त्वा वहन्तु हरयो वृषणं सोमपीतये । इन्द्र त्वा सूरचक्षसो३म्

इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इन्द्रं सुखतमे रथो३म्

इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे । इन्द्रं सोमस्य पीतयो३म् (१।१६।१–३)

(तिस्रः पङ्क्तयः)

उपो षु शृणुही गिरो मघवन् मातथा इव ।

यदा नः सूनृतावतः कर आदर्थयास इत् । योजा न्विन्द्र ते हरो३ं (१।८२।१)

सुसंदृशं त्वा वयं मघवन् वन्दिषीमहि ।

प्र नूनं पूर्णवन्धुरः स्तुतो याहि वशाँ अनु । योजा न्विन्द्र ते हरो३ं

स घा तं वृषणं रथमधि तिष्ठाति गोविदम् ।

यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति । योजा न्विन्द्र हरो३ं (१।८२।३–४)

(औष्णिहतृक्)

यदिन्द्र पृतनाज्ये देवास्त्वा दधिरे पुरः । आदित्ते हर्यता हरी ववक्षतो३ं

यदा वृत्रं नदीवृतं शवसा वज्रिन्नवधीः । आदित्ते हर्यता हरी ववक्षतो३ं

यदा ते विष्णुरोजसा त्रीणि पदा विचक्रमे । आदित्ते हर्यता हरी ववक्षतो३ं (८।१२।२५–२७)

(बार्हततृक्)

अयं ते अस्तु हर्यतः सोम आ हरिभिः सुतः ।

जुषाण इन्द्र हरिभिर्न आ गह्या तिष्ठ हरितं रथो३ं

हर्यन्नुषसमर्चयः सूर्यं हर्यन्नरोचयः ।

विद्वांश्चिकित्वान् हर्यश्व वर्धस इन्द्र विश्वा अभि श्रियो३ं

द्यामिन्द्रो हरिधायसं पृथिवीं हरिवर्पसम् ।

अधारयद्धरितोर्भूरि भोजनं ययोरन्तर्हरिश्चरो३म् (३।४४।१–३)

(द्विपदा) आ धूर्ष्वस्मै दधाताश्वान् । इन्द्रो न वज्री हिरण्यबाहो३म् (७।३४।४)

(त्रिष्टुप्) ब्रह्मन्वीर ब्रह्मकृतिं जुषाणः । अर्वाचीनो हरिभिर्याहि तूयो३म्

अस्मिन्नू षु सवने मादयस्व । उप ब्रह्माणि शृणव इमा नो३म् (७।२९।२)

(द्विपदाः)

एष ब्रह्मा य ऋत्वियः । इन्द्रो नाम श्रुतो गृणो३ं

विस्रुतयो यथापथः । इन्द्र त्वद्यन्ति रातयो३ं

त्वामिच्छवसस्पते । यन्ति गिरो न संयतो३म् (आ. श्रौ. ६।२।६)

(जगत्यः)

प्र ते महे विदथे शंसिषं हरी । प्र ते वन्वे वनुषो हर्यतं मदो३ं

घृतं न यो हरिभिश्चारु सेचते । आ त्वा विशन्तु हरिवर्पसं गिरो३ं

हरिं हि योनिमभि ये समस्वरन् । हिन्वन्तो हरी दिव्यं यथा सदो३म्

आ यं पृणन्ति हरिभिर्न धेनवः । इन्द्राय शूषं हरिवन्तमर्चतो३ं

सो अस्य वज्रो हरितो य आयसः । हरिर्निकामो हरिरा गभस्त्यो३ं

द्युम्नी सुशिप्रो हरिमन्युसायकः । इन्द्रे नि रूपा हरिता मिमिक्षिरो३ं (१०।९६।१–३)

(अतिच्छन्दास्तृक् द्वेधाकारम्)

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मः ।

तृपत् सोममपिबद्विष्णुना सुतं यथावशो३ं

स ईं ममाद महि कर्म कर्तवे महामुरुम् ।

सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दो३म्

अध त्विषीमाँ अभ्योजसा क्रिविं युधाभवत् ।

आ रोदसी अपृणदस्य मज्मना प्र वावृधो३म्

अधत्तान्यं जठरे प्रेमरिच्यत ।

सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दो३म्

साकं जातः क्रतुना साकमोजसा ववक्षिथ ।

साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणो३ं

दाता राधः स्तुवते काम्यं वसु ।

सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दो३म् (२।२२।१–३)

(अतिच्छन्दास्तृक् अनुष्टुब्गायत्रीकारम्)

प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।

अभीके चिदु लोककृत् सङ्गे समत्सु वृत्रहो३म्

अस्माकं बोधि चोदिता नभन्तामन्यकेषाम् । ज्याका अधि धन्वसो३ं

त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम् ।

अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यो३ं

तं त्वा परि ष्वजामहे नभन्तामन्यकेषाम् । ज्याका अधि धन्वसो३ं

वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः ।

अस्तासि शत्रवे वधं यो न इन्द्र जिघांसतो३ं

या ते रातिर्ददिर्वसु नभन्तामन्यकेषाम् । ज्याका अधि धन्वसो३ं (१०–१३३–३)

(आनुष्टुभाः)

प्रचेतन प्रचेतयायाहि पिब मत्स्व ।

ऋतुश्छन्द ऋतं बृहत्सुम्न आ धेहि नो वसो३ं (आ.श्रौ.६।२।९)

प्र प्र वस्त्रिष्टुभमिषं मन्दद्वीरायेन्दवे ।

धिया वो मेधसातये पुरंध्या विवासतो३ं

नदं व ओदतीनां नदं योयुवतीनाम् ।

पतिं वो अघ्न्यानां धेनूनामिषुध्यसो३ं

ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः ।

जन्मन् देवानां विशस्त्रिष्वा रोचने दिवो३म् (८।६९।१–३)

अर्चत प्रार्चत प्रियमेधासो अर्चत ।

अर्चन्तु पुत्रका उत पुरं न धृष्ण्वर्चतो३म्

अव स्वराति गर्गरो गोधा परि सनिष्वणत् ।

पिङ्गा परि चनिष्कददिन्द्राय ब्रह्मोद्यतो३म्

आ यत्पतन्त्येन्यः सुदुघा अनपस्फुरः ।

अपस्फुरं गृभायत सोममिन्द्राय पातवो३ं (८।६९।८–१०)

यो व्यतीँरफाणयत् सुयुक्ताँ उप दाशुषे ।

तक्वो नेता तदिद्वपुरुपमा यो अमुच्यतो३म्

अतीदु शक्र ओहत इन्द्रो विश्वा अति द्विषः ।

भिनत् कनीन ओदनं पच्यमानं परो गिरो३ं

शो३ंसावो३म् अस्य मदे जरितरिन्द्रः सोमस्य मत्सत् । अस्य मदे जरितरिन्द्रोऽहिमहन् ।अस्य मदे जरितरिन्द्रो वृत्रमहन् । अस्य मदे जरितरिन्द्रोऽपां वेगमैरयत् । अस्य मदे जरितरिन्द्रोऽजिन्वदजुवोऽपिन्वदपितः । अस्य मदे जरितरिन्द्र उदार्यं वर्णमतिरदवदासीद् विशो अस्तभ्नात् । अस्य मदे जरितरिन्द्र उद्द्यामस्तभ्नादप्रथयत् पृथिवीम् । अस्य मदे जरितरिन्द्रो दिवि सूर्यमैरयद् व्यन्तरिक्षमतिरत् । अस्य मदे जरितरिन्द्रः समुद्रान् प्रकुपिताँ अरम्णात् । अस्य मदे जरितरिन्द्र ऋश्याँ इव पम्फणतः पर्वतान् प्रकुपिताँ अरम्णात् । अस्य मदे जरितरिन्द्र इह श्रवदिह

**सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु ।**
**चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमो३म्**
**अर्भको न कुमारकोऽधि तिष्ठन् नवं रथम् ।**
**स पक्षन्महिषं मृगं पित्रे मात्रे विभुक्रतो३ं** (८।६९।१३–१५)
**शो३ंसावो३म् उद्यद् ब्रध्नस्य विष्टपं गृहमिन्द्रश्च गन्वहि ।**
**मध्वः पीत्वा सचेवहि त्रिः सप्त सख्युः पदो३म् ॥** (८।६९।७) इति त्रिः परिदध्यात् ।
**एवाह्येवैवाहीन्द्र३ । एवा हि शक्रो वशी हि शक्रः ।** [आ.श्रौ.६।२।१२] इति शस्त्वा जपति ।
**ये३ यजामह अपाः पूर्वेषां हरिवः सुतानामथो इदं सवनं केवलं ते ।**
**ममद्धि सोमं मधुमन्तमिन्द्र सत्रा वृषञ्जठर आ वृषस्वा३ वौ३षट् ॥** (१०।९६।१३)
**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः ।

**विहृतषोडशीशस्त्रम् ।**

गौरिवीतषोडशीस्तोत्रमेकविंशस्तोमम् । । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे
**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शोशो३ंसावो३म्**
**इन्द्र जुषस्व प्रवहाऽयाहि शूर हरी इह ।**
**पिबा सुतस्य मतिर्न मध्वश्चकानश्चारुर्मदायो३म्**
**इन्द्र जठरं नव्यं न पृणस्व मधोर्दिवो न ।**
**अस्य सुतस्य स्वर्णोप त्वा मदाः सुवाचो अस्थो३म्**
**इन्द्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न ।**
**बिभेद वलं भृगुर्न ससाहे शत्रून् मदे सोमस्यो३ं**
**श्रुधी हवं न इन्द्रो न गिरो जुषस्व वज्री न ।**
**इन्द्र सयुग्भिर्दिद्युं न मत्स्वा मदाय महे रणायो३म्**
**आ त्वा विशन्तु कविर्न सुतास इन्द्र त्वष्टा न ।**
**पृणस्व कुक्षी सोमो नाविड्ढि शूर धिया हि यानो३ं**
**साधुर्न गृध्नुर्ऋभुर्नास्तेव शूरश्चमसो न ।**
**यातेव भीमो विष्णुर्न त्वेषः समत्सु क्रतुर्नो३म्** [आ.श्रौ.६।३।१]
**आ त्वा वहन्तु हरय उपो षु शृणुही गिरः ।**
**वृषणं सोमपीतये मघवन् मातथा इवो३म्**
**इन्द्र त्वा सूरचक्षसो यदा नः सूनृतावतः ।**

कर आदर्थयास इद् योजा न्विन्द्र ते हरो३ं
इमा धाना घृतस्नुवः सुसंदृशं त्वा वयम् ।
हरी इहोप वक्षतो मघवन् वन्दिषीमहो३म्
इन्द्रं सुखतमे रथे प्र नूनं पूर्णवन्धुरः ।
स्तुतो याहि वशाँ अनु योजा न्विन्द्र ते हरो३ं

इन्द्रं प्रातर्हवामहे स घा तं वृषणं रथम् ।
इन्द्रं प्रयत्यध्वरेऽधि तिष्ठाति गोविदो३म्
इन्द्रं सोमस्य पीतये यः पात्रं हारियोजनम् ।
पूर्णमिन्द्र चिकेतति योजा न्विन्द्र हरो३ं
यदिन्द्र पृतनाज्येऽयं ते अस्तु हर्यतः ।
देवास्त्वा दधिरे पुरः सोम आ हरिभिः सुतो३म्
आदित्ते ह जुषाण इन्द्र हरिभिर्न आ गहि ।
र्यता हरी ववक्षतुरा तिष्ठ हरितं रथो३ं
यदा वृत्रं नदीवृतं हर्यन्नुषसमर्चयः ।
शवसा वज्रिन्नवधीः सूर्यं हर्यन्नरोचयो३म्
आदित्ते ह विद्वांश्चिकित्वान् हर्यश्व वर्धसे ।
र्यता हरी ववक्षतुरिन्द्र विश्वा अभि श्रियो३ं
यदा ते विष्णुरोजसा द्यामिन्द्रो हरिधायसम् ।
त्रीणि पदा विचक्रमे पृथिवीं हरिवर्पसो३म्
आदित्ते हाधारयद्धरितोर्भूरि भोजनम् ।
र्यता हरी ववक्षतुर्ययोरन्तर्हरिश्चरो३म्
आ धूर्ष्वस्मै ब्रह्मन् वीर ब्रह्मकृतिं जुषाणः ।
दधाताश्वानर्वाचीनो हरिभिर्याहि तूयो३म्
इन्द्रो न वज्र्यस्मिन्नू षु सवने मादयस्व ।
हिरण्यबाहुरुप ब्रह्माणि शृणव इमा नो३म्
एष ब्रह्मा प्र ते महे विदथे शंसिषं हरी ।
य ऋत्वियः प्र ते वन्वे वनुषो हर्यतं मदो३ं
इन्द्रो नाम घृतं न यो हरिभिश्चारु सेचते ।

श्रुतो गृण आ त्वा विशन्तु हरिवर्पसं गिरो३ं
विसृतयो हरिं हि योनिमभि ये समस्वरन् ।
यथा पथो हिन्वन्तो हरी दिव्यं यथा सदो३म्
इन्द्र त्वद्या यं पृणन्ति हरिभिर्न धेनवः ।
न्ति रातय इन्द्राय शूषं हरिवन्तमर्चतो३ं

त्वामिच्छव सो अस्य वज्रो हरितो य आयसः ।
सस्पते हरिर्निकामो हरिरा गभस्त्यो३ं
यन्ति गिरो द्युम्नी सुशिप्रो हरिमन्युसायकः ।
न संयत इन्द्रे नि रूपा हरिता मिमिक्षिरो३ं
त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मः ।
तृपत् सोममपिबद्विष्णुना सुतं यथावशो३ं
स ईं ममाद महि कर्म कर्तवे महामुरुम् ।
सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दो३म्
अध त्विषीमाँ अभ्योजसा क्रिविं युधाभवत् ।
आ रोदसी अपृणदस्य मज्मना प्र वावृधो३म्
अधत्तान्यं जठरे प्रेमरिच्यत प्रचेतन ।
सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दो३म्
साकं जातः क्रतुना साकमोजसा ववक्षिथ ।
साकं वृद्धो वीर्यैः सासहिर्मृधो विचर्षणो३ं
दाता राधः स्तुवते काम्यं वसु प्रचेतय ।
सैनं सश्चद् देवो देवं सत्यमिन्द्रं सत्य इन्दो३म्
प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
अभीके चिदु लोककृत् सङ्गे समत्सु वृत्रहो३म्
अस्माकं बोधि चोदितायाहि पिब मत्स्व ।
नभन्तामन्यकेषां ज्याका अधि धन्वसो३ं
त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम् ।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यो३ं
तं त्वा परि ष्वजामहे क्रतुश्छन्द ऋतं बृहत् ।

नभन्तामन्यकेषां ज्याका अधि धन्वसोइं
वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः ।
अस्तासि शत्रवे वधं यो न इन्द्र जिघांसतोइं
या ते रातिर्ददिर्वसु सुम्न आ धेहि नो वसो ।
नभन्तामन्यकेषां ज्याका अधि धन्वसोइं
प्र प्र वस्त्रिष्टुभमिषं मन्दद्वीरायेन्दवे ।
धिया वो मेधसातये पुरंध्या विवासतोइं
नदं व ओदतीनां नदं योयुवतीनाम् ।
पतिं वो अघ्न्यानां धेनूनामिषुध्यसोइं
ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः ।
जन्मन् देवानां विशस्त्रिष्वा रोचने दिवोइम् (८।६९।१–३)
अर्चत प्रार्चत प्रियमेधासो अर्चत ।
अर्चन्तु पुत्रका उत पुरं न धृष्ण्वर्चतोइम्
अव स्वराति गर्गरो गोधा परि सनिष्वणत् ।
पिङ्गा परि चनिष्कददिन्द्राय ब्रह्मोद्यतोइम्
आ यत्पतन्त्येन्यः सुदुघा अनपस्फुरः ।
अपस्फुरं गृभायत सोममिन्द्राय पातवोइं (८।६९।८–१०)
यो व्यतीँरफाणयत् सुयुक्ताँ उप दाशुषे ।
तक्वो नेता तदिद्वपुरुपमा यो अमुच्यतोइम्
अतीदु शक्र ओहत इन्द्रो विश्वा अति द्विषः ।
भिनत् कनीन ओदनं पच्यमानं परो गिरोइं
शोइंसावोइम् अस्य मदे जरितरिन्द्रः सोमस्य मत्सत् । अस्य मदे जरितरिन्द्रोऽहिमहन् ।अस्य मदे जरितरिन्द्रो वृत्रमहन् । अस्य मदे जरितरिन्द्रोऽपां वेगमैरयत् । अस्य मदे जरितरिन्द्रोऽजिन्वदजुवोऽपिन्वदपितः । अस्य मदे जरितरिन्द्र उदार्यं वर्णमतिरदवदासीद् विशो अस्तभ्नात् । अस्य मदे जरितरिन्द्र उद्द्यामस्तभ्नादप्रथयत् पृथिवीम् । अस्य मदे जरितरिन्द्रो दिवि सूर्यमैरयद् व्यन्तरिक्षमतिरत् । अस्य मदे जरितरिन्द्रः समुद्रान् प्रकुपिताँ अरम्णात् । अस्य मदे जरितरिन्द्र ऋश्याँ इव पम्फणतः पर्वतान् प्रकुपिताँ अरम्णात् । अस्य मदे जरितरिन्द्र इह श्रवदिह सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद् ब्रह्माण्यावसा गमोइम्
अर्भको न कुमारकोऽधि तिष्ठन् नवं रथम् ।

**स पक्षन्महिषं मृगं पित्रे मात्रे विभुक्रतो३ं** (८।६९।१३–१५)

**शो३ंसावो३म् उद्यद् ब्रध्नस्य विष्टपं गृहमिन्द्रश्च गन्वहि ।**

**मध्वः पीत्वा सचेवहि त्रिः सप्त सख्युः पदो३म् ॥** (८।६९।७) इति त्रिः परिदध्यात् ।

**उक्थं वाचीन्द्राय देवेभ्यः ।** इति शस्त्वा जपति ।

**ये३ यजामह एवाह्येवैवापाः पूर्वेषां हरिवः सुतानामेवाहीन्द्र३ अथो इदं सवनं केवलं ते ।**

**एवा हि शक्रो ममद्धि सोमं मधुमन्तमिन्द्र वशी हि शक्रः सत्रा वृषञ्जठर आ वृषस्वा३ वौ३षट् ॥** [आ.श्रौ.६।३।१६]

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः ।

विहृतेऽविहृते च आहृतं षोडशिपात्रं समुपहावं भक्षयन्ति । घर्मे च ये भक्षिणस्ते, मैत्रावरुणस्त्रयश्छन्दोगाः । प्रथमं होता भक्षयति । स्वव्यतिरिक्तान् भक्षिण उपहूय

**इन्द्र षोडशिन्नोजस्विंस्त्वं देवेष्वस्योजस्वन्तमामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु ।**

**तस्य त इन्द्रपीतस्यानुष्टुप् छन्दस उपहूतस्योपहूतो भक्षयामि** इति भक्षजपः । मैत्रावरुणोऽप्यनेनैव भक्षयति स्वव्यतिरिक्तान् भक्षिण उपहूय ।

विहृतस्य प्रतिगरे विशेषः– **आ त्वा वहन्तु** इत्यारभ्य **प्रप्र वस्त्रिष्टुभम्** इत्येत्पर्यन्तमनवाने– **ओथामो दैवमदे,** प्रणवे– **मदामो दैवोमथ** इति प्रतिगरौ भवतः । अन्यत् समानम् । ततो मृगतीर्थसर्पणमनूयाजादिकम् । सूक्तवकप्रैषे–

**अग्निमद्य होयारमवृणीतायं सुन्वन् यजमानः पचन् पक्तीः पचन् पुरोळाशान् गृह्णन्नग्नय आज्यं गृह्णन्त्सोमायाज्यं बध्नन्नग्नय इन्द्राग्नोभ्यां छागौ बध्नन्निन्द्राय मेषं सुन्वन्निन्द्राय सोमं भृञ्जन् हरिभ्यां धानाः सूपस्था अद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनाग्नय इन्द्राग्निभ्यां छागाभ्यामिन्द्राय मेषेणेन्द्राय सोमेन हरिभ्यां धानाभिरद्यतं मेदस्तः प्रतिपचताग्रभीषुरवीवृधन्त पुरोळाशैरपादिन्द्रः सोमं गवाशिरं यवाशिरं तीव्रान्तं बहुदमध्यमुपोत्थामदाश्रौद्धिमदाँ आनळवीवृधतां गूषैस्त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं सुन्वन् यजमानो बहुभ्य आसङ्गतेभ्यः । एष मे देवेषु वसुवार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रू३हि ॥**

होता– **इदं द्यावापृथिवी** इत्यदि **अग्निरिदं..., सोम इदं..., अग्निरिदं..., इन्द्राग्नी इदं..., इन्द्र इदं..., वनस्पतिरिदं..., इन्द्रो वसुमानिदं..., इन्द्रो रुद्रवानिदं..., इन्द्र आदित्यवानृभुमान् विभुमान् बृहस्पतिवान् विश्वदेव्यावानिदं..., देवा आज्यपा** इत्यादि । शंयुवाकादि यज्ञपुच्छं समानमान्तम् । सन्तिष्ठते षोडशी ॥

वाजपेयः

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् ।
दूरेदृशं गृहपतिमथर्युम् ॥ (७–१–१)
तमग्निमस्ते वसवो न्यृण्वन्सुप्रतिचक्षमवसे कुतश्चित् ।
दक्षाय्यो यो दम आस नित्यः ॥ (७–१–२)
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।
त्वां शश्वन्त उप यन्ति वाजाः ॥ (७–१–३)
प्र ते अग्नयोऽग्निभ्यो वर्निः सुवीरासः शोशुचन्त द्युमन्तः ।
यत्रा नरः समासते सुजाताः ॥ (७–१–४)
दा नो अग्ने धिया रयिं सुवीरं स्वपत्यं सहस्य प्रशस्तम् ।
न यं यावा तरति यातुमावान् ॥ (७–१–५)
उप यमेति युवतिः सुदक्षं दोषा वस्तोर्हविष्मती घृताची ।
उप स्वैनमरमतिर्वसूयुः ॥ (७–१–६)
विश्वा अग्नेऽप दहारातीर्येभिस्तपोभिरदहो जरूथम् ।
प्र निस्वरं चातयस्वामीवाम् ॥ (७–१–७)
आ यस्ते अग्न इधते अनीकं वसिष्ठ शुक्र दीदिवः पावक ।
उतो न एभि स्तवथैरिह स्याः ॥ (७–१–८)
वि ये ते अग्ने भेजिरे अनीकं मर्ता नरः पित्र्यासः पुरुत्रा ।
उतो न एभिः सुमना इह स्याः ॥ (७–१–९)
इमे नरो वृत्रहत्येषु शूरा विश्वा अदेवीरभि सन्तु मायाः ।
ये मे धियं पनयन्त प्रशस्ताम् ॥ (७–१–१०)
मा शूने अग्ने नि षदाम नृणां माशेषसोऽवीरता परि त्वा ।
प्रजावतीषु दुर्यासु दुर्य ॥ (७–१–११)
यमश्वी नित्यमुपयाति यज्ञं प्रजावन्तस्वपत्यं क्षयोः ।
स्वजन्मना शेषसा वावृधानम् ॥ (७–१–१२)
पाहि नो अग्ने रक्षसो अजुष्टात्पाहि धूर्तेररुषो अघायोः ।
त्वा युजा पृतनायूँरभि ष्याम् ॥ (७–१–१३)
सेदग्निरग्नीँरत्यस्त्वन्यान्यत्र वाजी तनयो वीळुपाणिः ।

सहस्रपाथा अक्षरा समेति ॥ (७–१–१४)

सेदग्निर्यो वनुष्यतो निपाति समेद्धारमंहस उरुष्यात् ।

सुजातासः परि चरन्ति वीराः ॥ (७–१–१५)

अयं सो अग्निराहुतः पुरुत्रा यमीशानः समिदिन्धे हविष्मान् ।

परि यमेत्यध्वरेषु होता ॥ (७–१–१६)

त्वे अग्न आहवनानि भूरीशानास आ जुहुयाम नित्या ।

उभा कृण्वन्तो वहतू मियेधे ॥ (७–१–१७)

इमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ ।

प्रति न ईं सुरभीणि व्यन्तु ॥ (७–१–१८)

मा नो अग्नेऽवीरते परा दा दुर्वाससेऽमतये मा नो अस्यै ।

मा नः क्षुधे मा रक्षस ऋतावो मा नो दमे मा वन आ जुहूर्थाः ॥ (७–१–१९)

नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।

रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥ (७–१–२०)

त्वमग्ने सुहवो रण्वसंदृक्सुदीती सूनो सहसो दिदीहि ।

मा त्वे सचा तनये नित्य आ धङ् मा वीरो अस्मन्नर्यो वि दासीत् ॥ (७–१–२१)

मा नो अग्ने दुर्भृतये सचैषु देवेद्धेष्वग्निषु प्र वोचः ।

मा ते अस्मान्दुर्मतयो भृमाच्चिद्देवस्य सूनो सहसो नशन्त ॥ (७–१–२२)

स मर्तो अग्ने स्वनीक रेवानमर्त्ये य आजुहोति हव्यम् ।

स देवता वसुवनिं दधाति यं सूरिरर्थी पृच्छमान एति ॥ (७–१–२३)

महो नो अग्ने सुवितस्य विद्वान्रयिं सूरिभ्य आ वहा बृहन्तम् ।

येन वयं सहसावन्मदेमाविक्षितास आयुषा सुवीराः ॥ (७–१–२४)

नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।

रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥ (७–१–२५)

अग्न इन्द्रश्च दाशुषो दुरोणे सुतावतो यज्ञमिहोप यातम् ।

अमर्धन्ता सोमपेयाय देवा ॥ (३–२५–४)

ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य ।

महि वां क्षत्रं देवेषु ॥ (५–६८–३)

ऋतमृतेन सपन्तेषिरं दक्षमाशाते ।

अद्रुहा देवौ वर्धेते ॥ (५–६८–४)

वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः ।

बृहन्तं गर्तमाशाते ॥ (५–६८–५)

ता वां सम्यगद्रुह्वाणेषमश्याम धायसे ।

वयं ते रुद्रा स्याम ॥ (५–७०–२)

पातं नो रुद्रा पायुभिरुत त्रायेथां सुत्रात्रा ।

तुर्याम दस्यून्तनूभिः ॥ (५–७०–३)

मा कस्याद्भुतक्रतू यक्षं भुजेमा तनूभिः ।

मा शेषसा मा तनसा ॥ (५–७०–४)

सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यवि द्यवि ॥ (१–४–१)

उप नः सवना गहि सोमस्य सोमपाः पिब । गोदा इद्रेवतो मदः ॥ (१–४–२)

अथा ते अन्तमानां विद्याम सुमतीनाम् । मा नो अति ख्य आ गहि ॥ (१–४–३)

अयमु ते समतसि कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे ॥ (१–३०–४)

स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते । विभूतिरस्तु सूनृता ॥ (१–३०–५)

ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो । समन्येषु ब्रवावहै ॥ (१–३०–६)

तमीळिष्व यो अर्चिषा वना विश्वा परिष्वजत् ।

कृष्णा कृणोति जिह्वया ॥ (६–६०–१०)

य इद्ध आविवासति सुम्नमिन्द्रस्य मर्त्यः ।

द्युम्नाय सुतरा अपः ॥ (६–६०–११)

ता नो वाजवतीरिष आशून् पिपृतमर्वतः ।

इन्द्रमग्निं च वोळ्हवे ॥ (६–६०–१२)

आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियम् ।

रसा दधीत वृषभम् ॥ (८–७२–१३)

ते जानत स्वमोक्यं सं वत्सासो न मातृभिः ।
मिथो नसन्त जामिभिः ॥ (८–७२–१४)
उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि ।
इन्द्रे अग्ना नमः स्वः ॥ (८–७२–१५)

कया शुभा सवयसः सनीळाः समान्या मरुतः सं मिमिक्षुः ।
कया मती कुत एतास एतेऽर्चन्ति शुष्मं वृषणो वसूया ॥ (१–१६५–१)
कस्य ब्रह्माणि जुजुषुर्युवानः को अध्वरे मरुत आ ववर्त ।
श्येनाँ इव ध्रजतो अन्तरिक्षे केन महा मनसा रीरमाम ॥ (१–१६५–२)
कुतस्त्वमिन्द्र माहिनः सन्न एको यासि सत्पते किं त इत्था ।
सं पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्ते अस्मे ॥ (१–१६५–३)
ब्रह्माणि मे मतयः शं सुतासः शुष्म इयर्ति प्रभृतो मे अद्रिः ।
आ शासते प्रति हर्यन्त्युक्थेमा हरी वहतस्ता नो अच्छ ॥ (१–१६५–४)
अतो वयमन्तमेभिर्युजानाः स्वक्षत्रेभिस्तन्वः शुम्भमानाः ।
महोभिरेताँ उप युज्महे न्विन्द्र स्वधामनु हि नो बभूथ ॥ (१–१६५–५)
क्व स्या वो मरुतः स्वधासीद्यन्मामेकं समधत्ताहिहत्ये ।
अहं ह्य् ऊग्रस्तविषस्तुविष्मान्विश्वस्य शत्रोरनमं वधस्नैः ॥ (१–१६५–६)
भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः ।
भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम ॥ (१–१६५–७)
वधीं वृत्रं मरुत इन्द्रियेण स्वेन भामेन तविषो बभूवान् ।
अहमेता मनवे विश्वश्चन्द्राः सुगा अपश्चकर वज्रबाहुः ॥ (१–१६५–८)
अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥ (१–१६५–९)
एकस्य चिन्मे विभ्वस्त्वोजो या नु दधृष्वान्कृणवै मनीषा ।
अहं ह्य् ऊग्रो मरुतो विदानो यानि च्यवमिन्द्र इदीश एषाम् ॥ (१–१६५–१०)
अमन्दन्मा मरुत स्तोमो अत्र यन्मे नरः श्रुत्यं ब्रह्म चक्र ।
इन्द्राय वृष्णे सुमखाय मह्यं सख्ये सखायस्तन्वे तनूभिः ॥ (१–१६५–११)

एवेद्येते प्रति मा रोचमाना अनेद्यः श्रव एषो दधानाः ।
संचक्ष्या मरुतश्चन्द्रवर्णा अच्छान्त मे च्छदयाथा च नूनम् ॥ (१–१६५–१२)
को न्वत्र मरुतो मामहे वः प्र यातन सखीँरच्छा सखायः ।
मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम् ॥ (१–१६५–१३)
आ यद्दुवस्याद्दुवसे न कारुरस्माञ्चक्रे मान्यस्य मेधा ।
ओ षु वर्त्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत् ॥ (१–१६५–१४)
एष व स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनुीरदानुम् ॥ (१–१६५–१५)

त्वामिद्धि हवामहे साता वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ (६–४६–१)
स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः ।
गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥ (६–४६–२)
तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥ (१०–१२०–१)
वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।
अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु ॥ (१०–१२०–२)
त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यद्येते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः ॥ (१०–१२०–३)
इति चिद्धि त्वा धना जयन्तं मदे मदे अनुमदन्ति विप्राः ।
ओजीयो धृष्णो स्थिरमा तनुष्व मा त्वा दभन्यातुधाना दुरेवाः ॥ (१०–१२०–४)
त्वया वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि ।
चोदयामि त आयुधा वचोभिः सं ते शिशामि ब्रह्मणा वयांसि ॥ (१०–१२०–५)
स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् ।
आ दर्षते शवसा सप्त दानून्प्र साक्षते प्रतिमानानि भूरि ॥ (१०–१२०–६)
नि तद्दधिषेऽवरं परं च यस्मिन्न आविथावसा दुरोणे ।
आ मातरा स्थापयसे जिगत्नू अत इनोषि कर्वरा पुरूणि ॥ (१०–१२०–७)

इमा ब्रह्म बृहद्दिवो विवक्तीन्द्राय शूषमग्रियः स्वर्षाः ।
महो गोत्रस्य क्षयति स्वराजो दुरश्च विश्वा अवृणोदप स्वाः ॥ (१०–१२०–८)
एवा महान्बृहद्दिवो अथर्वावोचत्स्वां तन्वमिन्द्रमेव ।
स्वसारो मातरिभ्वरीररिप्रा हिन्वन्ति च शवसा वर्धयन्ति च ॥ (१०–१२०–९)

बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् ।
सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमांसि ॥ (४–५०–४)
बृहस्पतिः समजयद्वसूनि महो व्रजान्गोमतो देव एषः ।
अपः सिषासन्स्वरप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥ (६–७३–३)
त्वामीळते अजिरं दूत्याय हविष्मन्तः सदमिन्मानुषासः ।
यस्य देवैरासदो बर्हिरग्नेऽहान्यस्मै सुदिना भवन्ति ॥ (७–११–२)
अग्निं सुदीतिं सुदृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः ।
त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्न अमृतस्य नाभिम् ॥ (३–१७–४)

तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् ।
श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ॥ (५–८२–१)
अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियम् ।
न मिनन्ति स्वराज्यम् ॥ (५–८२–२)
स हि रत्नानि दाशुषे सुवाति सविता भगः ।
तं भागं चित्रमीमहे ॥ (५–८२–३)
अद्या नो देव सवितः प्रजावत्सावीः सौभगम् ।
परा दुष्वप्न्यं सुव ॥ (५–८२–४)
विश्वानि देव सवितर्दुरितानि परा सुव ।
यद्भद्रं तन्न आ सुव ॥ (५–८२–५)
अनागसो अदितये देवस्य सवितुः सवे ।
विश्वा वामानि धीमहि ॥ (५–८२–६)

तद्देवस्य सवितुर्वार्यं महद्वृणीमहे असुरस्य प्रचेतसः ।

च्छर्दिर्येन दाशुषे यच्छति त्मना तन्नो महाँ उदयान्देवो अक्तुभिः ॥ (४–५३–१)

दिवो धर्ता भुवनस्य प्रजापतिः पिशङ्गं द्रापिं प्रति मुञ्चते कविः ।

विचक्षणः प्रथयन्न आपृणन्नुर्वजीजनत्सविता सुम्नमुक्थ्यम् ॥ (४–५३–२)

आप्रा रजांसि दिव्यानि पार्थिवा श्लोकं देवः कृणुते स्वाय धर्मणे ।

प्र बाहू अस्राक्सविता सवीमनि निवेशयन्प्रसुवन्न अक्तुभिर्जगत् ॥ (४–५३–३)

अदाभ्यो भुवनानि प्रचाकशद्व्रतानि देवः सविताभि रक्षते ।

प्रास्राग्बाहू भुवनस्य प्रजाभ्यो धृतव्रतो महो अज्मस्य राजति ॥ (४–५३–४)

त्रिरन्तरिक्षं सविता महित्वना त्री रजांसि परिभुस्त्रीणि रोचना ।

तिस्रो दिवः पृथिवीस्तिस्र इन्वति त्रिभिर्व्रतैरभि नो रक्षति त्मना ॥ (४–५३–५)

बृहत्सुम्नः प्रसवीता निवेशनो जगत स्थातुरुभयस्य यो वशी ।

स नो देवः सविता शर्म यच्छत्वस्मे क्षयाय त्रिवरूथमंहसः ॥ (४–५३–६)

आगन्देव ऋतुभिर्वर्धतु क्षयं दधातु नः सविता सुप्रजामिषम् ।

स नः क्षपाभिरहभिश्च जिन्वतु प्रजावन्तं रयिमस्मे समिन्वतु ॥ (४–५३–७)

एकया प्रतिधापिबत्साकं सरांसि त्रिंशतम् ।

इन्द्रः सोमस्य काणुका ॥ (८–७७–४)

घृतेन द्यावापृथिवी अभीवृते घृतश्रिया घृतपृचा घृतावृधा ।

उर्वी पृथ्वी होतृवूर्ये पुरोहिते ते इद्विप्रा ईळते सुम्नमिष्टये ॥ (६–७०–४)

मधु नो द्यावापृथिवी मिमिक्षतां मधुश्चुता मधुदुघे मधुव्रते ।

दधाने यज्ञं द्रविणं च देवता महि श्रवो वाजमस्मे सुवीर्यम् ॥ (६–७०–५)

ऊर्जं नो द्यौश्च पृथिवी च पिन्वतां पिता माता विश्वविदा सुदंससा ।

संरराणे रोदसी विश्वशम्भुवा सनिं वाजं रयिमस्मे समिन्वताम् ॥ (६–७०–६)

सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यवि द्यवि ॥ (१–४–१)

अनश्वो जातो अनभीशुरुक्थ्यो रथस्त्रिचक्रः परि वर्तते रजः ।

महत्तद्वो देव्यस्य प्रवाचनं द्यामृभवः पृथिवीं यच्च पुष्यथ ॥ (४–३६–१)

रथं ये चक्रुः सुवृतं सुचेतसोऽविह्वरन्तं मनसस्परि ध्यया ।

ताँ ऊ न्वस्य सवनस्य पीतय आ वो वाजा ऋभवो वेदयामसि ॥ (४–३६–२)

तद्वो वाजा ऋभवः सुप्रवाचनं देवेषु विभ्वो अभवन्महित्वनम् ।

जिव्री यत्सन्ता पितरा सनाजुरा पुनर्युवाना चरथाय तक्षथ ॥ (४–३६–३)

एकं वि चक्र चमसं चतुर्वयं निश्चर्मणो गामरिणीत धीतिभिः ।
अथा देवेष्वमृतत्वमानश श्रुष्टी वाजा ऋभवस्तद्व उक्थ्यम् ॥ (४–३६–४)
ऋभुतो रयिः प्रथमश्रवस्तमो वाजश्रुतासो यमजीजनन्नरः ।
विभ्वतष्टो विदथेषु प्रवाच्यो यं देवासोऽवथा स विचर्षणिः ॥ (४–३६–५)
स वाज्यर्वा स ऋषिर्वचस्यया स शूरो अस्ता पृतनासु दुष्टरः ।
स रायस्पोषं स सुवीर्यं दधे यं वाजो विभ्वाँ ऋभवो यमाविषुः ॥ (४–३६–६)
श्रेष्ठं वः पेशो अधि धायि दर्शतं स्तोमो वाजा ऋभवस्तं जुजुष्टन ।
धीरासो हि ष्ठा कवयो विपश्चितस्तान्व एना ब्रह्मणा वेदयामसि ॥ (४–३६–७)
यूयमस्मभ्यं धिषणाभ्यस्परि विद्वांसो विश्वा नर्याणि भोजना ।
द्युमन्तं वाजं वृषशुष्ममुत्तममा नो रयिमृभवस्तक्षता वयः ॥ (४–३६–८)
इह प्रजामिह रयिं रराणा इह श्रवो वीरवत्तक्षता नः ।
येन वयं चितयेमात्यन्यान्तं वाजं चित्रमृभवो ददा नः ॥ (४–३६–९)
अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपां सङ्गमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥ (१०–१२३–१)
येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः ।
उक्थशुष्मान्वृषभरान्स्वप्नसस्ताँ आदित्याँ अनु मदा स्वस्तये ॥ (१०–६३–३)
एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥ (४–५०–६)
परावतो ये दिधिषन्त आप्यं मनुप्रीतासो जनिमा विवस्वतः ।
ययातेर्ये नहुष्यस्य बर्हिषि देवा आसते ते अधि ब्रुवन्तु नः ॥ (१०–६३–१)
विश्वा हि वो नमस्यानि वन्द्या नामानि देवा उत यज्ञियानि वः ।
ये स्थ जाता अदितेरद्भ्यस्परि ये पृथिव्यास्ते म इह श्रुता हवम् ॥ (१०–६३–२)
येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः ।
उक्थशुष्मान्वृषभरान्स्वप्नसस्ताँ आदित्याँ अनु मदा स्वस्तये ॥ (१०–६३–३)
नृचक्षसो अनिमिषन्तो अर्हणा बृहद्देवासो अमृतत्वमानशुः ।
ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ॥ (१०–६३–४)
सम्राजो ये सुवृधो यज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयम् ।
ताँ आ विवास नमसा सुवृक्तिभिर्महो आदित्याँ अदितिस्विस्तये ॥ (१०–६३–५)
को व स्तोमं राधति युाजोषथ विश्वे देवासो मनुषो यति ष्ठन ।

को वोऽध्वरं तुविजाता अरं करद्यो नः पर्षदत्यंहः स्वस्तये ॥ (१०–६३–६)

येभ्यो होत्रां प्रथमामायेजे मनुः समिद्धाग्निर्मनसा सप्त होतृभिः ।

त आदित्या अभयं शर्म यच्छत सुगा नः कर्त सुपथा स्वस्तये ॥ (१०–६३–७)

य ईशिरे भुवनस्य प्रचेतसो विश्वस्य स्थातुर्जगतश्च मन्तवः ।

ते नः कृतादकृतादेनसस्पर्यद्या देवासः पिपृता स्वस्तये ॥ (१०–६३–८)

भरेष्विन्द्रं सुहवं हवामहेंऽहोमुचं सुकृतं दैव्युानम् ।

अग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुतः स्वस्तये ॥ (१०–६३–९)

सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।

दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ॥ (१०–६३–१०)

विश्वे यजत्रा अधि वोचतोतये त्रायध्वं नो दुरेवाया अभिह्रुतः ।

सत्यया वो देवहूत्या हुवेम शृण्वतो देवा अवसे स्वस्तये ॥ (१०–६३–११)

अपामीवामप विश्वामनाहुतिमपारातिं दुर्विदत्रामघायतः ।

आरे देवा द्वेषो अस्मद्युयोतनोरु णः शर्म यच्छता स्वस्तये ॥ (१०–६३–१२)

अरिष्टः स मर्तो विश्व एधते प्र प्रजाभिर्जायते धर्मणस्परि ।

यमादित्यासो नयथा सुनीतिभिरति विश्वानि दुरिता स्वस्तये ॥ (१०–६३–१३)

यं देवासोऽवथ वाजसातौ यं शूरसाता मरुतो हिते धने ।

प्रातर्यावाणं रथमिन्द्र सानसिमरिष्यन्तमा रुहेमा स्वस्तये ॥ (१०–६३–१४)

स्वस्ति नः पथ्यासु धन्वसु स्वस्त्यप्सु वृजने स्वर्वति ।

स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ॥ (१०–६३–१५)

स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।

सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ॥ (१०–६३–१६)

एवा प्लतेः सूनुरवीवृधद्वो विश्व आदित्या अदिते मनीषी ।

ईशानासो नरो अमर्त्येनास्तावि जनो दिव्यो गयेन ॥ (१०–६३–१७)

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।

विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥ (१–८९–१०)

विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ ।

ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ॥ (६–५२–१३)

वैश्वानराय धिषणामृतावृधे घृतं न पूतमग्नये जनामसि ।
द्विता होतारं मनुषश्च वाघतो धिया रथं न कुलिशः समृण्वति ॥ (३–२–१)
स रोचयज्जनुषा रोदसी उभे स मात्रोरभवत्पुत्र ईड्यः ।
हव्यवाळग्निरजरश्चनोहितो दूळभो विशामतिथिर्विभावसुः ॥ (३–२–२)
क्रत्वा दक्षस्य तरुषो विधर्मणि देवासो अग्निुनयन्त चित्तिभिः ।
रुरुचानं भानुना ज्योतिषा महामत्यो वाजं सनिष्यन्नुप ब्रुवे ॥ (३–२–३)
आ मन्द्रस्य सनिष्यन्तो वरेण्यं वृणीमहे अह्रयं वाजमृग्मियम् ।
रातिं भृगूणामुशिजं कविक्रतुमग्निं राजन्तं दिव्येन शोचिषा ॥ (३–२–४)
अग्निं सुम्नाय दधिरे पुरो जना वाजश्रवसमिह वृक्तबर्हिषः ।
यतस्रुचः सुरुचं विश्वदेव्यं रुद्रं यज्ञानां साधदिष्टिमपसाम् ॥ (३–२–५)
पावकशोचे तव हि क्षयं परि होतर्यज्ञेषु वृक्तबर्हिषो नरः ।
अग्ने दुव इच्छमानास आप्यमुपासते द्रविणं धेहि तेभ्यः ॥ (३–२–६)
आ रोदसी अपृणदा स्वर्महज्जातं यदेनमपसो अधारयन् ।
सो अध्वराय परि णीयते कविरत्यो न वाजसातये चनोहितः ॥ (३–२–७)
नमस्यत हव्यदातिस्वध्वरं दुवस्यत दम्युाातवेदसम् ।
रथीर्ऋतस्य बृहतो विचर्षणिरग्निर्देवानामभवत्पुरोहितः ॥ (३–२–८)
तिस्रो यह्वस्य समिधः परिज्मनोऽग्नेरपुनन्नुशिजो अमृत्यवः ।
तासामेकामदधुर्मर्त्ये भुजमु लोकमु द्वे उप जामिमीयतुः ॥ (३–२–९)
विशां कविं विश्पतिं मानुषीरिषः सं सीमकृण्वन्स्वधितिं न तेजसे ।
स उद्वतो निवतो याति वेविषत्स गर्भमेषु भुवनेषु दीधरत् ॥ (३–२–१०)
स जिन्वते जठरेषु प्रजज्ञिवान्वृषा चित्रेषु नानदन्न सिंहः ।
वैश्वानरः पृथुपाजा अमर्त्यो वसु रत्ना दयमानो वि दाशुषे ॥ (३–२–११)
वैश्वानरः प्रत्नथा नाकमारुहद्दिवस्पृष्ठं भन्दमानः सुमन्मभिः।
स पूर्ववज्जनयञ्जन्तवे धनं समानमज्मं पर्येति जागृविः ॥ (३–२–१२)
ऋतावान्यज्ञियं विप्रमुक्थ्यमा यं दधे मातरिश्वा दिवि क्षयम् ।

तं चित्रयामं हरिकेशमीमहे सुदीतिमग्निं सुविताय नव्यसे ॥ (३–२–१३)

शुचिं न यामन्निषिरं स्वर्दृशं केतुं दिवो रोचनस्थामुषर्बुधम् ।

अग्निं मूर्धानं दिवो अप्रतिष्कुतं तमीमहे नमसा वाजिन्बृहत् ॥ (३–२–१४)

मन्द्रं होतारं शुचिमद्वयाविनं दमूनसमुक्थ्यं विश्वचर्षणिम् ।

रथं न चित्रं वपुषाय दर्शतं मनुर्हितं सदमिद्राय ईमहे ॥ (३–२–१५)

शं नः करत्यर्वते सुगं मेषाय मेष्ये ।

नृभ्यो नारिभ्यो गवे ॥ (१–४३–६)

धारावरा मरुतो धृष्ण्वोजसो मृगा न भीमास्तविषीभिरर्चिनः ।

अग्नयो न शुशुचाना ऋजीषिणो भृमिं धमन्तो अप गा अवृण्वत ॥ (२–३४–१)

द्यावो न स्तृभिश्चितयन्त खादिनो व्यभ्रिया न द्युतयन्त वृष्टयः ।

रुद्रो यद्वो मरुतो रुक्मवक्षसो वृषाजनि पृश्न्याः शुक्र ऊधनि ॥ (२–३४–२)

उक्षन्ते अश्वाँ अत्याँ इवाजिषु नदस्य कर्णैस्तुरयन्त आशुभिः ।

हिरण्यशिप्रा मरुतो दविध्वतः पृक्षं याथ पृषतीभिः समन्यवः ॥ (२–३४–३)

पृक्षे ता विश्वा भुवना ववक्षिरे मित्राय वा सदमा जीरदानवः ।

पृषदश्वासो अनवभ्रराधस ऋजिप्यासो न वयुनेषु धूर्षदः ॥ (२–३४–४)

इन्धन्वभिर्धेनुभी रप्शदूधभिरध्वस्मभिः पथिभिर्भ्राजदृष्टयः ।

आ हंसासो न स्वसराणि गन्तन मधोर्मदाय मरुतः समन्यवः ॥ (२–३४–५)

आ नो ब्रह्माणि मरुतः समन्यवो नरां न शंसः सवनानि गन्तन ।

अश्वामिव पिप्यत धेनुमूधनि कर्ता धियुरित्रे वाजपेशसम् ॥ (२–३४–६)

तं नो दात मरुतो वाजिनं रथ आपानं ब्रह्म चितयद्दिवे–दिवे ।

इषं स्तोतृभ्यो वृजनेषु कारवे सनिं मेधामरिष्टं दुष्टरं सहः ॥ (२–३४–७)

यद्युञ्जते मरुतो रुक्मवक्षसोऽश्वान्रथेषु भग आ सुदानवः ।

धेनुर्न शिश्वे स्वसरेषु पिन्वते जनाय रातहविषे महीमिषम् ॥ (२–३४–८)

यो नो मरुतो वृकताति मर्त्यो रिपुर्दधे वसवो रक्षता रिषः ।

वर्तयत तपुषा चक्रियाभि तमव रुद्रा अशसो हन्तना वधः ॥ (२–३४–९)

चित्रं तद्वो मरुतो याम चेकिते पृश्न्या यदूधरप्यापयो दुहुः ।

यद्वा निदे नवमानस्य रुद्रियास्त्रितं जराय जुरतामदाभ्याः ॥ (२–३४–१०)

तान्वो महो मरुत एवयाव्नो विष्णोरेषस्य प्रभृथे हवामहे ।

हिरण्यवर्णान्ककुहान्यतस्रुचो ब्रह्मण्यन्तः शंस्यं राध ईमहे ॥ (२–३४–११)

ते दशग्वाः प्रथमा यज्ञमूहिरे ते नो हिन्वन्तूषसो व्युष्टिषु ।
उषा न रामीररुणैरपोर्णुते महो ज्योतिषा शुचता गोअर्णसा ॥ (२–३४–१२)
ते क्षोणीभिररुणेभिर्नाञ्जिभी रुद्रा ऋतस्य सदनेषु वावृधुः ।
निमेघमाना अत्येन पाजसा सुश्चन्द्रं वर्णं दधिरे सुपेशसम् ॥ (२–३४–१३)
ताँ इयानो महि वरूथमूतय उप घेद्येना नमसा गृणीमसि ।
त्रितो न यान्पञ्च होतॄनभिष्टय आववर्तदवराञ्चक्रियावसे ॥ (२–३४–१४)
यया रध्रं पारयथात्यंहो यया निदो मुञ्चथ वन्दितारम् ।
अर्वाची सा मरुतो या व ऊतिरो षु वाश्रेव सुमतिर्जिगातु ॥ (२–३४–१५)
त्वं नश्चित्र ऊत्या वसो राधांसि चोदय ।
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥ (६–४८–९)
पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।
अग्ने हेळांसि दैव्या युयोधि नोऽदेवानि ह्वरांसि च ॥ (६–४८–१०)
अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥ (१–४४–१)
जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम् ।
सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥ (१–४४–२)
यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे ।
प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥ (६–४८–१)
ऊर्जो नपातं स हिनायमस्मयुर्दाशेम हव्यदातये ।
भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥ (६–४८–२)
देवो वो द्रविणोदाः पूर्णां विवष्ट्यासिचम् ।
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥ (७–१६–११)
तं होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृण्वत ।
दधाति रत्नं विधते सुवीर्यमग्निर्जनाय दाशुषे ॥ (७–१६–१२)
त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा । तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ (१–३१–१)
त्वमग्ने प्रथमो अङ्गिरस्तमः कविर्देवानां परि भूषसि व्रतम् । विभुर्विश्वस्मै भुवनाय मेधिरो द्विमाता शयुः कतिधा चिदायवे ॥ (१–३१–२)

त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया विवस्वते । अरेजेतां रोदसी होतृवूर्येऽसघ्नोर्भारमयजो महो वसो ॥ (१–३१–३)

त्वमग्ने मनवे द्यामवाशयः पुरूरवसे सुकृते सुकृत्तरः । श्वात्रेण यत्पित्रोर्मुच्यसे पर्या त्वा पूर्वमनयन्न आपरं पुनः ॥ (१–३१–४)

त्वमग्ने वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः । य आहुतिं परि वेदा वषट्कृतिमेकायुरग्रे विश आविवाससि ॥ (१–३१–५)

त्वमग्ने वृजिनवर्तनिं नरं सक्मन् पिपर्षि विदथे विचर्षणे । यः शूरसाता परितक्म्ये धने दभ्रेभिश्चित्समृता हंसि भूयसः ॥ (१–३१–६)

त्वं तमग्ने अमृतत्व उत्तमे मर्तं दधासि श्रवसे दिवे दिवे । यस्तातृषाण उभयाय जन्मने मयः कृणोषि प्रय आ च सूरये ॥ (१–३१–७)

त्वं नो अग्ने सनये धनानां यशस्कारुं कृणुहि स्तवानः । ऋध्याम कर्मापसा नवेन देवैर्द्यावापृथिवी प्रावतं नः ॥ (१–३१–८)

त्वं नो अग्ने पित्रोरुपस्थ आ देवो देवेष्वनवद्य जागृविः । तनूकृद्बोधि प्रमतिश्च कारवे त्वं कल्याण वसु विश्वमोपिषे ॥ (१–३१–९)

त्वमग्ने प्रमतिस्त्वं पितासि नस्त्वं वयस्कृत्तव जामयो वयम् । सं त्वा रायः शतिनः सं सहस्रिणः सुवीरं यन्ति व्रतपामदाभ्य ॥ (१–३१–१०)

त्वामग्ने प्रथममायुमायवे देवा अकृण्वन्नहुषस्य विश्पतिम् । इळामकृण्वन्मनुषस्य शासनीं पितुर्यत्पुत्रो ममकस्य जायते ॥ (१–३१–११)

त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य । त्राता तोकस्य तनये गवामस्यनिमेषं रक्षमाणस्तव व्रते ॥ (१–३१–१२)

त्वमग्ने यज्यवे पायुरन्तरोऽनिषङ्गाय चतुरक्ष इध्यसे । यो रातहव्योऽवृकाय धायसे कीरेश्चिन्मन्त्रं मनसा वनोषि तम् ॥ (१–३१–१३)

त्वमग्न उरुशंसाय वाघते स्पार्हं यद्रेक्णः परमं वनोषि तत् । आध्रस्य चित्प्रमतिरुच्यसे पिता प्र पाकं शास्सि प्र दिशो विदुष्टरः ॥ (१–३१–१४)

त्वमग्ने प्रयतदक्षिणं नरं वर्मेव स्यूतं परि पासि विश्वतः । स्वादुक्षद्मा यो वसतौ स्योनकृज्जीवयाजं यजते सोपमा दिवः ॥ (१–३१–१५)

इमामग्ने शरणिं मीमृषो न इममध्वान्यमगाम दूरात् । आपिः पिता प्रमतिः सोम्यानां भृमिरस्य् ऋषिकृन्मर्त्यानाम् ॥ (१–३१–१६)

मनुष्वदग्ने अङ्गिरस्वदङ्गिरो ययातिवत्सदने पूर्ववच्छुचे । अच्छ याह्या वहा दैव्युनमा सादय बर्हिषि यक्षि च प्रियम् ॥ (१–३१–१७)

एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा । उत प्र णेष्यभि वस्यो अस्मान्सं नः सृज सुमत्या वाजवत्या ॥ (१–३१–१८)

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।

महे रणाय चक्षसे ॥ (१०–९–१)

यो वः शिवतमो रसस्तस्य भाजयतेह नः ।

उशतीरिव मातरः ॥ (१०–९–२)

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।

आपो जनयथा च नः ॥ (१०–९–३)

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः ।

विश्वे देवा ऋतावृधो हुवाना स्तुता मन्त्राः कविशस्ता अवन्तु ॥ (६–५०–१४)

देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।

याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ॥ (५–४६–७)

उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्यग्नाय्यश्विनी राट् ।

आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥ (५–४६–८)

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।

सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥ (२–३२–४)

यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि ।

ताभिनी अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ (२–३२–५)

पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।

ग्नाभिरच्छिद्रं शरणं सजोषा दुराधर्षं गृणते शर्म यंसत् ॥ (६–४९–७)

इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः ।

आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन्हविषा मादयस्व ॥ (१०–१४–४)

मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।

यांश्च देवा वावृधुर्ये च देवान्स्वाहान्ये स्वधयान्ये मदन्ति ॥ (१०–१४–३)

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।

असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ (१०–१५–१)

आहं पितॄन्सुविदत्राँ अवित्सि नपातं च विक्रमणं च विष्णोः ।

बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥ (१०–१५–३)
इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनं सुवृजनासु विक्षु ॥ (१०–१५–२)
स्वादुष् किलायं मधुमाँ उतायं तीव्रः किलायं रसवाँ उतायम् ।
उतो न्वस्य पपिवांसमिन्द्रं न कश्चन सहत आहवेषु ॥ (६–४७–१)
अयं स्वादुरिह मदिष्ठ आस यस्येन्द्रो वृत्रहत्ये ममाद ।
पुरूणि यश् च्यौत्ना शम्बरस्य वि नवतिं नव च देह्यो हन् ॥ (६–४७–२)
अयं मे पीत उदियर्ति वाचमयं मनीषामुशतीमजीगः ।
अयं षळ् उर्वीरमिमीत धीरो न याभ्यो भुवनं कच्चनारे ॥ (६–४७–३)
अयं स यो वरिमाणं पृथिव्या वर्ष्माणं दिवो अकृणोदयं सः ।
अयं पीयूषं तिसृषु प्रवत्सु सोमो दाधारोर्वन्तरिक्षम् ॥ (६–४७–४)
ययो रोजसा स्कभिता रजांसि । वीर्येभिर्वीरतमा शविष्ठो३ं
या पत्येते अप्रतीता सहोभिः । विष्णू अगन् वरुणा पूर्वहूतो३ं
विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ (१–१५४–१)
तन्तुं तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् । अनुल्बणं वयत जोगुवामपो मनुर्भव जनया दैव्यानम् ॥ (१०–५३–६)
एवा न इन्द्रो मघवा विरप्शी करत्सत्या चर्षणीधृदनर्वा ।
त्वं राजा जनुषां धेह्यस्मे अधि श्रवो माहिन्यज्जरित्रे ॥ (४–१७–२०)
अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मन्दसानो गणश्रिभिः ।
पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः ॥ (५–६०–८)

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ (१–१०–१)
यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम् । तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥ (१–१०–२)
युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥ (१–१०–३)
आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।
अभि त्वा समनूषतेन्द्र वत्सं न मातरः ॥ (८–९५–१)

आ त्वा शुक्रा अचुच्यवुः सुतास इन्द्र गिर्वणः ।
पिबा त्वस्यान्धस इन्द्र विश्वासु ते हितम् ॥ (८–९५–२)
पिबा सोमं मदाय कमिन्द्र श्येनाभृतं सुतम् ।
त्वं हि शश्वतीनां पती राजा विशामसि ॥ (८–९५–३)

प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥ (७–१००–५)
किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥ (७–१००–६)
वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ (७–१००–७)
प्र तद्विष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ (१–१५४–२)
प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे ।
य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥ (१–१५४–३)
यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।
य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥ (१–१५४–४)
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः
स बुध्निया उपमा अस्य विष्ठाघ् सतश्च योनिमसतश्च विवो३म् ॥
यत्ते दित्सु प्रराध्यं मनो अस्ति श्रुतं बृहत् ।
तेन दृळ्हा चिदद्रिव आ वाजं दर्षि सातये ॥ (५–३९–३)
त्वामिच्छवसस्पते कण्वा उक्थेन वावृधुः ।
त्वां सुतास इन्दवः ॥ (८–६–२१)
तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् ।
प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे ॥ (५–४४–१)
श्रिये सुदृशीरुपरस्य याः स्वर्विरोचमानः ककुभामचोदते ।

सुगोपा असि न दभाय सुक्रतो परो मायाभिर्ऋत आस नाम ते ॥ (५–४४–२)
अत्यं हविः सचते सच्च धातु चारिष्टगातुः स होता सहोभरिः ।
प्रसर्स्राणो अनु बर्हिर्वृषा शिशुर्मध्ये युवाजरो विस्रुहा हितः ॥ (५–४४–३)
प्र व एते सुयुजो यामन्निष्टये नीचीरमुष्मै यम्य ऋतावृधः ।
सुयन्तुभिः सर्वशासैरभीशुभिः क्रिविर्नामानि प्रवणे मुषायति ॥ (५–४४–४)
संजर्भुराणस्तरुभिः सुतेगृभं वयाकिनं चित्तगर्भासु सुस्वरुः ।
धारवाकेष्वृजुगाथ शोभसे वर्धस्व पत्नीरभि जीवो अध्वरे ॥ (५–४४–५)
यादृग् एव ददृशे तादृगुच्यते सं च्छायया दधिरे सिध्रयाप्स्वा ।
महीमस्मभ्यमुरुषामुरु ज्रयो बृहत्सुवीरमनपच्युतं सहः ॥ (५–४४–६)
वेत्यग्रुर्जनिवान्वा अति स्पृधः समर्यता मनसा सूर्यः कविः ।
घ्रंसं रक्षन्तं परि विश्वतो गयमस्माकं शर्म वनवत्स्वावसुः ॥ (५–४४–७)
ज्यायांसमस्य यतुनस्य केतुन ऋषिस्वरं चरति यासु नाम ते ।
यादृश्मिन् धायि तमपस्यया विदद्य उ स्वयं वहते सो अरं करत् ॥ (५–४४–८)
समुद्रमासामव तस्थे अग्रिमा न रिष्यति सवन्यस्मिन्न आयता ।
अत्रा न हार्दि क्रवणस्य रेजते यत्रा मतिर्विद्यते पूतबन्धनी ॥ (५–४४–९)
स हि क्षत्रस्य मनसस्य चित्तिभिरेवावदस्य यजतस्य सध्रेः ।
अवत्सारस्य स्पृणवाम रण्वभिः शविष्ठं वाजं विदुषा चिदर्ध्यम् ॥ (५–४४–१०)
श्येन आसामदितिः कक्ष्यो मदो विश्ववारस्य यजतस्य मायिनः ।
समन्यमन्यमर्थयन्त्येतवे विदुर्विषाणं परिपानमन्ति ते ॥ (५–४४–११)
सदापृणो यजतो वि द्विषो वधीद्बाहुवृक्तः श्रुतवित्तर्यो वः सचा ।
उभा स वरा प्रत्येति भाति च यदीं गणं भजते सुप्रयावभिः ॥ (५–४४–१२)
सुतम्भरो यजमानस्य सत्पतिर्विश्वासामूधः स धियामुदञ्चनः ।
भरद्धेनू रसवच् छिश्रिये पयोऽनुब्रुवाणो अध्येति न स्वपन् ॥ (५–४४–१३)
हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ (४–४०–५)
बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य ।
धत्तं रयिं स्तुवते कीरये चिद्यूयं पात स्वस्तिभिः सदा नः ॥ (७–९७–१०)
विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् । वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा वि राजति ॥ (१०–१७०–१)

**अतिरात्रः**

सवनीयपशोः प्रागग्निष्टोमवत् । सवनीयाश्चत्वारः पशव आग्नेय ऐन्द्राग्न ऐन्द्रः सारस्वती च । तत्र द्वौ छागौ तृतीयो मेषः सारस्वती मेषी ।

अथावाहने– **आवह देवान् त्सुन्वते यजमानाय** इत्यवसाय **अग्निमग्न आ३वह । सोममा३वह । अग्निमावा३वह । इन्द्राग्नी आ३वह । इन्द्रमा३वह । सरस्वतीमा३वह । वनस्पतिमा३वह । इन्द्रं वसुमन्तमा३वह । इन्द्रं रुद्रवन्तमा३वह । इन्द्रमादित्यवन्तमृभुवन्तं विभुमन्तं वाजवन्तं बृहस्पतिवन्तं विश्वदेव्यावन्तमा३वह । देवाँ आज्यपाँ आ३वहे**त्यादि । अधिग्वाद्यैन्द्रपर्यन्तं समानं षोडशिना । अथ सरस्वत्याः–

वपायागे प्रशास्ता– **एकाचेतत्सरस्वती नदीनां शुचिर्यती गिरिभ्य आ समुद्रात् ।**

**रायश्चेतन्ती भुवनस्य भूरेर्घृतं पयो दुदुहे नाहुषायो३म् ॥** (७।९५।२)

**होता यक्षत् सरस्वतीं मेष्या वपाया मेदसो जुषतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे प्र क्षोदसा धायसा सस्र एषा सरस्वती धरुणमायसी पूः ।**

**प्रबाबधाना रथ्येव याति विश्वा अपो महिना सिन्धुरन्या३ वौ३षट् ॥** (७।९५।१)

पशुपुरोडाशे प्रशास्ता– **उत स्या नः सरस्वती जुषाणोप श्रवत्सुभगा यज्ञे अस्मिन् ।**

**मितज्ञुभिर्नमस्यैरियाना राया युजा चिदुत्तरा सखिभ्यो३म् ॥** (७।९५।४)

**होता यक्षत् सरस्वतीं पुरोळाशस्य जुषतां हविर्होतर्यज ।**

होता– **ये३ यजामहे पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।**

**ग्नाभिरच्छिद्रं शरणं सजोषा दुराधर्षं गृणते शर्म यंसा३द् वौ३षट् ॥** [६।४९।७]

हविर्यागे प्रशास्ता– **सरस्वत्यभि नो नेषि वस्यो माप स्फरीः पयसा मा न आ धक् ।**

**जुषस्व नः सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्मो३म् ॥** (६।६१।१४)

**होता यक्षत् सरस्वतीं मेष्या हविष आददद्यमध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्यागृभः । घसन्नूनं घासे अज्राणां यवस प्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवो पवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोङ्गादङ्गादवत्तानां करदेव सरस्वती जुषतां हविर्होतर्यज ॥**

होता– **ये३ यजामहे यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ।**
**यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे का३ वौ३षट् ॥** (१।१६४।४९)

वनस्पतियागे विशेषः–– **होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्टया रशनयाधित । यत्राग्नेराज्यस्य हविषः प्रियाधामानि यत्र सोमस्याज्यस्य हविषः प्रियाधामानि यत्राग्नेश्छागस्य हविषः प्रियाधामानि यत्रेन्द्राग्न्योश्छागस्य हविषः प्रियाधामानि यत्रेन्द्रस्य मेषस्य हविषः प्रियाधामानि यत्र सरस्वत्या मेष्या हविषः प्रियाधामानि यत्र वनस्पतेः प्रियापाथांसि यत्र देवानामाज्यपानां प्रियाधामानि यत्राग्नेर्होतुः प्रियाधामानि तत्रैतान् प्रस्तुत्येवोपस्त्युत्येवोपावस्रक्षद् रभीयस इव कृत्वीकरदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज ।**
स्विष्टकृत्प्रैषे विशेषः– **होता यक्षदग्निं स्विष्टकृतमयाळग्निरग्नेराज्यस्य हविषः प्रियाधामान्ययाट् सोमस्याज्यस्य हविषः प्रियाधामान्ययाळग्नेश्छागस्य हविषः प्रियाधामान्ययाळिन्द्राग्न्योश्छागस्य हविषः प्रियाधामान्ययाळिन्द्रस्य मेषस्य हविषः प्रियाधामान्ययाट् सरस्वत्या मेष्या हविषः प्रियाधामान्ययाड् वनस्पतेः प्रियापाथांस्ययाड् देवानामाज्यपानां प्रियाधामानि यक्षदग्नेर्होतुः प्रियाधामानि यक्षत्स्वं महिमानामायजतामेज्या इषः कृणातु सो अध्वरा जातवेदा जुषतां हविर्होतर्यज ॥**
केवल सारस्वती मेषी पक्षे अध्रिगौ विशेषः– **दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्यादुर आशासाना मेधपत्यै मेधाम् । प्रास्या अग्निं भरत स्तृणीत बर्हिरन्वेनां माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । उदीचीनाँ अस्याः पदो निधत्तात् सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरम् । एकधास्यास्त्वचमाच्छयतात् पुरा नाभ्या अपिशसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वात् । श्येनमस्या वक्षः कृणुतात् प्रशसा बाहू शला दोषणी कश्यपे वांसाच्छिद्रे श्रोणी कवषोरूस्रे कपर्णाष्ठीवन्ता षड्विंशतिरस्या वंक्रयस्ता अनुष्ठ्यो च्यावयताद्गात्रं गात्रमस्या अनूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् ।** (उपांशु) **अस्ना रक्षः संसृजतात् । वनिष्ठुमस्या माराविष्टोरूकम्मन्यमाना नेद्वस्तोके तनये रवितारवत्** (उपांशु) **शमितारः । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ** (उपांशु) **अपाप । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ** (उपांशु) **अपाप । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३ उ** (उपांशु) **अपाप । शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यदुष्कृतमन्यत्र तत्** इति समानमन्यत् आ षोडशिशस्त्रान्तम् । अविहृतविहृतषोडशिनोर्विकल्पः । षोडश्यन्ते मृगतीर्थसर्पणम् । षोडश्यकरणपक्षे न । ततः पर्यायसंज्ञकानि द्वादशशस्त्राणि । चतुः शस्त्राः पर्यायाः ।

**अथ प्रथमपर्यायः ।**

**होतृशस्त्रम् ।**

वैतहव्यं स्तोत्रं पञ्चदशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे

हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्

पान्तमा वो अन्धस इन्द्रमभि प्र गायत ।

विश्वासाहं शतक्रतुं मंहिष्ठं चर्षणीनो३म् इति त्रिः

पुरुहूतं पुरुष्टुतं पुरुहूतं पुरुष्टुतम् ।

गाथान्यं सनश्रुतमिन्द्र इति ब्रवीतनो३म्

इन्द्र इन्नो महानामिन्द्र इन्नो महानाम् ।

दाता वाजानां नृतुर्महाँ अभिज्ञ्वा यमो३ं (८।९२।१–३)

शो३ंसावो३म् अपादु शिप्र्यन्धसोऽपादु शिप्र्यन्धसः ।

सुदक्षस्य प्रहोषिण इन्दोरिन्द्रो यवाशिरो३म्

तम्वभि प्रार्चत तम्वभि प्रार्चत ।

इन्द्रं सोमस्य पीतये तदिद्ध्यस्य वर्धनो३म्

अस्य पीत्वा मदानामस्य पीत्वा मदानाम् ।

देवो देवस्यौजसा विश्वाभि भुवना भुवो३ं (८।९२।४–६)

शो३ंसावो३ं त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् । आ च्यावयस्यूतयो३ं

युध्मं सन्तमनर्वाणं सोमपामनपच्युतम् । नरमवार्यक्रतो३ं

शिक्षा ण इन्द्र राय आ पुरु विद्वाँ ऋचीषम । अवा नः पार्ये धनो३म्

अतश्चिदिन्द्र ण उपा याहि शतवाजया । इषा सहस्रवाजयो३म्

अयाम धीवतो धियोऽर्वद्भिः शक्र गोदरे । जयेम पृत्सु वज्रिवो३ं

वयमु त्वा शतक्रतो गावो न यवसेष्वा । उक्थेषु रणयामसो३ं

विश्वा हि मर्त्यत्वनानुकामा शतक्रतो । अगन्म वज्रिन्नाशसो३ं

त्वे सु पुत्र शवसोऽवृत्रन्कामकातयः । न त्वामिन्द्राति रिच्यतो३

स नो वृषन्त्सनिष्ठया सं घोरया द्रविल्वा । धियाविड्ढि पुरंध्यो३ं

यस्ते नूनं शतक्रतविन्द्र द्युम्नितमो मदः । तेन नूनं मदे मदो३ं

यस्ते चित्रश्रवस्तमो य इन्द्र वृत्रहन्तमः । य ओजोदातमो मदो३ं

विद्मा हि यस्ते अद्रिवस्त्वादत्तः सत्य सोमपाः । विश्वासु दस्म कृष्टिषो३म्

इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः । अर्कमर्चन्तु कारवो३म्

यस्मिन् विश्वा अधि श्रियो रणन्ति सप्त संसदः । इन्द्रं सुते हवामहो३ं

त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत । तमिद्वर्धन्तु नो गिरो३म्

आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः । न त्वामिन्द्राति रिच्यतो३ं

विव्यक्थ महिना वृषन् भक्षं सोमस्य जागृवे । य इन्द्र जठरेषु तो३म्
अरं त इन्द्र कुक्षये सोमो भवतु वृत्रहन् । अरं धामभ्य इन्दवो३म्
अरमश्वाय गायति श्रुतकक्षो अरं गवे । अरमिन्द्रस्य धाम्नो३म्
अरं हि ष्मा सुतेषु णः सोमेष्विन्द्र भूषसि । अरं ते शक्र दावनो३म्
पराकात्ताच्चिदद्रिवस्त्वां नक्षन्त नो गिरः । अरं गमाम ते वयो३म्
एवा ह्यसि वीरयुरेवा शूर उत स्थिरः । एवा ते राध्यं मनो३म्
एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः । अधा चिदिन्द्र मे सचो३म्
मो षु ब्रह्मेव तन्द्रयुर्भुवो वाजानां पते । मत्स्वा सुतस्य गोमतो३म्
मा न इन्द्राभ्यादिशः सूरो अक्तुष्वा यमन् । त्वा युजा वनेम तो३ं
त्वयेदिन्द्र युजा वयं प्रति ब्रुवीमहि स्पृधः । त्वमस्माकं तव स्मसो३ं
त्वामिद्धि त्वायवोऽनुनोनुवतश्चरान् । सखाय इन्द्र कारवो३म् (८।९२।७–३३)
अभि त्यं मेषं पुरुहूतमृग्मियम् । इन्द्रं गीर्भिर्मदता वस्वो अर्णवो३ं
यस्य द्यावो न विचरन्ति मानुषा । भुजे मंहिष्ठमभि विप्रमर्चतो३म्
अभीमवन्वन्त्स्वभिष्टिमूतयः । अन्तरिक्षप्रां तविषीभिरावृतो३म्
इन्द्रं दक्षास ऋभवो मदच्युतम् । शतक्रतुं जवनी सूनृतारुहो३ं
त्वं गोत्रमङ्गिरोभ्योऽवृणोरप । उतात्रये शतदुरेषु गातुवो३ं
ससेन चिद्विमदायावहो वसु । आजावद्रिं वावसानस्य नर्तयो३ं
त्वमपामपिधानावृणोरप । अधारयः पर्वते दानुमद्वसो३ं
वृत्रं यदिन्द्र शवसावधीरहिम् । आदित्सूर्यं दिव्यारोहयो दृशो३ं
त्वं मायाभिरप मायिनोऽधमः । स्वधाभिर्ये अधि शुप्तावजुह्वतो३ं
त्वं पिप्रोर्नृमणः प्रारुजः पुरः । प्र ऋजिश्वानं दस्युहत्येष्वाविथो३ं
त्वं कुत्सं शुष्णहत्येष्वाविथ । अरन्धयोऽतिथिग्वाय शम्बरो३म्
महान्तं चिदर्बुदं नि क्रमीः पदा । सनादेव दस्युहत्याय जज्ञिषो३ं
त्वे विश्वा तविषी सध्र्यग्घिता । तव राधः सोमपीथाय हर्षतो३ं
तव वज्रश्चिकिते बाह्वोर्हितः । वृश्चा शत्रोरव विश्वानि वृष्ण्यो३ं
वि जानीह्यार्यान्ये च दस्यवः । बर्हिष्मते रन्धया शासदव्रतो३ं
शाकी भव यजमानस्य चोदिता । विश्वेत्ता ते सधमादेषु चाकनो३म्
अनुव्रताय रन्धयन्नपव्रतान् । आभूभिरिन्द्रः श्नथयन्ननाभुवो३ं
वृद्धस्य चिद्वर्धतो द्यामिनक्षतः । स्तवानो वम्रो वि जघान संदिहो३ं

**तक्षद्यत्त उशना सहसा सहः । वि रोदसी मज्मना बाधते शवो३म्**

**आ त्वा वातस्य नृमणो मनोयुजः । आ पूर्यमाणमवहन्नभि श्रवो३म्**

**मन्दिष्ट यदुशने काव्ये सचा । इन्द्रो वङ्कू वङ्कुतराधि तिष्ठतो३म्**

**उग्रो ययिं निरपः स्रोतसासृजत् । वि शुष्णस्य दृंहिता ऐरयत्पुरो३म्**

**आ स्मा रथं वृषपाणेषु तिष्ठसि । शार्यातस्य प्रभृता येषु मन्दसो३म्**

**इन्द्र यथा सुतसोमेषु चाकनः । अनर्वाणं श्लोकमा रोहसे दिवो३म्**

**अददा अर्भां महते वचस्यवे । कक्षीवते वृचयामिन्द्र सुन्वतो३म्**

**मेनाभवो वृषणश्वस्य सुक्रतो । विश्वेत्ता ते सवनेषु प्रवाच्यो३म्**

**इन्द्रो अश्रायि सुध्यो निरेके । पज्रेषु स्तोमो दुर्यो न यूपो३म्**

**अश्वयुर्गव्यू रथयुर्वसूयुः । इन्द्र इद्रायः क्षयति प्रयन्तो३ं**

**शो३ंसावो३म् इदं नमो वृषभाय स्वराजे । सत्यशुष्माय तवसेऽवाचो३म्**

**अस्मिन्निन्द्र वृजने सर्ववीराः । स्मत्सूरिभिस्तव शर्मन्त्स्यामो३म् ॥** (१।५१।१–१५) इति त्रिः परिदध्यात् ।

**उक्थं वाचि** इति शस्त्वा जपः ।

**ये३ यजामह अध्वर्यवो भरतेन्द्राय सोममामत्रेभिः सिञ्चता मद्यमन्धः ।**

**कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टी३ वौ३षट् ॥** (२।१४।१)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । मैत्रावरुणेन समो भक्षविधिः ।

**मैत्रावरुणशस्त्रम् ।**

शाक्त्यस्तोत्रं पञ्चदशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**

**प्र व इन्द्राय मादनं प्र व इन्द्राय मादनम् ।**

**हर्यश्वाय गायत सखायः सोमपाव्नो३ं**

**शंसेदुक्थं सुदानवे शंसेदुक्थं सुदानवे ।**

**उत द्युक्षं यथा नरश्चकृमा सत्यराधसो३ं**

**त्वं न इन्द्र वाजयुस्त्वं न इन्द्र वाजयुः ।**

**त्वं गव्युः शतक्रतो त्वं हिरण्ययुर्वसो३ं** (७।३१।१–३)

**शो३ंसावो३म् प्र कृतान्यृजीषिणः प्र कृतान्यृजीषिणः ।**

**कण्वा इन्द्रस्य गाथया मदे सोमस्य वोचतो३ं**

**यः सृबिन्दमनर्शनिं यः सृबिन्दमनर्शनिम् ।**

पिप्रुं दासमहीशुवं वधीदुग्रो रिणन्नपोइं
न्यर्बुदस्य विष्टपं न्यर्बुदस्य विष्टपम् ।
वर्ष्माणं बृहतस्तिर कृषे तदिन्द्र पौंस्योइं (८।३२।१–३)
शोइंसावोइम् प्रति श्रुताय वो धृषत्तूर्णाशं न गिरेरधि । हुवे सुशिप्रमूतयोइं
स गोरश्वस्य वि व्रजं मन्दानः सोम्येभ्यः । पुरं न शूर दर्षसोइं
यदि मे रारणः सुत उक्थे वा दधसे चनः । आरादुप स्वधा गहोइं
वयं घा ते अपि ष्मसि स्तोतार इन्द्र गिर्वणः । त्वं नो जिन्व सोमपोइम्
उत नः पितुमा भर संरराणो अविक्षितम् । मघवन् भूरि ते वसोइम्
उत नो गोमतस्कृधि हिरण्यवतो अश्विनः । इळाभिः सं रभेमहोइम्
बृबदुक्थं हवामहे सृप्रकरस्नमूतये । साधु कृण्वन्तमवसोइं
यः संस्थे चिच्छतक्रतुरादीं कृणोति वृत्रहा । जरितृभ्यः पुरूवसोइं
स नः शक्रश्चिदा शकद्दानवाँ अन्तराभरः । इन्द्रो विश्वाभिरूतिभोइं
यो रायोवनिर्महान्त्सुपारः सुन्वतः सखा । तमिन्द्रमभि गायतोइम्
आयन्तारं महि स्थिरं पृतनासु श्रवोजितम् । भूरेरीशानमोजसोइं
नकिरस्य शचीनां नियन्ता सूनृतानाम् । नकिर्वक्ता न दादितोइं
न नूनं ब्रह्मणामृणं प्राशूनामस्ति सुन्वताम् । न सोमो अप्रता पपोइम्
पन्य इदुप गायत पन्य उक्थानि शंसत । ब्रह्मा कृणोत पन्य ओइम्
पन्य आ दर्दिरच्छता सहस्रा वाज्यवृतः । इन्द्रो यो यज्वनो वृधोइं (८।३२।४–१८)
दिवश्चिदस्य वरिमा वि पप्रथे । इन्द्रं न मह्ना पृथिवी चन प्रतोइम्
भीमस्तुविष्माञ्चर्षणिभ्य आतपः । शिशीते वज्रं तेजसे न वंसगोइं
सो अर्णवो न नद्यः समुद्रियः । प्रति गृभ्णाति विश्रिता वरीमभोइम्
इन्द्रः सोमस्य पीतये वृषायते । सनात्स युध्म ओजसा पनस्यतोइं
त्वं तमिन्द्र पर्वतं न भोजसे । महो नृम्णस्य धर्मणामिरज्यसोइम्
प्र वीर्येण देवताति चेकिते । विश्वस्मा उग्रः कर्मणे पुरोहितोइं
स इद्वने नमस्युभिर्वचस्यते । चारु जनेषु प्रब्रुवाण इन्द्रियोइं
वृषा च्छन्दुर्भवति हर्यतो वृषा । क्षेमेण धेनां मघवा यदिन्वतोइं
स इन्महानि समिथानि मज्मना । कृणोति युध्म ओजसा जनेभ्योइम्
अधा चन श्रद्दधति त्विषीमते । इन्द्राय वज्रं निघनिघ्नते वधोइं
स हि श्रवस्युः सदनानि कृत्रिमा । क्ष्मया वृधान ओजसा विनाशयोइं

**ज्योतींषि कृण्वन्नवृकाणि यज्यवे । अव सुक्रतुः सर्तवा अपः सृजो३ं**

**दानाय मनः सोमपावन्नस्तु ते । अर्वाञ्चा हरी वन्दनश्रुदा कृधो३ं**

**यमिष्ठासः सारथयो य इन्द्र ते । न त्वा केता आ दभ्नुवन्ति भूर्णयो३म्**

**अप्रक्षितं वसु बिभर्षि हस्तयोः । अषाळ्हं सहस्तन्वि श्रुतो दधो३म्**

**आवृतासोऽवतासो न कर्तृभिः । तनूषु ते क्रतव इन्द्र भूरयो३ं** (१।५५।१–८)

**शो३ंसावो३ं स नो नव्येभिर्वृषकर्मन्नुक्थैः । पुरां दर्तः पायुभिः पाहि शग्मो३ं**

**दिवोदासेभिरिन्द्र स्तवानः । वावृधीथा अहोभिरिव द्यो३म् ॥** (१–१३०–१०) इति त्रिः परिदध्यात् ।

**उक्थं वाचि** इति शस्त्वा जपः ।

**ये३ यजामहेऽस्य मदे पुरु वर्पांसि विद्वानिन्द्रो वृत्राण्यप्रती जघान ।**

**तमु प्र होषि मधुमन्तमस्मै सोमं वीराय शिप्रिणे पिबध्या३इ वौ३षट् ॥** (६।४४।१४)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । प्रातःसवनेन समो भक्षविधिः ।

**ब्राह्मणाच्छंसीशस्त्रम् ।**

काण्वस्तोत्रं पञ्चदशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३ं**

**वयमु त्वा तदिदर्था वयमु त्वा तदिदर्थाः ।**

**इन्द्र त्वायन्तः सखायः कण्वा उक्थेभिर्जरन्तो३ं** इति त्रिः

**न घेमन्यदा पपन न घेमन्यदा पपन ।**

**वज्रिन्नपसो नविष्टौ तवेदु स्तोमं चिकेतो३म्**

**इच्छन्ति देवाः सुन्वन्तमिच्छन्ति देवाः सुन्वन्तम् ।**

**न स्वप्नाय स्पृहयन्ति यन्ति प्रमादमतन्द्रो३ं** (८।२।१६–१८)

**शो३ंसावो३ं वयमिन्द्र त्वायवो वयमिन्द्र त्वायवः ।**

**अभि प्र णोनुमो वृषन् विद्धी त्वस्य नो वसो३म्**

**मा नो निदे च वक्तवे मा नो निदे च वक्तवे ।**

**अर्यो रन्धीरराव्णे त्वे अपि क्रतुर्ममो३ं**

**त्वं वर्मासि सप्रथस्त्वं वर्मासि सप्रथः ।**

**पुरोयोधश्च वृत्रहन् त्वया प्रति ब्रुवे युजो३ं** (७।३१।४–६)

**शो३ंसावो३ं वार्त्रहत्याय शवसे पृतनाषाह्याय च । इन्द्र त्वा वर्तयामसो३म्**

**अर्वाचीनं सु ते मन उत चक्षुः शतक्रतो । इन्द्र कृण्वन्तु वाघतो३ं**

नामानि ते शतक्रतो विश्वाभिर्गीर्भिरीमहे । इन्द्राभिमातिषाह्योइम्

पुरुष्टुतस्य धामभिः शतेन महयामसि । इन्द्रस्य चर्षणीधतोइम्

इन्द्रं वृत्राय हन्तवे पुरुहूतमुप ब्रुवे । भरेषु वाजसातयोइं

वाजेषु सासहिर्भव त्वामीमहे शतक्रतो । इन्द्र वृत्राय हन्तवोइं

द्युम्नेषु पृतनाज्ये पृत्सुतूर्षु श्रवःसु च । इन्द्र साक्ष्वाभिमातिषोइं

शुष्मिन्तमं न ऊतये द्युम्निनं पाहि जागृविम् । इन्द्र सोमं शतक्रतोइम्

इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु । इन्द्र तानि त आ वृणोइम्

अगन्निन्द्र श्रवो बृहद्द्युम्नं दधिष्व दुष्टरम् । उत्ते शुष्मं तिरामसोइम् (३।३७।१–१०)

इन्द्रो अङ्ग महद्भयमभी षदप चुच्यवत् । स हि स्थिरो विचर्षणोइम्

इन्द्रश्च मृळयाति नो न नः पश्चादघं नशत् । भद्रं भवाति नः पुरोइम्

इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् । जेता शत्रून् विचर्षणोइं (२।४१।१०–१२)

न्यू षु वाचं प्र महे भरामहे । गिर इन्द्राय सदने विवस्वतोइं

नू चिद्धि रत्नं ससतामिवाविदत् । न दुष्टुतिर्द्रविणोदेषु शस्यतोइं

दुरो अश्वस्य दुर इन्द्र गोरसि । दुरो यवस्य वसुन इनस्पतोइं

शिक्षानरः प्रदिवो अकामकर्शनः । सखा सखिभ्यस्तमिदं गृणीमसोइं

शचीव इन्द्र पुरुकृद्द्युमत्तम । तवेदिदमभितश्चेकिते वसोइम्

अतः सङ्गृभ्याभिभूत आ भर । मा त्वायतो जरितुः काममूनयोइम्

एभिर्द्युभिः सुमना एभिरिन्दुभिः ।निरुन्धानो अमतिं गोभिरश्विनोइम्

इन्द्रेण दस्युं दरयन्त इन्दुभिः ।युतद्वेषसः समिषा रभेमहोइं

समिन्द्र राया समिषा रभेमहि । सं वाजेभिः पुरुश्चन्द्रैरभिद्युभोइं

सं देव्या प्रमत्या वीरशुष्मया । गो अग्रयाश्वावत्या रभेमहोइं

ते त्वा मदा अमदन् तानि वृष्ण्या । ते सोमासो वृत्रहत्येषु सत्पतोइं

यत्कारवे दश वृत्राण्यप्रति । बर्हिष्मते नि सहस्राणि बर्हयोइं

युधा युधमुप घेदेषि धृष्णुया । पुरा पुरं समिदं हंस्योजसोइं

नम्या यदिन्द्र सख्या परावति । निबर्हयो नमुचिं नाम मायिनोइं

त्वं करञ्जमुत पर्णयं वधीः । तेजिष्ठयातिथिग्वस्य वर्तनोइं

त्वं शता वङ्गृदस्याभिनत्पुरः । अनानुदः परिषूता ऋजिश्वनोइं

त्वमेताञ्जनराज्ञो द्विर्दश । अबन्धुना सुश्रवसोपजग्मुषोइं

षष्टिं सहस्रा नवतिं नव श्रुतः । नि चक्रेण रथ्या दुष्पदावृणोइं

**त्वमाविथ सुश्रवसं तवोतिभिः । तव त्रामभिरिन्द्र तूर्वयाणोꣳ**

**त्वमस्मै कुत्समतिथिग्वमायुम् । महे राज्ञे यूने अरन्धनायोꣳ**

**शोꣳसावोꣳ य उदृचीन्द्र देवगोपाः । सखायस्ते शिवतमा असामोꣳ**

**त्वां स्तोषाम त्वया सुवीराः । द्राघीय आयुः प्रतरं दधानो३म् ॥** (१।५३।१–११) इति त्रिः परिदध्यात् ।

**उक्थं वाचि** इति शस्त्वा जपः ।

**ये३ यजामहेऽप्सु धूतस्य हरिवः पिबेह नृभिः सुतस्य जठरं पृणस्व ।**

**मिमिक्षुर्यमद्रय इन्द्र तुभ्यं तेभिर्वर्धस्व मदमुक्थवाहा३ वौ३षट् ॥** (१०।१०४।२)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । प्रातःसवनेन समो भक्षविधिः ।

**अच्छावाकशस्त्रम् ।**

श्रौतकक्षस्तोत्रं पञ्चदशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । शोꣳसावो३म्**

**इन्द्राय मद्वने सुतमिन्द्राय मद्वने सुतम् ।**

**परि ष्टोभन्तु नो गिरोऽर्कमर्चन्तु कारवोꣳ**

**यस्मिन् विश्वा अधि श्रियो यस्मिन् विश्वा अधि श्रियः ।**

**रणन्ति सप्त संसद इन्द्रं सुते हवामहोꣳ**

**त्रिकद्रुकेषु चेतनं त्रिकद्रुकेषु चेतनम् ।**

**देवासो यज्ञमत्नत तमिद्वर्धन्तु नो गिरोꣳ** (८।९२।१९–२१)

**शोꣳसावो३म् इन्द्रमिद्गाथिनो बृहदिन्द्रमिद्गाथिनो बृहत् ।**

**इन्द्रमर्केभिरर्किण इन्द्रं वाणीरनूषतो३म्**

**इन्द्र इद्धर्योः सचेन्द्र इद्धर्योः सचा ।**

**सम्मिश्ल आ वचोयुजेन्द्रो वज्री हिरण्ययो३म्**

**इन्द्रो दीर्घाय चक्षस इन्द्रो दीर्घाय चक्षसे ।**

**आ सूर्यं रोहयद्दिवि वि गोभिरद्रिमैरयोꣳ** (१।७।१–३)

**शोꣳसावो३म् एन्द्र सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठमूतये भरोꣳ**

**नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै । त्वोतासो न्यर्वतो३म्**

**इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि । जयेम सं युधि स्पृधोꣳ**

**वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम् । सासह्याम पृतन्यतो३म्**

**महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे । द्यौर्न प्रथिना शवोꣳ**

समोहे वा य आशत नरस्तोकस्य सनितौ । विप्रासो वा धियायवो३ं
यः कुक्षिः सोमपातमः समुद्र इव पिन्वते । उर्वीरापो न काकुदो३म्
एवा ह्यस्य सूनृता विरप्शी गोमती मही । पक्वा शाखा न दाशषो३म्
एवा हि ते विभूतय ऊतय इन्द्र मावते । सद्यश्चित्सन्ति दाशुषो३म्
एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या । इन्द्राय सोमपीतयो३म् [१।८।१–१०]
एतोन्विन्द्रं स्तवामेशानं वस्वः स्वराजम् । न राधसा मर्धिषन्नो३म्
प्र स्तोषदुप गासिषच्छ्रवत्साम गीयमानम् । अभि राधसा जुगुरो३म्
आ नो भर दक्षिणेनाभि सव्येन प्र मृश । इन्द्र मा नो वसोर्निर्भो३म्
मा नो अस्मिन् मघवन् पृत्स्वंहसि । नहि ते अन्तः शवसः परीणशो३म्
अक्रन्दयो नद्यो रोरुवद्वना । कथा न क्षोणी र्भियसा समारतो३म्
अर्चा शक्राय शाकिने शचीवते । शृण्वन्तमिन्द्रं महयन्नभि ष्टुहो३ं
यो धृष्णुना शवसा रोदसी उभे । वृषा वृषत्वा वृषभो न्यृञ्जतो३म्
अर्चा दिवे बृहते शूष्यं वचः । स्वक्षत्रं यस्य धृषतो धृषन्मनो३म्
बृहच्च्छ्रवा असुरो बर्हणा कृतः । पुरो हरिभ्यां वृषभो रथो हि षो३ं
त्वं दिवो बृहतः सानु कोपयः । अव त्मना धृषता शम्बरं भिनो३ं
यन्मायिनो व्रन्दिनो मन्दिना धृषत् । शितां गभस्तिमशनिं पृतन्यसो३ं
नि यद्वृणक्षि श्वसनस्य मूर्धनि । शुष्णस्य चिद्व्रन्दिनो रोरुवद्वनो३म्
प्राचीनेन मनसा बर्हणावता । यदद्या चित्कृणवः कस्त्वा परो३ं
त्वमाविथ नर्यं तुर्वशं यदुम् । त्वं तुर्वीतिं वय्यं शतक्रतो३ं
त्वं रथमेतशं कृत्व्ये धने । त्वं पुरो नवतिं दम्भयो नवो३ं
स घा राजा सत्पतिः शूशुवज्जनः । रातहव्यः प्रति यः शासमिन्वतो३म्
उक्था वा यो अभिगृणाति राधसा । दानुरस्मा उपरा पिन्वते दिवो३म्
असमं क्षत्रमसमा मनीषा । प्र सोमपा अपसा सन्तु नेमो३ं
ये त इन्द्र ददुषो वर्धयन्ति । महि क्षत्रं स्थविरं वृष्ण्यं चो३ं
तुभ्येदेते बहुला अद्रिदुग्धाः । चमूषदश्चमसा इन्द्रपानो३ं
व्यश्नुहि तर्पया काममेषाम् । अथा मनो वसुदेयाय कृष्वो३म्
अपामतिष्ठद्धरुणह्वरं तमः । अन्तर्वृत्रस्य जठरेषु पर्वतो३म्
अभीमिन्द्रो नद्यो वव्रिणा हिता । विश्वा अनुष्ठाः प्रवणेषु जिघ्नतो३ं
शो३ंसावो३ं स शेवृधमधि धा द्युम्नमस्मे । महि क्षत्रं जनाषाळिन्द्र तव्यो३ं

**रक्षा च नो मघोनः पाहि सूरीन् । राये च नः स्वपत्या इषे धो३म् ॥** (१।५४।१–११) इति त्रिः परिदध्यात् ।

**उक्थं वाचि** इति शस्त्वा जपः ।

**ये३ यजामह इन्द्र पिब तुभ्यं सुतो मदायाव स्य हरी वि मुचा सखाया ।**

**उत प्र गाय गण आ निषद्याथा यज्ञाय गृणते वयो धा३ वौ३षट् ॥** (६।४०।१)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । प्रातःसवनेन समो भक्षविधिः । इति प्रथमः पर्यायः ।

**अथ मध्यमपर्यायः ।**

**होतृशस्त्रम् ।**

दैवोदासस्तोत्रं पञ्चदशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**

**अयं त इन्द्र सोमो निपूतो अधि बर्हिषि ।**

**निपूतो अधि बर्हिष्येहीमस्य द्रवा पिबो३ं** इति त्रिः

**शाचिगो शाचिपूजनायं रणाय ते सुतः ।**

**अयं रणाय ते सुत आखण्डल प्र हूयसो३ं**

**यस्ते शृङ्गवृषो नपात्प्रणपात् कुण्डपाय्यः ।**

**प्रणपात् कुण्डपाय्यो न्यस्मिन् दध्र आ मनो३ं** (८।१७।११–१३)

**शो३ंसावो३म् अयं ते मानुषे जने सोमः पूरुषु सूयते ।**

**सोमः पूरुषु सूयते तस्येहि प्र द्रवा पिबो३म्**

**अयं ते शर्यणावति सुषोमायामधि प्रियः ।**

**सुषोमायामधि प्रिय आर्जीकीये मदिन्तमो३ं**

**तमद्य राधसे महे चारुं मदाय घृष्वये ।**

**चारुं मदाय घृष्वय एहीमिन्द्र द्रवा पिबो३ं** (८।६४।१०–१२)

**शो३ंसावो३म् उद् घेदभि श्रुतामघं वृषभं नर्यापसम् । अस्तारमेषि सूर्यो३ं**

**नव यो नवतिं पुरो बिभेद बाह्वोजसा । अहिं च वृत्रहावधो३ं**

**स न इन्द्रः शिवः सखाश्वावद्गोमद्यवमत् । उरुधारेव दोहतो३ं**

**यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य । सर्वं तदिन्द्र ते वशो३ं**

**यद्वा प्रवृद्ध सत्पते न मरा इति मन्यसे । उतो तत्सत्यमित् तवो३ं**

**ये सोमासः परावति ये अर्वावति सुन्विरे । सर्वांस्ताँ इन्द्र गच्छसो३ं**

**तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे । स वृषा वृषभो भुवो३म्**

इन्द्रः स दामने कृत ओजिष्ठः स मदे हितः । द्युम्नी श्लोकी स सोम्यो३ं
गिरा वज्रो न सम्भृतः सबलो अनपच्युतः । ववक्ष ऋष्वो अस्तृतो३ं
दुर्गे चिन्नः सुगं कृधि गृणान इन्द्र गिर्वणः । त्वं च मघवन् वशो३ं
यस्य ते नू चिदादिशं न मिनन्ति स्वराज्यम् । न देवो नाध्रिगुर्जनो३म्
अधा ते अप्रतिष्कुतं देवी शुष्मं सपर्यतः । उभे सुशिप्र रोदसो३ं
त्वमेतदधारयः कृष्णासु रोहिणीषु च । परुष्णीषु रुशत्पयो३ं
वि यदहेरध त्विषो विश्वे देवासो अक्रमुः । विदन् मृगस्य ताँ अमो३म्
आदु मे निवरो भुवद् वृत्रहादिष्ट पौंस्यम् । अजातशत्रुरस्तृतो३ं
श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम् । आ शुषे राधसे महो३म्
अया धिया च गव्यया पुरुणामन् पुरुष्टुत । यत् सोमेसोम आभवो३म्
बोधिन्मना इदस्तु नो वृत्रहा भूर्यासुतिः । शृणोतु शक्र आशिषो३ं
कया त्वं न ऊत्याभि प्र मन्दसे वृषन् । कया स्तोतृभ्य आ भरो३ं
कस्य वृषा सुते सचा नियुत्वान् वृषभो रणत् । वृत्रहा सोमपीतयो३म्
अभी षु णस्त्वं रयिं मन्दसानः सहस्रिणम् । प्रयन्ता बोधि दाशुषो३म्
पत्नीवन्तः सुता इम उशन्तो यन्ति वीतये । अपां जग्मिर्निचुम्पुणो३म्
इष्टा होत्रा असृक्षतेन्द्रं वृधासो अध्वरे । अच्छावभृथमोज्सो३म्
इह त्या सधमाद्या हरी हिरण्यकेश्या । वोह्ळामभि प्रयो हितो३ं
तुभ्यं सोमाः सुता इमे स्तीर्णं बर्हिर्विभावसो । स्तोतृभ्य इन्द्रमा वहो३म्
आ ते दक्षं वि रोचना दधद्रत्ना वि दाशुषे । स्तोतृभ्य इन्द्रमर्चतो३म्
आ ते दधामीन्द्रियमुक्था विश्वा शतक्रतो । स्तोतृभ्य इन्द्र मृळयो३म्
भद्रंभद्रं न आ भरेषमूर्जं शतक्रतो । यदिन्द्र मृळयासि नो३ं
स नो विश्वान्या भर सुवितानि शतक्रतो । यदिन्द्र मृळयासि नो३ं
त्वामिद्वृत्रहन्तम सुतावन्तो हवामहे । यदिन्द्र मृळयासि नो३म्
उप नो हरिभिः सुतं याहि मदानां पते । उप नो हरिभिः सुतो३ं
द्विता यो वृत्रहन्तमो विद इन्द्रः शतक्रतुः । उप नो हरिभिः सुतो३ं
त्वं हि वृत्रहन्नेषां पाता सोमानामसि । उप नो हरिभिः सुतो३म् [८।९३।१–३३]
अहं भुवं वसुनः पूर्व्यस्पतिः । अहं धनानि सं जयामि शश्वतो३म्
मां हवन्ते पितरं न जन्तवः । अहं दाशुषे वि भजामि भोजनो३म्
अहमिन्द्रो रोधो वक्षो अथर्वणः । त्रिताय गा अजनयमहेरधो३म्

**अहं दस्युभ्यः परि नृम्णमा ददे । गोत्रा शिक्षन् दधीचे मातरिश्वनो३म्**

**मह्यं त्वष्टा वज्रमतक्षदायसम् । मयि देवासोऽवृजन्नपि क्रतो३म्**

**ममानीकं सूर्यस्येव दुष्टरम् । मामार्यन्ति कृतेन कर्त्वेन चो३म्**

**अहमेतं गव्ययमश्व्यं पशुम् । पुरीषिणं सायकेना हिरण्ययो३म्**

**पुरू सहस्रा नि शिशामि दाशुषे । यन्मा सोमास उक्थिनो अमन्दिषो३म्**

**अहमिन्द्रो न परा जिग्य इद्धनम् । न मृत्यवेऽव तस्थे कदा चनो३ं**

**सोममिन्मा सुन्वन्तो याचता वसु । न मे पूरवः सख्ये रिषाथनो३म्**

**अहमेताञ्छाश्वसतो द्वा द्वा । इन्द्रं ये वज्रं युधयेऽकृण्वतो३म्**

**आह्वयमानाँ अव हन्मनाहनम् । दृळ्हा वदन्ननमस्युर्नमस्विनो३म्**

**अभीदमेकमेको अस्मि निष्षाट् । अभी द्वा किमु त्रयः करन्तो३ं**

**खले न पर्षान् प्रति हन्मि भूरि । किं मा निन्दन्ति शत्रवोऽनिन्द्रो३म्**

**अहं गुङ्गुभ्यो अतिथिग्वमिष्करम् । इषं न वृत्रतुरं विक्षु धारयो३ं**

**यत् पर्णयघ्न उत वा करञ्जहे । प्राहं महे वृत्रहत्ये अशुश्रवो३म्**

**प्र मे नमी साप्य इषे भुजे भूत् । गवामेषे सख्या कृणुत द्विते३ं**

**दिद्युं यदस्य समिथेषु मंहयम् । आदिदेनं शंस्यमुक्थ्यं करो३म्**

**प्र नेमस्मिन् ददृशे सोमो अन्तः । गोपा नेममाविरस्था कृणोतो३ं**

**स तिग्मशृङ्गं वृषभं युयुत्सन् । द्रुहस्तस्थौ बहुले बद्धो अन्तो३ं**

**शो३ंसावो३म् आदित्यानां वसूनां रुद्रियाणाम् । देवो देवानां न मिनामि धामो३ं**

**ते मा भद्राय शवसे ततक्षुः । अपराजितमस्तृतमषाहळो३म् ॥** (१०।४८।१–११) इति त्रिः परिदध्यात् ।

**उक्थं वाचि** इति शस्त्वा जपः ।

**ये३ यजामहेऽपाय्यस्यान्धसो मदाय मनीषिणः सुवानस्य प्रयसः ।**

**यस्मिन्निन्द्रः प्रदिवि वावृधान ओको दधे ब्रह्मण्यन्तश्च नरा३ वौ३षट् ॥** (२।११।१)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । पूर्ववद् भक्षविधिः ।

**मैत्रावरुणशस्त्रम् ।**

आकूपारस्तोत्रं पञ्चदशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**

**आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय ।**

**चित्रं ग्राभं सं गृभाय महाहस्ती दक्षिणेनो३ं** इति त्रिः

विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् ।

तुविदेष्णं तुवीमघं तुविमात्रमवोभोꣳ

नहि त्वा शूर देवा न मर्तासो दित्सन्तम् ।

न मर्तासो दित्सन्तम् भीमं न गां वारयन्तोꣳ [८।८१।१–३]

शोꣳसावो३म् आ प्र द्रव परावतोऽर्वावतश्च वृत्रहन् ।

अर्वावतश्च वृत्रहन् मध्वः प्रति प्रभर्मणोꣳ

तीव्राः सोमास आ गहि सुतासो मादयिष्णवः ।

सुतासो मादयिष्णवः पिबा दधृग्यथोचिषो३म्

इषा मन्दस्वादु तेऽरं वराय मन्यवे ।

अरं वराय मन्यवे भुवत्त इन्द्र शं हृदोꣳ (८।८२।१–३)

शोꣳसावो३म् नह्यन्यं बळाकरं मर्डितारं शतक्रतो । त्वं न इन्द्र मृळयोꣳ

यो नः शश्वत् पुराविथामृध्रो वाजसातये । स त्वं न इन्द्र मृळयोꣳ

किमङ्ग रध्रचोदनः सुन्वानस्यावितेदसि । कुवित् स्विन्द्र णः शको३म्

इन्द्र प्र णो रथमव पश्चाच्चित् सन्तमद्रिवः । पुरस्तादेनं मे कृधोꣳ

हन्तो नु किमाससे प्रथमं नो रथं कृधि । उपमं वाजयु श्रवो३म्

अवा नो वाजयुं रथं सुकरं ते किमित् परि । अस्मान्त्सु जिग्युषस्कृधो३म्

इन्द्र दृह्यस्व पूरसि भद्रा त एति निष्कृतम् । इयं धीर्ऋत्वियावतो३म्

मा सीमवद्य आ भागुर्वी काष्ठा हितं धनम् । अपावृक्ता अरत्नयो३म् (८।८०।१–८)

ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते । भेजानासः सुवीर्योꣳ

त्वमिन्द्र बलादधि सहसो जात ओजसः । त्वं वृषन्वृषेदसोꣳ

त्वमिन्द्रासि वृत्रहा व्यन्तरिक्षमतिरः । उद् द्यामस्तभ्ना ओजसोꣳ

त्वमिन्द्र सजोषसमर्कं बिभर्षि बाह्वोः । वज्रं शिशान ओजसोꣳ

त्वमिन्द्राभिभूरसि विश्वा जातान्योजसा । स विश्वा भुव आभवो३म् [१०।१५३।१–५]

अहं दां गृणते पूर्व्यं वसु । अहं ब्रह्म कृणवं मह्यं वर्धनो३म्

अहं भुवं यजमानस्य चोदिता । अयज्वनः साक्षि विश्वस्मिन् भरो३म्

मां धुरिन्द्रं नाम देवता । दिवश्च ग्मश्चापां च जन्तवो३म्

अहं हरी वृषणा विव्रता रघू । अहं वज्रं शवसे धृष्ण्वा ददो३म्

अहमत्कं कवये शिश्नथं हथैः । अहं कुत्समावमाभिरूतिभो३म्

अहं शुष्णस्य श्नथिता वधर्यमम् । न यो रर आर्यं नाम दस्यवो३म्

**अहं पितेव वेतसूँरभिष्टये । तुग्रं कुत्साय स्मदिभं च रन्धयो३म्**
**अहं भुवं यजमानस्य राजनि । प्र यद्भरे तुजये न प्रियाधृषो३म्**
**अहं रन्धयं मृगयं श्रुतर्वणे । यन्माजिहीत वयुना चनानुषो३म्**
**अहं वेशं नम्रमायवेऽकरम् । अहं सव्याय पड्गृभिमरन्धयो३म्**
**अहं स यो नववास्त्वं बृहद्रथम् । सं वृत्रेव दासं वृत्रहारुजो३ं**
**यद्वर्धयन्तं प्रथयन्तमानुषक् । दूरे पारे रजसो रोचनाकरो३म्**
**अहं सूर्यस्य परि याम्याशुभिः । प्रैतशेभिर्वहमान ओजसो३ं**
**यन्मा सावो मनुष आह निर्णिजे । ऋधक् कृषे दासं कृत्व्यं हथो३म्**
**अहं सप्तहा नहुषो नहुष्टरः । प्राश्रावयं शवसा तुर्वशं यदो३म्**
**अहं न्यन्यं सहसा सहस्करम् । नव व्राधतो नवतिं च वक्षयो३म्**
**अहं सप्त स्रवतो धारयं वृषा । द्रविल्वः पृथिव्यां सीरा अधो३म्**
**अहमर्णांसि वि तिरामि सुक्रतुः । युधा विदं मनवे गातुमिष्टयो३म्**
**अहं तदासु धारयं यदासु न । देवश्चन त्वष्टाधारयद्रुशो३ं**
**स्पार्हं गवामूधःसु वक्षणास्वा । मधोर्मधु श्वात्र्यं सोममाशिरो३ं**
**शो३ंसावो३म् एवा देवाँ इन्द्रो विव्ये नॄन् । प्र च्यौत्नेन मघवा सत्यराधो३ं**
**विश्वेत्ता ते हरिवः शचीवः । अभि तुरासः स्वयशो गृणन्तो३म्** ॥ (१०।४९।१–११) इति त्रिः परिदध्यात् ।
**उक्थं वाचि** इति शस्त्वा जपः ।
**ये३ यजामहे पाता सुतमिन्द्रो अस्तु सोमं हन्ता वृत्रं वज्रेण मन्दसानः ।**
**गन्ता यज्ञं परावतश्चिदच्छा वसुर्धीनामविता कारुधाया३ वौ३षट्** ॥ (६।४४।१५)
**सोमस्याग्ने वीही३ वौ३षट्** ॥ द्विर्वागोजः । पूर्ववद् भक्षविधिः ।

**ब्राह्मणाच्छंसिशस्त्रम् ।**

आर्षभस्तोत्रं पञ्चदशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–
**हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**
**अभि त्वा वृषभा सुते सुतं सृजामि पीतये ।**
**सुतं सृजामि पीतये तृम्पा व्यश्नुही मदो३म्** इति त्रिः
**मा त्वा मूरा अविष्यवो मोपहस्वान आ दभन् ।**
**मोपहस्वान आ दभन् माकीं ब्रह्मद्विषो वनो३म्**
**इह त्वा गोपरीणसा महे मन्दन्तु राधसे ।**

महे मन्दन्तु राधसे सरो गौरो यथा पिबोइं (८४५।२२–२४)
शोइंसावोइम् अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे ।
इन्द्रमर्च यथा विदे सूनुं सत्यस्य सत्पतोइम्
आ हरयः ससृज्रिरेऽरुषीरधि बर्हिषि ।
अरुषीरधि बर्हिषि यत्राभि संनवामहोइम्
इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु ।
दुदुह्रे वज्रिणे मधु यत्सीमुपह्वरे विदोइं (८।६९।४–६)
शोइंसावोइम् आ तू न इन्द्र मद्र्यग्घुवानः सोमपीतये । हरिभ्यां याह्यद्रिवोइं
सत्तो होता न ऋत्वियस्तिस्तिरे बर्हिरानुषक् । अयुज्रन् प्रातरद्रयोइम्
इमा ब्रह्म ब्रह्मवाहः क्रियन्त आ बर्हिः सीद । वीहि शूर पुरोळशोइं
रारन्धि सवनेषु ण एषु स्तोमेषु वृत्रहन् । उक्थेष्विन्द्र गिर्वणोइम्
मतयः सोमपामुरुं रिहन्ति शवसस्पतिम् । इन्द्रं वत्सं न मातरोइं
स मन्दस्वा ह्यन्धसो राधसे तन्वा महे । न स्तोतारं निदे करोइं
वयमिन्द्र त्वायवो हविष्मन्तो जरामहे । उत त्वमस्मयुर्वसोइम्
मारे अस्मद्वि मुमुचो हरिप्रियार्वाङ् याहि । इन्द्र स्वधावो मत्स्वेहोइम्
अर्वाञ्चं त्वा सुखे रथे वहतामिन्द्र केशिना । घृतस्नू बर्हिरासदोइम् (३।४१।१–९)
उप नः सुतमा गहि सोममिन्द्र गवाशिरम् । हरिभ्यां यस्ते अस्मयोइं
तमिन्द्र मदमा गहि बर्हिष्ठां ग्रावभिः सुतम् । कुविन्वस्य तृप्णवोइम्
इन्द्रमित्था गिरो ममाच्छागुरिषिता इतः । आवृते सोमपीतयोइम्
इन्द्रं सोमस्य पीतये स्तोमैरिह हवामहे । उक्थेभिः कुविदागमोइम्
इन्द्र सोमाः सुता इमे तान् दधिष्व शतक्रतो । जठरे वाजिनीवसोइं
विद्मा हि त्वा धनंजयं वाजेषु दधृषं कवे । अधा ते सुम्नमीमहोइम्
इममिन्द्र गवाशिरं यवाशिरं च नः पिब । आगत्या वृषभिः सुतोइं
तुभ्येदिन्द्र स्व ओक्ये सोमं चोदामि पीतये । एष रारन्तु ते हृदोइं
त्वां सुतस्य पीतये प्रत्नमिन्द्र हवामहे । कुशिकासो अवस्यवोइम् (३।४२।१–९)
अश्वावति प्रथमो गोषु गच्छति । सुप्रावीरिन्द्र मर्त्यस्तवोतिभोइं
तमित् पृणक्षि वसुना भवीयसा । सिन्धुमापो यथाभितो विचेतसोइम्
आपो न देवीरुप यन्ति होत्रिम् । अवः पश्यन्ति विततं यथा रजोइम्
प्राचैर्देवासः प्र णयन्ति देवयुम् । ब्रह्मप्रियं जोषयन्ते वरा इवोइम्

**अधि द्वयोरदधा उक्थ्यं वचः । यतस्रुचा मिथुना या सपर्यतो३म्**

**असंयत्तो व्रते ते क्षेति पुष्यति । भद्रा शक्तिर्यजमानाय सुन्वतो३म्**

**आदङ्गिराः प्रथमं दधिरे वयः । इद्धाग्नयः शम्या ये सुकृत्ययो३ं**

**सर्वं पणेः समविन्दन्त भोजनम् । अश्वावन्तं गोमन्तमा पशुं नरो३ं**

**यज्ञैरथर्वा प्रथमः पथस्तते । ततः सूर्यो व्रतपा वेन आजनो३म्**

**आ गा आजदुशना काव्यः सचा । यमस्य जातममृतं यजामहो३ं**

**शो३ंसावो३म् बर्हिर्वा यत्स्वपत्याय वृज्यते । अर्को वा श्लोकमाघोषते दिवो३ं**

**ग्रावा यत्र वदति कारुरुक्थ्यः । तस्येदिन्द्रो अभिपित्वेषु रण्यतो३म्** (१।८३।१–६) इति त्रिः परिदध्यात् ।

**उक्थं वाचि** इति शस्त्वा जपः ।

**ये३ यजामहे प्रोग्रां पीतिं वृष्ण इयर्मि सत्यां प्रयै सुतस्य हर्यश्व तुभ्यम् ।**

**इन्द्र धेनाभिरिह मादयस्व धीभिर्विश्वाभिः शच्या गृणाना३ वौ३षट् ॥** (१०।१०४।३)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । पूर्ववद् भक्षविधिः ।

**अच्छावाकशस्त्रम् ।**

गारस्तोत्रं पञ्चदशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**

**इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम् ।**

**पिबा सुपूर्णमुदरमनाभयिन् ररिमा तो३ं** इति त्रिः

**नृभिर्धूतः सुतो अश्नैरव्यो वारैः परिपूतः ।**

**अव्यो वारैः परिपूतोऽश्वो न निक्तो नदीषो३ं**

**तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणन्तः ।**

**स्वादुमकर्म श्रीणन्त इन्द्र त्वास्मिन्त्सधमादे ॥** (८।२।१–३)

**शो३सावो३म् इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः ।**

**विश्वेभिः सोमपर्वभिर्महाँ अभिष्टिरोजसो३म्**

**एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने ।**

**मन्दिमिन्द्राय मन्दिने चक्रिं विश्वानि चक्रयो३म्**

**मत्स्वा सुशिप्र मन्दिभिः स्तोमेभिर्विश्वचर्षणे ।**

**स्तोमेभिर्विश्वचर्षणे सचैषु सवनेष्वो३ं** (१।९।१–३)

**शो३ंसावो३म् प्र सम्राजं चर्षणीनामिन्द्रं स्तोता नव्यं गीर्भिः । नरं नृषाहं मंहिष्ठो३ं**

यस्मिन्नुक्थानि रण्यन्ति विश्वानि च श्रवस्या । अपामवो न समुद्रो३ं
तं सुष्टुत्या विवासे ज्येष्ठराजं भरे कृत्नुम् । महो वाजिनं सनिभ्यो३ं
यस्यानूना गभीरा मदा उरवस्तरुत्राः । हर्षुमन्तः शूरसातो३ं
तमिद्धनेषु हितेष्वधिवाकाय हवन्ते । येषामिन्द्रस्ते जयन्तो३ं
तमिच्च्यौत्नैरार्यन्ति तं कृतेभिश्चर्षणयः । एष इन्द्रो वरिवस्को३म्
इन्द्रो ब्रह्मेन्द्र ऋषिरिन्द्रः पुरू पुरुहूतः । महान् महीभिः शचीभो३ं
स स्तोम्यः स हव्यः सत्यः सत्वा तुविकूर्मिः । एकश्चित्सन्नभिभूतो३ं
तमर्केभिस्तं सामभिस्तं गायत्रैश्चर्षणयः । इन्द्रं वर्धन्ति क्षितयो३म्
प्रणेतारं वस्यो अच्छा कर्तारं ज्योतिः समत्सु । सासह्वांसं युधामित्रो३ं
स नः पप्रिः पारयाति स्वस्ति नावा पुरुहूतः । इन्द्रो विश्वा अति द्विषो३ं
स त्वं न इन्द्र वाजेभिर्दशस्या च गातुया च । अच्छा च नः सुम्नं नेषो३म् [८।१६।१–९]
उप क्रमस्वा भर धृषता धृष्णो जनानाम् । अदाशूष्टरस्य वेदो३म्
इन्द्र य उ नु ते अस्ति वाजो विप्रेभिः सनित्वः । अस्माभिः सु तं सनुहो३ं
सद्योजुवस्ते वाजा अस्मभ्यं विश्वश्चन्द्राः । वशैश्च मक्षू जरन्तो३ं (८।८१।७–९)
तदस्मै नव्यमङ्गिरस्वदर्चत । शुष्मा यदस्य प्रत्नथोदीरतो३ं
विश्वा यद्गोत्रा सहसा परीवृता । मदे सोमस्य दृंहितान्यैरयो३ं
स भूतु यो ह प्रथमाय धायसे । ओजो मिमानो महिमानमातिरो३ं
शूरो यो युत्सु तन्वं परिव्यत । शीर्षणि द्यां महिना प्रत्यमुञ्चतो३म्
अधाकृणोः प्रथमं वीर्यं महत् । यदस्याग्रे ब्रह्मणा शुष्ममैरयो३ं
रथेष्ठेन हर्यश्वेन विच्युताः । प्र जीरयः सिस्रते सध्र्यक् पृथो३म्
अधा यो विश्वा भुवनाभि मज्मना । ईशानकृत् प्रवया अभ्यवर्धतो३म्
आद्रोदसी ज्योतिषा वह्निरातनोत् । सीव्यन्तमांसि दुधिता समव्ययो३ं
स प्राचीनान् पर्वतान् दृंहदोजसा । अधराचीनमकृणोदपामपो३म्
अधारयत् पृथिवीं विश्वधायसम् । अस्तभ्नान् मायया द्यामवस्रसो३ं
सास्मा अरं बाहुभ्यां यं पिताकृणोत् । विश्वस्मादा जनुषो वेदसस्परो३ं
येना पृथिव्यां नि क्रिविं शयध्यै । वज्रेण हत्व्यवृणक् तुविष्वणो३म्
अमाजूरिव पित्रोः सचा सती । समानादा सदसस्त्वामिये भगो३ं
कृधि प्रकेतमुप मास्या भर । दद्धि भागं तन्वो येन मामहो३म्
भोजं त्वामिन्द्र वयं हुवेम । ददिष्ट्वमिन्द्रापांसि वाजो३म्

**अविड्ढीन्द्र चित्रया न ऊती । कृधि वृषन्निन्द्र वस्यसो नो३ं**

**शो३ंसावो३ं नूनं सा ते प्रति वरं जरित्रे । दुहीयदिन्द्र दक्षिणा मघोनो३ं**

**शिक्षा स्तोतृभ्यो माति धग्भगो नः । बृहद्वदेम विदथे सुवीरो३म् ॥** (२।१७।–९) इति त्रिः परिदध्यात् ।

**उक्थं वाचि** इति शस्त्वा जपः ।

**ये३ यजामहेऽस्य पिब यस्य जज्ञान इन्द्र मदाय क्रत्वे अपिबो विरप्शिन् ।**

**तमु ते गावो नर आपो अद्रिरिन्दुं समह्यन् पीतये समस्मा३इ वौ३षट् ॥** (६।४०।२)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । पूर्ववद् भक्षविधिः ।

**उत्तमपर्यायः ।**

**होतृशस्त्रम् ।**

घृतश्चुन्निधनस्तोत्रं पञ्चदशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते  प्रतिहारे

**हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**

**इदं ह्यन्वोजसा सुतं राधानां पते ।**

**पिबा त्वस्य गिर्वणः पिबा त्वस्य गिर्वणो३ं** इति त्रिः

**यस्ते अनु स्वधामसत् सुते नि यच्छ तन्वम् ।**

**स त्वा ममत्तु सोम्यं स त्वा ममत्तु सोम्यो३म्**

**प्र ते अश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा शिरः ।**

**प्र बाहू शूर राधसे प्र बाहू शूर राधसो३ं**

**शो३ंसावो३म् महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव ।**

**स्तोमैर्वत्सस्य वावृधे स्तोमैर्वत्सस्य वावृधो३म्**

**प्रजामृतस्य पिप्रतः प्र यद्भरन्त वह्नयः ।**

**विप्रा ऋतस्य वाहसा विप्रा ऋतस्य वाहसो३ं**

**कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् ।**

**जामि ब्रुवत आयुधं जामि ब्रुवत आयुधो३ं**

**शो३ंसावो३ं समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः । समुद्रायेव सिन्धवो३म्**

**ओजस्तदस्य तित्विष उभे यत् समवर्तयत् । इन्द्रश्चर्मेव रोदसो३ं**

**वि चिद्वृत्रस्य दोधतो वज्रेण शतपर्वणा । शिरो बिभेद वृष्णिनो३म्**

**इमा अभि प्र णोनुमो विपामग्रेषु धीतयः । अग्नेः शोचिर्न दिद्युतो३ं**

**गुहा सतीरुप त्मना प्र यच्छोचन्त धीतयः । कण्वा ऋतस्य धारयो३म्**

प्र तमिन्द्र नशीमहि रयिं गोमन्तमश्विनम् । प्र ब्रह्म पूर्वचित्तयो३म्
अहमिद्धि पितुष्परि मेधामृतस्य जग्रभ । अहं सूर्य इवाजनो३म्
अहं प्रत्नेन मन्मना गिरः शुम्भामि कण्ववत् । येनेन्द्रः शुष्ममिद्दधो३ं
ये त्वामिन्द्र न तुष्टुवुर्ऋषयो ये च तुष्टुवुः । ममेद्वर्धस्व सुष्टुतो३ं
यदस्य मन्युरध्वनीद् वि वृत्रं पर्वशो रुजन् । अपः समुद्रमैरयो३ं
नि शुष्ण इन्द्र धर्णसिं वज्रं जघन्थ दस्यवि । वृषा ह्युग्र शृण्विषो३ं
न द्याव इन्द्रमोजसा नान्तरिक्षाणि वज्रिणम् । न विव्यचन्त भूमयो३ं
यस्त इन्द्र महीरपः स्तभूयमान आशयत् । नि तं पद्यासु शिश्नथो३ं
य इमे रोदसी मही समीची समजग्रभीत् । तमोभिरिन्द्र तं गुहो३ं
य इन्द्र यतयस्त्वा भृगवो ये च तुष्टुवुः । ममेदुग्र श्रुधी हवो३म्
इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् । एनामृतस्य पिप्युषो३ं
या इन्द्र प्रस्वस्त्वासा गर्भमचक्रिरन् । परि धर्मेव सूर्यो३ं
त्वामिच्छवसस्पते कण्वा उक्थेन वावृधुः । त्वां सुतास इन्दवो३ं
तवेदिन्द्र प्रणीतिषूत प्रशस्तिरद्रिवः । यज्ञो वितन्तसाय्यो३म्
आ न इन्द्र महीमिषं पुरं न दर्षि गोमतीम् । उत प्रजां सुवीर्यो३म्
उत त्यदाश्वश्व्यं यदिन्द्र नाहुषीष्वा । अग्रे विक्षु प्रदीदयो३म्
अभि व्रजं न तत्निषे सूर उपाकचक्षसम् । यदिन्द्र मृळयासि नो३ं
यदङ्ग तविषीयस इन्द्र प्राजसि क्षितीः । महाँ अपार ओजसो३ं
तं त्वा हविष्मतीर्विश उप ब्रुवत ऊतये । उ॒रुज्रयसमिन्दुभो३म्
उपह्वरे गिरीणां सङ्गथे च नदीनाम् । धिया विप्रो अजायतो३म्
अतः समुद्रमुद्वतश्चिकित्वाँ अव पश्यति । यतो विपान एजतो३म्
आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवो३ं
कण्वास इन्द्र ते मतिं विश्वे वर्धन्ति पौंस्यम् । उतो शविष्ठ वृष्ण्यो३म्
इमां म इन्द्र सुष्टुतिं जुषस्व प्र सु मामव । उत प्र वर्धया मतो३म्
उत ब्रह्मण्या वयं तुभ्यं प्रवृद्ध वज्रिवः । विप्रा अतक्ष्म जीवसो३म्
अभि कण्वा अनूषतापो न प्रवता यतीः । इन्द्रं वनन्वती मतो३म्
इन्द्रमुक्थानि वावृधुः समुद्रमिव सिन्धवः । अनुत्तमन्युमजरो३म्
आ नो याहि परावतो हरिभ्यां हर्यताभ्याम् । इममिन्द्र सुतं पिबो३ं
त्वामिद्वृत्रहन्तम जनासो वृक्तबर्हिषः । हवन्ते वाजसातयो३म्

**अनु त्वा रोदसी उभे चक्रं न वर्त्येतशम् । अनु सुवानास इन्दवो३म्**

**मन्दस्वा सु स्वर्णर उतेन्द्र शर्यणावति । मत्स्वा विवस्वतो मतो३ं**

**वावृधान उप द्यवि वृषा वज्र्यरोरवीत् । वृत्रहा सोमपातमो३म्**

**ऋषिर्हि पूर्वजा अस्येक ईशान ओजसा । इन्द्र चोष्कूयसे वसो३म्**

**अस्माकं त्वा सुताँ उप वीतपृष्ठा अभि प्रयः । शतं वहन्तु हरयो३म्**

**इमां सु पूर्व्यां धियं मधोर्घृतस्य पिप्युषीम् । कण्वा उक्थेन वावृधो३म्**

**इन्द्रमिद्विमहीनां मेधे वृणीत मर्त्यः । इन्द्रं सनिष्युरूतयो३म्**

**अर्वाञ्चं त्वा पुरुष्टुत प्रियमेधस्तुता हरी । सोमपेयाय वक्षतो३ं** [८।६।४–४५]

**विश्वजिते धनजिते स्वर्जिते । सत्राजिते नृजित उर्वराजितो३म्**

**अश्वजिते गोजिते अब्जिते भर । इन्द्राय सोमं यजताय हर्यतो३म्**

**अभिभुवेऽभिभङ्गाय वन्वते । अषाह्ळाय सहमानाय वेधसो३ं**

**तुविग्रये वह्नये दुष्टरीतवे । सत्रासाहे नम इन्द्राय वोचतो३ं**

**सत्रासाहो जनभक्षो जनंसहः । च्यवनो युध्मो अनु जोषमुक्षितो३ं**

**वृतंचयः सहुरिर्विक्ष्वारितः । इन्द्रस्य वोचं प्र कृतानि वीर्यो३म्**

**अनानुदो वृषभो दोधतो वधः । गम्भीर ऋष्वो असमष्टकाव्यो३ं**

**रध्रचोदः श्नथनो वीळितस्पृथुः । इन्द्रः सुयज्ञ उषसः स्वर्जनो३ं**

**यज्ञेन गातुमप्तुरो विविद्रिरे । धियो हिन्वाना उशिजो मनीषिणो३म्**

**अभिस्वरा निषदा गा अवस्यवः । इन्द्रे हिन्वाना द्रविणान्याशतो३म्**

**शो३ंसावो३म् इन्द्र श्रेष्ठानि द्रविणानि धेहि । चित्तिं दक्षस्य सुभगत्वमस्मो३म्**

**पोषं रयीणामरिष्टिं तनूनाम् । स्वाद्मानं वाचः सुदिनत्वमह्नो३म् ॥** (२।२१।१–६) इति त्रिः परिदध्यात् ।

**उक्थं वाचि** इति शस्त्वा जपः ।

**ये३ यजामहे तिष्ठा हरी रथ आ युज्यमाना याहि वायुर्न नियुतो नो अच्छ ।**

**पिबास्यन्धो अभिसृष्टो अस्मे इन्द्र स्वाहा ररिमा ते मदाया३ वौ३षट् ॥** (३।३५।१)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । पूर्ववद् भक्षविधिः ।

**मैत्रावरुणशस्त्रम् ।**

दैवातिथिस्तोत्रं पञ्चदशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**

**आ त्वेता नि षीदतेन्द्रमभि प्र गायत ।**

सखायः स्तोमवाहसः सखायः स्तोमवाहसो३म्

पुरूतमं पुरूणामीशानं वार्याणाम् ।

इन्द्रं सोमे सचा सुत इन्द्रं सोमे सचा सुतो३ं

स घा नो योग आ भुवत्स राये स पुरंध्याम् ।

गमद्वाजेभिरा स नो गमद्वाजेभिरा स नो३ं [१।५।१–३]

शो३ंसावो३म् आ त्वशत्रवा गहि न्युक्थानि च हूयसे ।

उपमे रोचने दिव उपमे रोचने दिवो३ं

तुभ्यायमद्रिभिः सुतो गोभिः श्रीतो मदाय कम् ।

प्र सोम इन्द्र हूयते प्र सोम इन्द्र हूयतो३म्

इन्द्र श्रुधि सु मे हवमस्मे सुतस्य गोमतः ।

वि पीतिं तृप्तिमश्नुहि वि पीतिं तृप्तिमश्नुहो३ं [८।८२।४–६]

शो३ंसावो३ं नकिरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन् । नकिरेवा यथा त्वो३ं

सत्रा ते अनु कृष्टयो विश्वा चक्रेव वावृतुः । सत्रा महाँ असि श्रुतो३ं

विश्वे चनेदना त्वा देवास इन्द्र युयुधुः । यदहा नक्तमातिरो३ं

यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते । मुषाय इन्द्र सूर्यो३ं

यत्र देवाँ ऋघायतो विश्वाँ अयुध्य एक इत् । त्वमिन्द्र वनूँरहो३ं

यत्रोत मर्त्याय कमरिणा इन्द्र सूर्यम् । प्रावः शचीभिरेतशो३ं

किमादुतासि वृत्रहन् मघवन् मन्युमत्तमः । अत्राह दानुमातिरो३म्

एतद् घेदुत वीर्यमिन्द्र चकर्थ पौंस्यम् ।

स्त्रियं यद् दुर्हणायुवं वधीर्दुहितरं दिवो३ं

दिवश्चिद् घा दुहितरं महान् महीयमानाम् । उषासमिन्द्र सं पिणो३म्

अपोषा अनसः सरत् सम्पिष्टादह बिभ्युषी । नि यत्सीं शिश्नथद् वृषो३म्

एतदस्या अनः शये सुसम्पिष्टं विपाश्या । ससार सीं परावतो३म्

उत सिन्धुं विबाल्यं वितस्थानामधि क्षमि । परि ष्ठा इन्द्र माययो३म्

उत शुष्णस्य धृष्णुया प्र मृक्षो अभि वेदनम् । पुरो यदस्य सम्पिणो३म्

उत दासं कौलितरं बृहतः पर्वतादधि । अवाहन्निन्द्र शम्बरो३म्

उत दासस्य वर्चिनः सहस्राणि शतावधीः । अधि पञ्च प्रधीँरिवो३म्

उत त्यं पुत्रमग्रुवः परावृक्तं शतक्रतुः । उक्थेष्विन्द्र आभजो३म्

उत त्या तुर्वशायदू अस्नातारा शचीपतिः । इन्द्रो विद्वाँ अपारयो३म्

**उत त्या सद्य आर्या सरयोरिन्द्र पारतः । अर्णाचित्रव्थावधो३म्**

**अनु द्वा जहिता नयोऽन्धं श्रोणं च वृत्रहन् । न तत्ते सुम्नमष्टवो३ं**

**शतमश्मन्मयीनां पुरामिन्द्रो व्यास्यत् । दिवोदासाय दाशुषो३म्**

**अस्वापयद् दभीतये सहस्रा त्रिंशतं हथैः । दासानामिन्द्रो माययो३ं**

**स घेदुतासि वृत्रहन्त्समान इन्द्र गोपतिः । यस्ता विश्वानि चिच्युषो३म्**

**उत नूनं यदिन्द्रियं करिष्या इन्द्र पौंस्यम् । अद्या नकिष्टदा मिनो३ं** (४।३०।१–२३)

**श्रत्ते दधामि प्रथमाय मन्यवे । अहन् यद्वृत्रं नर्यं विवेरपो३म्**

**उभे यत्त्वा भवतो रोदसी अनु । रेजते शुष्मात् पृथिवी चिदद्रिवो३ं**

**त्वं मायाभिरनवद्य मायिनम् । श्रवस्यता मनसा वृत्रमर्दयो३ं**

**त्वामिन्नरो वृणते गविष्टिषु । त्वां विश्वासु हव्यास्विष्टिषो३म्**

**ऐषु चाकन्धि पुरुहूत सूरिषु । वृधासो ये मघवन्नानशुर्मघो३म्**

**अर्चन्ति तोके तनये परिष्टिषु । मेधसाता वाजिनमह्रये धनो३ं**

**स इन्नु रायः सुभृतस्य चाकनत् । मदं यो अस्य रंह्यं चिकेततो३ं**

**त्वावृधो मघवन् दाश्वध्वरः । मक्षू स वाजं भरते धना नृभो३ं**

**शो३ंसावो३ं त्वं शर्धाय महिना गृणानः । उरु कृधि मघवञ्छग्धि रायो३ं**

**त्वं नो मित्रो वरुणो न मायी । पित्वो न दस्म दयसे विभक्तो३म् ॥** (१०।१४७।१–५) इति त्रिः परिदध्यात् ।

**उक्थं वाचि** इति शस्त्वा जपः ।

**ये३ यजामह इदं त्यत्पात्रमिन्द्रपानमिन्द्रस्य प्रियममृतमपायि ।**

**मत्सद् यथा सौमनसाय देवं व्यस्मद् द्वेषो युयवद् व्यंहा३ वौ३षट् ॥** (६।४४।१६)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । पूर्ववद् भक्षविधिः ।

**ब्राह्मणाच्छंसिशस्त्रम् ।**

सौमेधस्तोत्रं पञ्चदशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३ं**

**योगे योगे तवस्तरं वाजे वाजे हवामहे ।**

**सखाय इन्द्रमूतये सखाय इन्द्रमूतयो३म्**

**आ घा गमद्यदि श्रवत् सहस्रिणीभिरूतिभिः ।**

**वाजेभिरुप नो हवं वाजेभिरुप नो हवो३म्**

**अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् ।**

यं ते पूर्वं पिता हुवे यं ते पूर्वं पिता हुवो३ं (१।३०।७–९)
शो३ंसावो३म् युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः ।
रोचन्ते रोचना दिवि रोचन्ते रोचना दिवो३ं
युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।
शोणा धृष्णू नृवाहसा शोणा धृष्णू नृवाहसो३ं
केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।
समुषद्भिरजायथाः समुषद्भिरजायथो३ं (१।६।१–३)
शो३ंसावो३म् यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् । स्तोता मे गोषखा स्यो३ं
शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे । यदहं गोपतिः स्यो३ं
धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते । गामश्वं पिप्युषी दुहो३ं
न ते वर्तास्ति राधस इन्द्र देवो न मर्त्यः । यद् दित्ससि स्तुतो मघो३ं
यज्ञ इन्द्रमवर्धयद् यद्भूमिं व्यवर्तयत् । चक्राण ओपशं दिवो३ं
वावृधानस्य ते वयं विश्वा धनानि जिग्युषः । ऊतिमिन्द्रा वृणीमहो३ं
व्यन्तरिक्षमतिरन्मदे सोमस्य रोचना । इन्द्रो यदभिनद्वलो३म्
उद् गा आजदङ्गिरोभ्य आविष्कृण्वन् गुहा सतीः । अर्वाञ्चं नुनुदे वलो३म्
इन्द्रेण रोचना दिवो दृह्ळानि दृंहितानि च । स्थिराणि न पराणुदो३म्
अपामूर्मिर्मदन्निव स्तोम इन्द्राजिरायते । वि ते मदा अराजिषो३ं
त्वं हि स्तोमवर्धन इन्द्रास्युक्थवर्धनः । स्तोतॄणामुत भद्रको३म्
इन्द्रमित् केशिना हरी सोमपेयाय वक्षतः । उप यज्ञं सुराधसो३म्
अपाम् फेनेन नमुचेः शिर इन्द्रोदवर्तयः । विश्वा यदजयः स्पृधो३म्
मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः । अव दस्यूँरधूनुथो३म्
असुन्वामिन्द्र संसदं विषूचीं व्यनाशयः । सोमपा उत्तरो भवो३म् (८।१४।१–१५)
प्र ते महे विदथे शंसिषं हरी । प्र ते वन्वे वनुषो हर्यतं मदो३ं
घृतं न यो हरिभिश्चारु सेचते । आ त्वा विशन्तु हरिवर्पसं गिरो३ं
हरिं हि योनिमभि ये समस्वरन् । हिन्वन्तो हरी दिव्यं यथा सदो३म्
आ यं पृणन्ति हरिभिर्न धेनवः । इन्द्राय शूषं हरिवन्तमर्चतो३ं
सो अस्य वज्रो हरितो य अ्यसः । हरिर्निकामो हरिरा गभस्त्यो३ं
द्युम्नी सुशिप्रो हरिमन्युसायकः । इन्द्रे नि रूपा हरिता मिमिक्षिरो३ं
दिवि न केतुरधि धायि हर्यतः । विव्यचद्वज्रो हरितो न रंह्यो३ं

**तुददहिं हरिशिप्रो य आयसः । सहस्रशोका अभवद्धरिम्भरो३ं**
**त्वं त्वमहर्यथा उपस्तुतः । पूर्वेभिरिन्द्र हरिकेश यज्वभो३ं**
**त्वं हर्यसि तव विश्वमुक्थ्यम् । असामि राधो हरिजात हर्यतो३ं**
**ता वज्रिणं मन्दिनं स्तोम्यं मदे । इन्द्रं रथे वहतो हर्यता हरो३म्**
**पुरूण्यस्मै सवनानि हर्यते । इन्द्राय सोमा हरयो दधन्विरो३म्**
**अरं कामाय हरयो दधन्विरे । स्थिराय हिन्वन् हरयो हरी तुरो३म्**
**अर्वद्भिर्यो हरिभिर्जोषमीयते । सो अस्य कामं हरिवन्तमानशो३ं**
**हरिश्मशारुर्हरिकेश आयसः । तुरस्पेये यो हरिपा अवर्धतो३म्**
**अर्वद्भिर्यो हरिभिर्वाजिनीवसुः । अति विश्वा दुरिता पारिषद्धरो३ं**
**स्रुवेव यस्य हरिणी विपेततुः । शिप्रे वाजाय हरिणी द्रवध्वतो३म्**
**प्र यत्कृते चमसे मर्मृजद्धरी । पीत्वा मदस्य हर्यतस्यान्धसो३म्**
**उत स्म सद्म हर्यतस्य पस्त्योः । अत्यो न वाजं हरिवाँ अचिक्रदो३म्**
**मही चिद्धि धिषणाहर्यदोजसा । बृहद्वयो दधिषे हर्यतश्चिदो३म्**
**आ रोदसी हर्यमाणो महित्वा । नव्यं नव्यं हर्यसि मन्म नु प्रियो३म्**
**प्र पस्त्यमसुर हर्यतं गोः । आविष्कृधि हरये सूर्यायो३म्**
**आ त्वा हर्यन्तं प्रयुजो जनानाम् । रथे वहन्तु हरिशिप्रमिन्द्रो३म्**
**पिबा यथा प्रतिभृतस्य मध्वः । हर्यन् यज्ञं सधमादे दशोणो३ं**
**शो३ंसावो३म् अपाः पूर्वेषां हरिवः सुतानाम् । अथो इदं सवनं केवलं तो३म्**
**ममद्धि सोमं मधुमन्तमिन्द्र । सत्रा वृषञ्जठर आ वृषस्वो३म् ॥** (१०।९६।१–१३) इति त्रिः परिदध्यात् ।
**उक्थं वाचि** इति शस्त्वा जपः ।
**ये३ यजामह ऊती शचीवस्तव वीर्येण वयो दधाना उशिज ऋतज्ञाः ।**
**प्रजावदिन्द्र मनुषो दुरोणे तस्थुर्गृणन्तः सधमाद्यासा३ वौ३षट् ॥** (१०।१०४।४)
**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । पूर्ववद् भक्षविधिः ।

**मैत्रावरुणशस्त्रम् ।**

कौत्सस्तोत्रं पञ्चदशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–
**हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**
**इन्द्रः सुतेषु सोमेषु क्रतुं पुनीत उक्थ्यम् ।**
**विदे वृधस्य दक्षसो महान् हि षो महान् हि षो३ं**

स प्रथमे व्योमनि देवानां सदने वृधः ।
सुपारः सुश्रवस्तमः समप्सुजित् समप्सुजो३ं
तमह्वे वाजसातय इन्द्रं भराय शुष्मिणम् ।
भवा नः सुम्ने अन्तमः सखा वृधे सखा वृधो३ं (८।१३।१–३)
शो३ंसावो३ं य इन्द्र सोमपातमो मदः शविष्ठ चेतति ।
येना हंसि न्यत्रिणं तमीमहे तमीमहो३ं
येना दशग्वमध्रिगुं वेपयन्तं स्वर्णरम् ।
येना समुद्रमाविथा तमीमहे तमीमहो३ं
येन सिन्धुं महीरपो रथाँ इव प्रचोदयः ।
पन्थामृतस्य यातवे तमीमहे तमीमहो३ं [८।१२।१–३]
शो३ंसावो३म् आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखो३म्
बृहन्निदिध्म एषां भूरि शस्तं पृथुः स्वरुः । येषामिन्द्रो युवा सखो३म्
अयुद्ध इद् युधा वृतं शूर आजति सत्वभिः । येषामिन्द्रो युवा सखो३म्
आ बुन्दं वृत्रहा ददे जातः पृच्छद् वि मातरम् । क उग्राः के ह शृण्विरो३म्
प्रति त्वा शवसी वदद् गिरावप्सो न योधिषत् । यस्ते शत्रुत्वमाचको३म्
उत त्वं मघवञ्छृणु यस्ते वष्टि ववक्षि तत् । यद् वीळयासि वीळु तो३ं
यदाजिं यात्याजिकृदिन्द्रः स्वश्वयुरुप । रथीतमो रथीनो३ं
वि षु विश्वा अभियुजो वज्रिन् विष्वग्यथा वृह । भवा नः सुश्रवस्तमो३म्
अस्माकं सु रथं पुर इन्द्रः कृणोतु सातये । न यं धूर्वन्ति धूर्तयो३ं
वृज्याम ते परि द्विषोऽरं ते शक्र दावने । गमेमेदिन्द्र गोमतो३ं
शनैश्चिद् यन्तो अद्रिवोऽश्वावन्तः शतग्विनः । विवक्षणा अनेहसो३म्
ऊर्ध्वा हि ते दिवे दिवे सहस्रा सूनृता शता । जरितृभ्यो विमंहतो३ं
विद्मा हि त्वा धनंजयमिन्द्र दृळ्हा चिदारुजम् । आदारिणं यथा गयो३ं
ककुहं चित्त्वा कवे मन्दन्तु धृष्णविन्दवः । आ त्वा पणिं यदीमहो३ं
यस्ते रेवाँ अदाशुरिः प्रममर्ष मघत्तये । तस्य नो वेद आ भरो३म्
इम उ त्वा वि चक्षते सखाय इन्द्र सोमिनः । पुष्टावन्तो यथा पशो३म्
उत त्वाबधिरं वयं श्रुत्कर्णं सन्तमूतये । दूरादिह हवामहो३ं (८।४५।१–१७)
य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः । पिबेदस्य त्वमीशिषो३ं
यो अप्सु चन्द्रमा इव सोमश्चमूषु ददृशे । पिबेदस्य त्वमीशिषो३ं

**यं ते श्येनः पदाभरत् तिरो रजांस्यस्पृतम् । पिबेदस्य त्वमीशिषोꣳ** [८।८२।७–९]

**प्र वः सतां ज्येष्ठतमाय सुष्टुतिम् । अग्नाविव समिधाने हविर्भरो३म्**

**इन्द्रमजुर्यं जयन्तमुक्षितम् । सनाद् युवानमवसे हवामहोꣳ**

**यस्मादिन्द्राद् बृहतः किं चनेमृते । विश्वान्यस्मिन्त्सम्भृताधि वीर्योꣳ**

**जठरे सोमं तन्वी सहो महः । हस्ते वज्रं भरति शीर्षणि क्रतोꣳ**

**न क्षोणीभ्यां परिभ्वे त इन्द्रियम् । न समुद्रैः पर्वतैरिन्द्र ते रथोꣳ**

**न ते वज्रमन्वश्नोति कश्चन । यदाशुभिः पतसि योजना पुरोꣳ**

**विश्वे ह्यस्मै यजताय धृष्णवे । क्रतुं भरन्ति वृषभाय सश्चतोꣳ**

**वृषा यजस्व हविषा विदुष्टरः । पिबेन्द्र सोमं वृषभेण भानुनोꣳ**

**वृष्णः कोशः पवते मध्व ऊर्मिः । वृषभान्नाय वृषभाय पातवोꣳ**

**वृषणाध्वर्यू वृषभासो अद्रयः । वृषणं सोमं वृषभाय सुष्वतोꣳ**

**वृषा ते वज्र उत ते वृषा रथः । वृषणा हरी वृषभाण्यायुधोꣳ**

**वृष्णो मदस्य वृषभ त्वमीशिषे । इन्द्र सोमस्य वृषभस्य तृप्णुहो३म्**

**प्र ते नावं न समने वचस्युवम् । ब्रह्मणा यामि सवनेषु दाधृषोꣳ**

**कुविन्नो अस्य वचसो निबोधिषत् । इन्द्रमुत्सं न वसुनः सिचामहो३म्**

**पुरा सम्बाधादभ्या ववृत्स्व नः । धेनुर्न वत्सं यवसस्य पिप्युषोꣳ**

**सकृत्सु ते सुमतिभिः शतक्रतो । सं पत्नीभिर्न वृषणो नसीमहोꣳ**

**शोꣳसावो३म् नूनं सा ते प्रति वरं जरित्रे । दुहीयदिन्द्र दक्षिणा मघोनोꣳ**

**शिक्षा स्तोतृभ्यो माति धग्भगो नः । बृहद्वदेम विदथे सुवीरो३म् ॥** (२।१६।१–९) इति त्रिः परिदध्यात् ।

**उक्थं वाचि** इति शस्त्वा जपः ।

**ये३ यजामहे प्रो द्रोणे हरयः कर्माग्मन् पुनानास ऋज्यन्तो अभूवन् ।**

**इन्द्रो नो अस्य पूर्व्यः पपीयाद् द्युक्षो मदस्य सोम्यस्य राजा३ वौ३षट् ॥** (६।३७।२)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । पूर्ववद् भक्षविधिः ।

**आश्विनशस्त्रम् ।**

अथ संस्थितेषु पर्यायेषु छन्दोगा आश्विनाय स्तुवते सन्धिस्तोत्रं त्रिवृत्स्तोमम् । होताश्विनं शस्त्रं शंसिष्यन् विसंस्थितसञ्चरेण निष्क्रम्याग्नीध्रीये जान्वाच्याहुतीर्जुहुयात्–

**अग्निरज्वी गायत्रेण च्छन्दसा तमश्यां तमन्वारभे तस्मै मामवतु तस्मै स्वाहा ॥ अग्नय इदं न मम ॥**

**उषा अज्विनी त्रैष्टुभेन च्छन्दसा तामश्यां तामन्वारभे तस्यै मामवतु तस्यै स्वाहा ॥ उषस इदं..॥**

**अश्विनावश्विनौ जागतेन च्छन्दसा तावश्यां तावन्वारभे ताभ्यां मामवतु ताभ्यां स्वाहा ॥ अश्विभ्यामिदं..॥**

**बण्महाँ असि सूर्य बळादित्य महाँ असि ।**

**महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ असि स्वाहा ॥ सूर्यायेदं न मम ॥**

**बट्सूर्य श्रवसा महाँ असि सत्रा देव महाँ असि ।**

**मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यं स्वाहा॥ सूर्यायेदं न मम ॥** (८।१०१।११-१२)

**इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः स्वाहा ॥ इन्द्रायेदं न मम ॥** (१।७।१०)

इति स्थाल्या स्रुवेणादाय षडाहुतीर्हुत्वा आज्यशेषं प्राश्य अनाचम्यैव सदः प्रविश्य पश्चात् स्वस्य धिष्णियस्य तृणान्निरस्याप उपस्पृश्य समस्तजङ्घोरुररत्निभ्यां जानुभ्यां चोपस्थं कृत्वा शकुनिरिवोत्पतिष्यन्नुपविष्टः आश्विनं शास्त्रं शंसेत् ।

**हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**

**अग्निर्होता गृहपतिः स राजा । विश्वा वेद जनिमा जातवेदो३ं**

**देवानामुत यो मर्त्यानाम् । यजिष्ठः स प्र यजतामृतावो३म्** (६।१५।१३) इति त्रिः

गायत्रम्

**उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे अस्मे च शृण्वतो३ं**

**यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु । अरक्षद् दाशुषे गयो३म्**

**उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि । धनञ्जयो रणेरणे३ं**

**यस्य दूतो असि क्षये वेषि हव्यानि वीतये । दस्मत् कृणोष्यध्वरो३ं**

**तमित् सुहव्यमङ्गिरः सुदेवं सहसो यहो । जना आहुः सुबर्हिषो३म्**

**आ च वहासि ताँ इह देवाँ उप प्रशस्तये । हव्या सुश्चन्द्र वीतयो३ं**

**न योरुपब्दिरश्व्यः शृण्वे रथस्य कच्चन । यदग्ने यासि दूत्यो३ं**

**त्वोतो वाज्यह्रयोऽभि पूर्वस्मादपरः । प्र दाश्वाँ अग्ने अस्थो३म्**

**उत द्युमत् सुवीर्यं बृहदग्ने विवाससि । देवेभ्यो देव दाशुषो३ं** [१ ।७४ ।१-९] [९]

**जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् । हव्या जुह्वान आसनो३म्**

**अथा ते अङ्गिरस्तमाग्ने वेधस्तम प्रियम् । वोचेम ब्रह्म सानसो३ं**

**कस्ते जामिर्जनानामग्ने को दाश्वध्वरः । को ह कस्मिन्नसि श्रितो३ं**

**त्वं जामिर्जनानामग्ने मित्रो असि प्रियः । सखा सखिभ्य ईड्यो३ं**

**यजा नो मित्रावरुणा यजा देवाँ ऋतं बृहत् । अग्ने यक्षि स्वं दमो३म्** [१ ।७५ ।१-५] [१४]

**अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि । विश्वासु धीषु वन्द्यो३म्**

**आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् । विश्वासु पृत्सु दुष्टरो३म्**

आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् । मार्डीकं धेहि जीवसो३ं
प्र पूतास्तिग्मशोचिषे वाचो गोतमाग्नये । भरस्व सुम्नयुर्गिरो३ं
यो नो अग्नेऽभिदासत्यन्ति दूरे पदीष्ट सः । अस्माकमिद् वृधे भवो३ं
सहस्राक्षो विचर्षणिरग्नी रक्षांसि सेधति । होता गृणीत उक्थ्यो३म् [१ ।७९ ।७–१२] [२०]
अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमो३म्
अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत । स देवाँ एह वक्षतो३म्
अग्निना रयिमश्नवत् पोषमेव दिवेदिवे । यशसं वीरवत्तमो३म्
अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद्देवेषु गच्छतो३म्
अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः । देवो देवेभिरागमो३ं
यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि । तवेत् तत् सत्यमङ्गिरो३म्
उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसो३ं
राजन्तामध्वराणां गोपामृतस्य दीदिविम् । वर्धमानं स्वे दमो३ं
स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तयो३म् [१ ।१ ।१–९] [२९]
अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतो३म्
अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियो३म्
अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यो३ं
ताँ उशतो वि बोधय यदग्ने यासि दूत्यम् । देवैरा सत्सि बर्हिषो३ं
घृताहवन दीदिवः प्रति ष्म रिषतो दह । अग्ने त्वं रक्षस्विनो३म्
अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यो३ं
कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे । देवममीवचातनो३ं
यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति । तस्य स्म प्राविता भवो३ं
यो अग्निं देववीतये हविष्माँ आविवासति । तस्मै पावक मृळयो३ं
स नः पावक दीदिवोऽग्ने देवाँ इहा वह । उप यज्ञं हविश्च नो३ं
स नः स्तवान आ भर गायत्रेण नवीयसा । रयिं वीरवतीमिषो३म्
अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः । इमं स्तोमं जुषस्व नो३ं [१ ।१२ ।१–१२] [४१]
वसिष्वा हि मियेध्य वस्त्राण्यूर्जां पते । सेमं नो अध्वरं यजो३ं
नि नो होता वरेण्यः सदा यविष्ठ मन्मभिः । अग्ने दिवित्मता वचो३म्
आ हि ष्मा सूनवे पितापिर्यजत्यापये । सखा सख्ये वरेण्यो३म्
आ नो बर्ही रिशादसो वरेण्यो मित्रो अर्यमा । सीदन्तु मनुषो यथो३ं

पूर्व्य होतरस्य नो मन्दस्व सख्यस्य च । इमा उ षु श्रुधी गिरो३ं
यच्चिद्धि शश्वता तना देवंदेवं यजामहे । त्वे इद्धूयते हवो३ं
प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः । प्रियाः स्वग्नयो वयो३ं
स्वग्नयो हि वार्यं देवासो दधिरे च नः ।स्वग्नयो मनामहो३म्
अथा न उभयेषाममृत मर्त्यानाम् । मिथः सन्तु प्रशस्तयो३ं
विश्विभिरग्ने अग्निभिर्रिमं यज्ञमिदं वचः । चनो धाः सहसो यहो३म् [१ ।२६ ।१–१०] [५१]
अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः । सम्राजन्तमध्वराणो३ं
स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः । मीढ्वाँ अस्माकं बभूयो३ं
स नो दूराच्चासाच्च नि मर्त्यादघायोः । पाहि सदमिद् विश्वायो३म्
इममू षु त्वमस्माकं सनिं गायत्रेण नव्यांसम् । अग्ने देवेषु प्र वोचो३म्
आ नो भज परमेष्वा वाजेषु मध्यमेषु । शिक्षा वस्वो अन्तमस्यो३ं
विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ । सद्यो दाशुषे क्षरसो३ं
यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता शश्वतीरिषो३ं
नकिरस्य सहन्त्य पर्येता कयस्य चित् । वाजो अस्ति श्रवाय्यो३ं
स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता । विप्रेभिरस्तु सनितो३ं
जराबोध तद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय दृशीको३ं
स नो महाँ असि अनिमानो धूमकेतुः पुरुश्चन्द्रः । धिये वाजाय हिन्वतो३ं
स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः । उक्थैरग्निर्बृहद्भानो३ं [१ ।२७ ।१–१२] [६३]
त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्व् ईड्यः ॥ (८–११–१)
त्वमसि प्रशस्यो विदथेषु सहन्त्य । अग्ने रथीरध्वराणाम् ॥ (८–११–२)
स त्वमस्मदप द्विषो युयोधि जातवेदः । अदेवीरग्ने अरातीः ॥ (८–११–३)
अन्ति चित्सन्तमह यज्ञं मर्तस्य रिपोः । नोप वेषि जातवेदः ॥ (८–११–४)
मर्ता अमर्त्यस्य ते भूरि नाम मनामहे । विप्रासो जातवेदसः ॥ (८–११–५)
विप्रं विप्रासोऽवसे देवं मर्तास ऊतये । अग्नीीर्भिर्हवामहे ॥ (८–११–६)
आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् । अग्ने त्वांकामया गिरा ॥ (८–११–७)
पुरुत्रा हि सदृङ्ङ असि विशो विश्वा अनु प्रभुः । समत्सु त्वा हवामहे ॥ (८–११–८)
समत्स्वग्निमवसे वाजयन्तो हवामहे । वाजेषु चित्रराधसम् ॥ (८–११–९)
त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः । उत द्विषो मर्त्यस्य ॥ (८–७१–१)
नहि मन्युः पौरुषेय ईशे हि वः प्रियजात । त्वमिदसि क्षपावान् ॥ (८–७१–२)

स नो विश्वेभिर्देवेभिरूर्जो नपाद्भद्रशोचे । रयिं देहि विश्ववारम् ॥ (८–७१–३)

न तमग्ने अरातयो मर्तं युवन्त रायः । यं त्रायसे दाश्वांसम् ॥ (८–७१–४)

यं त्वं विप्र मेधसातावग्ने हिनोषि धनाय । स तवोती गोषु गन्ता ॥ (८–७१–५)

त्वं रयिं पुरुवीरमग्ने दाशुषे मर्ताय । प्र णो नय वस्यो अच्छ ॥ (८–७१–६)

उरुष्या णो मा परा दा अघायते जातवेदः । दुराध्ये मर्ताय ॥ (८–७१–७)

अग्ने माकिष्टे देवस्य रातिमदेवो युयोत । त्वमीशिषे वसूनाम् ॥ (८–७१–८)

स नो वस्व उप मास्यूर्जो नपान्माहिनस्य । सखे वसो जरितृभ्यः ॥ (८–७१–९)

इमे विप्रस्य वेधसोऽग्नेरस्तृतयज्वनः । गिर स्तोमास ईरते ॥ (८–४३–१)

अस्मै ते प्रतिहर्यते जातवेदो विचर्षणे । अग्ने जनामि सुष्टुतिम् ॥ (८–४३–२)

आरोका इव घेदह तिग्मा अग्ने तव त्विषः । दद्भिर्वनानि बप्सति ॥ (८–४३–३)

हरयो धूमकेतवो वातजूता उप द्यवि । यतन्ते वृथगग्नयः ॥ (८–४३–४)

एते त्ये वृथगग्नय इद्धासः समदृक्षत । उषसामिव केतवः ॥ (८–४३–५)

कृष्णा रजांसि पत्सुतः प्रयाणे जातवेदसः । अग्निर्यद्रोधति क्षमि ॥ (८–४३–६)

धासिं कृण्वान ओषधीर्बप्सदग्निर्न वायति । पुनर्यन्तरुणीरपि ॥ (८–४३–७)

जिह्वाभिरह नन्नमदर्चिषा जञ्जणाभवन् । अग्निर्वनेषु रोचते ॥ (८–४३–८)

अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे । गर्भे सञ्जायसे पुनः ॥ (८–४३–९)

उदग्ने तव तद् घृतादर्ची रोचत आहुतम् । निंसानाुह्वो मुखे ॥ (८–४३–१०)

उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमाग्नये ॥ (८–४३–११)

उत त्वा नमसा वयं होतर्वरेण्यक्रतो । अग्ने समिद्भिरीमहे ॥ (८–४३–१२)

उत त्वा भृगुवच्छुचे मनुष्वदग्न आहुत । अङ्गिरस्वद्धवामहे ॥ (८–४३–१३)

त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्सता । सखा सख्या समिध्यसे ॥ (८–४३–१४)

स त्वं विप्राय दाशुषे रयिं देहि सहस्रिणम् । अग्ने वीरवतीमिषम् ॥ (८–४३–१५)

अग्ने भ्रातः सहस्कृत रोहिदश्व शुचिव्रत । इमं स्तोमं जुषस्व मे ॥ (८–४३–१६)

उत त्वाग्ने मम स्तुतो वाश्राय प्रतिहर्यते । गोष्ठं गाव इवाशत ॥ (८–४३–१७)

तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे ॥ (८–४३–१८)

अग्निं धीभिर्मनीषिणो मेधिरासो विपश्चितः । अद्मसद्याय हिन्विरे ॥ (८–४३–१९)

तं त्वामज्मेषु वाजिनं तन्वाना अग्ने अध्वरम् । वह्निं होतारमीळते ॥ (८–४३–२०)

पुरुत्रा हि सदृङ्ङ् असि विशो विश्वा अनु प्रभुः । समत्सु त्वा हवामहे ॥ (८–४३–२१)

तमीळिष्व य आहुतोऽग्निर्विभ्राजते घृतैः । इमं नः शृणवद्धवम् ॥ (८–४३–२२)

तं त्वा वयं हवामहे शृण्वन्तं जातवेदसम् । अग्ने घ्नन्तमप द्विषः ॥ (८–४३–२३)

विशां राजानमद्भुतमध्यक्षं धर्मणामिमम् । अग्निमीळे स उ श्रवत् ॥ (८–४३–२४)

अग्निं विश्वायुवेपसं मर्यं न वाजिनं हितम् । सप्तिं न वाजयामसि ॥ (८–४३–२५)

घ्नन्मृध्राण्यप द्विषो दहन्रक्षांसि विश्वहा । अग्ने तिग्मेन दीदिहि ॥ (८–४३–२६)

यं त्वा जनास इन्धते मनुष्वदङ्गिरस्तम । अग्ने स बोधि मे वचः ॥ (८–४३–२७)

यदग्ने दिविजा अस्यप्सुजा वा सहस्कृत । तं त्वा गीर्भिर्हवामहे ॥ (८–४३–२८)

तुभ्यं घेत्ते जना इमे विश्वाः सुक्षितयः पृथक् । धासिं हिन्वन्त्यत्तवे ॥ (८–४३–२९)

ते घेदग्ने स्वाध्योऽहा विश्वा नृचक्षसः । तरन्तः स्याम दुर्गहा ॥ (८–४३–३०)

अग्निं मन्द्रं पुरुप्रियं शीरं पावकशोचिषम् । हृद्भिर्मन्द्रेभिरीमहे ॥ (८–४३–३१)

स त्वमग्ने विभावसुः सृजन्सूर्यो न रश्मिभिः । शर्धन्तमांसि जिघ्नसे ॥ (८–४३–३२)

तत्ते सहस्व ईमहे दात्रं यन्नोपदस्यति । त्वदग्ने वार्यं वसु ॥ (८–४३–३३)

समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन ॥ (८–४४–१)

अग्ने स्तोमं जुषस्व मे वर्धस्वानेन मन्मना । प्रति सूक्तानि हर्य नः ॥ (८–४४–२)

अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे । देवाँ आ सादयादिह ॥ (८–४४–३)

उत्ते बृहन्तो अर्चयः समिधानस्य दीदिवः । अग्ने शुक्रास ईरते ॥ (८–४४–४)

उप त्वा जुह्वो मम घृताचीर्यन्तु हर्यत । अग्ने हव्या जुषस्व नः ॥ (८–४४–५)

मन्द्रं होतारमृत्विजं चित्रभानुं विभावसुम् । अग्निमीळे स उ श्रवत् ॥ (८–४४–६)

प्रत्नं होतारमीड्यं जुष्टमग्निं कविक्रतुम् । अध्वराणामभिश्रियम् ॥ (८–४४–७)

जुषाणो अङ्गिरस्तमेमा हव्यान्यानुषक् । अग्ने यज्ञं नय ऋतुथा ॥ (८–४४–८)

समिधान उ सन्त्य शुक्रशोच इहा वह । चिकित्वान्दैव्यं जनम् ॥ (८–४४–९)

विप्रं होतारमद्रुहं धूमकेतुं विभावसुम् । यज्ञानां केतुमीमहे ॥ (८–४४–१०)

अग्ने नि पाहि नस्त्वं प्रति ष्म देव रीषतः । भिन्धि द्वेषः सहस्कृत ॥ (८–४४–११)

अग्निः प्रत्नेन मन्मना शुम्भानस्तन्वं स्वाम् । कविर्विप्रेण वावृधे ॥ (८–४४–१२)

ऊर्जो नपातमा हुवेऽग्निं पावकशोचिषम् । अस्मिन्यज्ञे स्वध्वरे ॥ (८–४४–१३)

स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा । देवैरा सत्सि बर्हिषि ॥ (८–४४–१४)

यो अग्निं तन्वो दमे देवं मर्तः सपर्यति । तस्मा इद्दीदयद्वसु ॥ (८–४४–१५)

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति ॥ (८–४४–१६)

उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतींष्यर्चयः ॥ (८–४४–१७)

ईशिषे वार्यस्य हि दात्रस्याग्ने स्वर्पतिः । स्तोता स्यां तव शर्मणि ॥ (८–४४–१८)

त्वामग्ने मनीषिणस्त्वां हिन्वन्ति चितिभिः । त्वां वर्धन्तु नो गिरः ॥ (८–४४–१९)
अदब्धस्य स्वधावतो दूतस्य रेभतः सदा । अग्नेः सख्यं वृणीमहे ॥ (८–४४–२०)
अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः ॥ (८–४४–२१)
उत त्वा धीतयो मम गिरो वर्धन्तु विश्वहा । अग्ने सख्यस्य बोधि नः ॥ (८–४४–२२)
यदग्ने स्यामहं त्वं त्वं वा घा स्या अहम् । स्युष्टे सत्या इहाशिषः ॥ (८–४४–२३)
वसुर्वसुपतिर्हि कमस्यग्ने विभावसुः । स्याम ते सुमतावपि ॥ (८–४४–२४)
अग्ने धृतव्रताय ते समुद्रायेव सिन्धवः । गिरो वाश्रास ईरते ॥ (८–४४–२५)
युवानं विश्पतिं कविं विश्वादं पुरुवेपसम् । अग्निं शुम्भामि मन्मभिः ॥ (८–४४–२६)
यज्ञानां रथ्ये वयं तिग्मजम्भाय वीळवे । स्तोमैरिषेमाग्नये ॥ (८–४४–२७)
अयमग्ने त्वे अपि जरिता भूतु सन्त्य । तस्मै पावक मृळय ॥ (८–४४–२८)
धीरो ह्यस्यद्मसद्विप्रो न जागृविः सदा । अग्ने दीदयसि द्यवि ॥ (८–४४–२९)
पुराग्ने दुरितेभ्यः पुरा मृध्रेभ्यः कवे । प्र ण आयुर्वसो तिर ॥ (८–४४–३०)
युक्ष्वा हि देवहूतमाँ अश्वाँ अग्ने रथीरिव । नि होता पूर्व्यः सदः ॥ (८–७५–१)
उत नो देव देवाँ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि ॥ (८–७५–२)
त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुवः ॥ (८–७५–३)
अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम् ॥ (८–७५–४)
तं नेमिमृभवो यथा नमस्व सहूतिभिः । नेदीयो यज्ञमङ्गिरः ॥ (८–७५–५)
तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् ॥ (८–७५–६)
कमु ष्विदस्य सेनयाग्नेरपाकचक्षसः । पणिं गोषु स्तरामहे ॥ (८–७५–७)
मा नो देवानां विशः प्रस्नातीरिवोस्राः । कृशं न हासुरघ्न्याः ॥ (८–७५–८)
मा नः समस्य दूढ्यः परिद्वेषसो अंहतिः । ऊर्मिर्न नावमा वधीत् ॥ (८–७५–९)
नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमैरमित्रमर्दय ॥ (८–७५–१०)
कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् । उरुकृदुरु णस्कृधि ॥ (८–७५–११)
मा नो अस्मिन्महाधने परा वर्ग् भारभृद्यथा । संवर्गं सं रयिुाय ॥ (८–७५–१२)
अन्यमस्मद्भिया इयमग्ने सिषक्तु दुच्छुना । वर्धा नो अमवच्छवः ॥ (८–७५–१३)
यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा । तं घेदग्निर्वृधावति ॥ (८–७५–१४)
परस्या अधि संवतोऽवराँ अभ्या तर । यत्राहमस्मि ताँ अव ॥ (८–७५–१५)
विद्मा हि ते पुरा वयमग्ने पितुर्यथावसः । अधा ते सुम्नमीमहे ॥ (८–७५–१६)
प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम् । अग्निं रथं न वेद्यम् ॥ (८–८४–१)

कविमिव प्रचेतसं यं देवासो अध द्विता । नि मर्त्येष्वादधुः ॥ (८–८४–२)
त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥ (८–८४–३)
कया ते अग्ने अङ्गिर ऊर्जो नपादुपस्तुतिम् । वराय देव मन्यवे ॥ (८–८४–४)
दाशेम कस्य मनसा यज्ञस्य सहसो यहो । कदु वोच इदं नमः ॥ (८–८४–५)
अधा त्वं हि नस्करो विश्वा अस्मभ्यं सुक्षितीः । वाजद्रविणसो गिरः ॥ (८–८४–६)
कस्य नूनं परीणसो धियो जिन्वसि दम्पते । गोषाता यस्य ते गिरः ॥ (८–८४–७)
तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनम् ॥ (८–८४–८)
क्षेति क्षेमेभिः साधुभिर्नकिर्यं घ्नन्ति हन्ति यः । अग्ने सुवीर एधते ॥ (८–८४–९)
त्वमग्ने बृहद्वयो दधासि देव दाशुषे । कविर्गृहपतिर्युवा ॥ (८–१०२–१)
स न ईळानया सह देवाँ अग्ने दुवस्युवा । चिकिद्विभानवा वह ॥ (८–१०२–२)
त्वया ह स्विद्युजा वयं चोदिष्ठेन यविष्ठ्य । अभि ष्मो वाजसातये ॥ (८–१०२–३)
और्वभृगुवच्छुचिमप्नवानवदा हुवे । अग्निं समुद्रवाससम् ॥ (८–१०२–४)
हुवे वातस्वनं कविं पर्जन्यक्रन्द्यं सहः । अग्निं समुद्रवाससम् ॥ (८–१०२–५)
आ सवं सवितुर्यथा भगस्येव भुजिं हुवे । अग्निं समुद्रवाससम् ॥ (८–१०२–६)
अग्निं वो वृधन्तमध्वराणां पुरूतमम् । अच्छा नप्त्रे सहस्वते ॥ (८–१०२–७)
अयं यथा न आभुवत्त्वष्टा रूपेव तक्ष्या । अस्य क्रत्वा यशस्वतः ॥ (८–१०२–८)
अयं विश्वा अभि श्रियोऽग्निर्देवेषु पत्यते । आ वाजैरुप नो गमत् ॥ (८–१०२–९)
विश्वेषामिह स्तुहि होतॄणां यशस्तमम् । अग्निं यज्ञेषु पूर्व्यम् ॥ (८–१०२–१०)
शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा । दीदाय दीर्घश्रुत्तमः ॥ (८–१०२–११)
तमर्वन्तं न सानसिं गृणीहि विप्र शुष्मिणम् । मित्रं न यातयज्जनम् ॥ (८–१०२–१२)
उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः । वायोरनीके अस्थिरन् ॥ (८–१०२–१३)
यस्य त्रिधात्ववृतं बर्हिस्तस्थावसंदिनम् । आपश्चिन्नि दधा पदम् ॥ (८–१०२–१४)
पदं देवस्य मीळ्हुषोऽनाधृष्टाभिरूतिभिः । भद्रा सूर्य इवोपदृक् ॥ (८–१०२–१५)
अग्ने घृतस्य धीतिभिस्तेपानो देव शोचिषा । आ देवान्वक्षि यक्षि च ॥ (८–१०२–१६)
तं त्वाजनन्त मातरः कविं देवासो अङ्गिरः । हव्यवाहममर्त्यम् ॥ (८–१०२–१७)
प्रचेतसं त्वा कवेऽग्ने दूतं वरेण्यम् । हव्यवाहं नि षेदिरे ॥ (८–१०२–१८)
अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि । अग्ने अर्चन्त ऊतये ॥ (५–१३–१)
अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः । देवस्य द्रविणस्यवः ॥ (५–१३–२)
अग्निर्जुषत नो गिरो होता यो मानुषेष्वा । स यक्षद्दैव्यं जनम् ॥ (५–१३–३)

त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वि तन्वते ॥ (५–१३–४)
त्वामग्ने वाजसातमं विप्रा वर्धन्ति सुष्टुतम् । स नो रास्व सुवीर्यम् ॥ (५–१३–५)
अग्ने नेमिरराँ इव देवांस्त्वं परिभूरसि । आ राधश्चित्रमृञ्जसे ॥ (५–१३–६)
अग्निं स्तोमेन बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत् ॥ (५–१४–१)
तमध्वरेष्व् ईळते देवं मर्ता अमर्त्यम् । यजिष्ठं मानुषे जने ॥ (५–१४–२)
तं हि शश्वन्त ईळते स्रुचा देवं घृतश्चुता । अग्निं हव्याय वोळ्हवे ॥ (५–१४–३)
अग्निर्जातो अरोचत घ्नन्दस्यूञ्ज्योतिषा तमः । अविन्दद्गा अपः स्वः ॥ (५–१४–४)
अग्निमीळेन्यं कविं घृतपृष्ठं सपर्यत । वेतु मे शृणवद्धवम् ॥ (५–१४–५)
अग्निं घृतेन वावृधु स्तोमेभिर्विश्वचर्षणिम् । स्वाधीभिर्वचस्युभिः ॥ (५–१४–६)
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान्वक्षि यक्षि च ॥ (५–२६–१)
तं त्वा घृतस्नव् ईमहे चित्रभानो स्वर्दृशम् । देवाँ आ वीतये वह ॥ (५–२६–२)
वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमहि । अग्ने बृहन्तमध्वरे ॥ (५–२६–३)
अग्ने विश्वेभिरा गहि देवेभिर्हव्यदातये । होतारं त्वा वृणीमहे ॥ (५–२६–४)
यजमानाय सुन्वत आग्ने सुवीर्यं वह । देवैरा सत्सि बर्हिषि ॥ (५–२६–५)
समिधानः सहस्रजिदग्ने धर्माणि पुष्यसि । देवानां दूत उक्थ्यः ॥ (५–२६–६)
न्यग्निाातवेदसं होत्रवाहं यविष्ठ्यम् । दधाता देवमृत्विजम् ॥ (५–२६–७)
प्र यज्ञ एत्वानुषगद्या देवव्यचस्तमः । स्तृणीत बर्हिरासदे ॥ (५–२६–८)
एदं मरुतो अश्विना मित्रः सीदन्तु वरुणः । देवासः सर्वया विशा ॥ (५–२६–९)
दूतं वो विश्ववेदसं हव्यवाहममर्त्यम् । यजिष्ठमृञ्जसे गिरा ॥ (४–८–१)
स हि वेदा वसुधितिं महाँ आरोधनं दिवः । स देवाँ एह वक्षति ॥ (४–८–२)
स वेद देव आनमं देवाँ ऋतायते दमे । दाति प्रियाणि चिद्वसु ॥ (४–८–३)
स होता सेदु दूत्यं चिकित्वाँ अन्तरीयते । विद्वाँ आरोधनं दिवः ॥ (४–८–४)
ते स्याम ये अग्नये ददाशुर्हव्यदातिभिः । य ईं पुष्यन्त इन्धते ॥ (४–८–५)
ते राया ते सुवीर्यैः ससवांसो वि शृण्विरे । ये अग्ना दधिरे दुवः ॥ (४–८–६)
अस्मे रायो दिवे दिवे सं चरन्तु पुरुस्पृहः । अस्मे वाजास ईरताम् ॥ (४–८–७)
स विप्रश्चर्षणीनां शवसा मानुषाणाम् । अति क्षिप्रेव विध्यति ॥ (४–८–८)
अग्ने मृळ महाँ असि य ईमा देवयुं जनम् । इयेथ बर्हिरासदम् ॥ (४–९–१)
स मानुषीषु दूळभो विक्षु प्रावीरमर्त्यः । दूतो विश्वेषां भुवत् ॥ (४–९–२)
स सद्म परि णीयते होता मन्द्रो दिविष्टिषु । उत पोता नि षीदति ॥ (४–९–३)

उत ग्ना अग्निरध्वर उतो गृहपतिर्दमे । उत ब्रह्मा नि षीदति ॥ (४–९–४)

वेषि ह्यध्वरीयतामुपवक्ता जनानाम् । हव्या च मानुषाणाम् ॥ (४–९–५)

वेषीद्वस्य दूत्यं यस्य जुजोषो अध्वरम् । हव्यं मर्तस्य वोळ्हवे ॥ (४–९–६)

अस्माकं जोष्यध्वरमस्माकं यज्ञमङ्गिरः । अस्माकं शृणुधी हवम् ॥ (४–९–७)

परि ते दूळभो रथोऽस्माँ अश्नोतु विश्वतः । येन रक्षसि दाशुषः ॥ (४–९–८)

अग्निर्होता नो अध्वरे वाजी सन्परि णीयते । देवो देवेषु यज्ञियः ॥ (४–१५–१)

परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव । आ देवेषु प्रयो दधत् ॥ (४–१५–२)

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥ (४–१५–३)

अग्निर्होता पुरोहितोऽध्वरस्य विचर्षणिः । स वेद यज्ञमानुषक् ॥ (३–११–१)

स हव्यवाळमर्त्य उशिग् दूतश्चनोहितः । अग्निर्धिया समृण्वति ॥ (३–११–२)

अग्निर्धिया स चेतति केतुर्यज्ञस्य पूर्व्यः । अर्थं ह्यस्य तरणि ॥ (३–११–३)

अग्निं सूनुं सनश्रुतं सहसो जातवेदसम् । वह्निं देवा अकृण्वत ॥ (३–११–४)

अदाभ्यः पुरएता विशामग्निर्मानुषीणाम् । तूर्णी रथः सदा नवः ॥ (३–११–५)

साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः । अग्निस्तुविश्रवस्तमः ॥ (३–११–६)

अभि प्रयांसि वाहसा दाश्वाँ अश्नोति मर्त्यः । क्षयं पावकशोचिषः ॥ (३–११–७)

परि विश्वानि सुधिताग्नेरश्याम मन्मभिः । विप्रासो जातवेदसः ॥ (३–११–८)

अग्ने विश्वानि वार्या वाजेषु सनिषामहे । त्वे देवास एरिरे ॥ (३–११–९)

अग्न इळा समिध्यसे वीतिहोत्रो अमर्त्यः । जुषस्व सू नो अध्वरम् ॥ (३–२४–२)

अग्ने द्युम्नेन जागृवे सहसः सूनवाहुत । एदं बर्हिः सदो मम ॥ (३–२४–३)

अग्ने विश्वेभिरग्निभिर्देवेभिर्महया गिरः । यज्ञेषु य उ चायवः ॥ (३–२४–४)

अग्ने दा दाशुषे रयिं वीरवन्तं परीणसम् । शिशीहि नः सूनुमतः ॥ (३–२४–५)

प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या । देवाञ् जिगाति सुम्नयुः ॥ (३–२७–१)

ईळे अग्निं विपश्चितं गिरा यज्ञस्य साधनम् । श्रुष्टीवानं धितावानम् ॥ (३–२७–२)

अग्ने शकेम ते वयं यमं देवस्य वाजिनः । अति द्वेषांसि तरेम ॥ (३–२७–३)

समिध्यमानो अध्वरेऽग्निः पावक ईड्यः । शोचिष्केशस्तमीमहे ॥ (३–२७–४)

पृथुपाजा अमर्त्यो घृतनिर्णिक् स्वाहुतः । अग्निर्यज्ञस्य हव्यवाट् ॥ (३–२७–५)

तं सबाधो यतस्रुच इत्था धिया यज्ञवन्तः । आ चक्रुरग्निमूतये ॥ (३–२७–६)

होता देवो अमर्त्यः पुरस्तादेति मायया । विदथानि प्रचोदयन् ॥ (३–२७–७)

वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते । विप्रो यज्ञस्य साधनः ॥ (३–२७–८)

धिया चक्रे वरेण्यो भूतानां गर्भमा दधे । दक्षस्य पितरं तना ॥ (३–२७–९)

नि त्वा दधे वरेण्यं दक्षस्येळा सहस्कृत । अग्ने सुदीतिमुशिजम् ॥ (३–२७–१०)

अग्निंयन्तुरमप्तुरमृतस्य योगे वनुषः । विप्रा वाजैः समिन्धते ॥ (३–२७–११)

ऊर्जो नपातमध्वरे दीदिवांसमुप द्यवि । अग्निमीळे कविक्रतुम् ॥ (३–२७–१२)

ईळेन्यो नमस्यस्तिरस्तमांसि दर्शतः । समग्निरिध्यते वृषा ॥ (३–२७–१३)

वृषो अग्निः समिध्यतेऽश्वो न देववाहनः । तं हविष्मन्त ईळते ॥ (३–२७–१४)

वृषणं त्वा वयं वृषन्वृषणः समिधीमहि । अग्ने दीद्यतं बृहत् ॥ (३–२७–१५)

उपसद्याय मीळ्हुष आस्ये जुहुता हविः । यो नो नेदिष्ठमाप्यम् ॥ (७–१५–१)

यः पञ्च चर्षणीरभि निषसाद दमे दमे । कविर्गृहपतिर्युवा ॥ (७–१५–२)

स नो वेदो अमात्यमग्नी रक्षतु विश्वतः । उतास्मान्पात्वंहसः ॥ (७–१५–३)

नवं नु स्तोममग्नये दिवः श्येनाय जीजनम् । वस्वः कुविद्वनाति नः ॥ (७–१५–४)

स्पार्हा यस्य श्रियो दृशे रयिवीरवतो यथा । अग्रे यज्ञस्य शोचतः ॥ (७–१५–५)

सेमां वेतु वषट्कृतिमग्निर्जुषत नो गिरः । यजिष्ठो हव्यवाहनः ॥ (७–१५–६)

नि त्वा नक्ष्य विश्पते द्युमन्तं देव धीमहि । सुवीरमग्न आहुत ॥ (७–१५–७)

क्षप उस्रश्च दीदिहि स्वग्नयस्त्वया वयम् । सुवीरस्त्वमस्मयुः ॥ (७–१५–८)

उप त्वा सातये नरो विप्रासो यन्ति धीतिभिः । उपाक्षरा सहस्रिणी ॥ (७–१५–९)

अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्यः ॥ (७–१५–१०)

स नो राधांस्या भरेशानः सहसो यहो । भगश्च दातु वार्यम् ॥ (७–१५–११)

त्वमग्ने वीरवद्यशो देवश्च सविता भगः । दितिश्च दाति वार्यम् ॥ (७–१५–१२)

अग्ने रक्षा णो अंहसः प्रति ष्म देव रीषतः । तपिष्ठैरजरो दह ॥ (७–१५–१३)

अधा मही न आयस्यनाधृष्टो नृपीतये । पूर्भवा शतभुजिः ॥ (७–१५–१४)

त्वं नः पाह्यंहसो दोषावस्तरघायतः । दिवा नक्तमदाभ्य ॥ (७–१५–१५)

त्वमग्ने यज्ञानां होता विश्वेषां हितः । देवेभिर्मानुषे जने ॥ (६–१६–१)

स नो मन्द्राभिरध्वरे जिह्वाभिर्यजा महः । आ देवान्वक्षि यक्षि च ॥ (६–१६–२)

वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसा । अग्ने यज्ञेषु सुक्रतो ॥ (६–१६–३)

त्वामीळे अध द्विता भरतो वाजिभिः शुनम् । ईजे यज्ञेषु यज्ञियम् ॥ (६–१६–४)

त्वमिमा वार्या पुरु दिवोदासाय सुन्वते । भरद्वाजाय दाशुषे ॥ (६–१६–५)

त्वं दूतो अमर्त्य आ वहा दैव्यं जनम् । शृण्वन्विप्रस्य सुष्टुतिम् ॥ (६–१६–६)

त्वामग्ने स्वाध्यो मर्तासो देववीतये । यज्ञेषु देवमीळते ॥ (६–१६–७)

तव प्र यक्षि संदृशमुत क्रतुं सुदानवः । विश्वे जुषन्त कामिनः ॥ (६–१६–८)

त्वं होता मनुर्हितो वह्निरासा विदुष्टरः । अग्ने यक्षि दिवो विशः ॥ (६–१६–९)

अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥ (६–१६–१०)

तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ॥ (६–१६–११)

स नः पृथु श्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्यम् ॥ (६–१६–१२)

त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः ॥ (६–१६–१३)

तमु त्वा दध्यङ्ङ् ऋषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरंदरम् ॥ (६–१६–१४)

तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनंजयं रणे रणे ॥ (६–१६–१५)

एह्यू ऊ षु ब्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्धास इन्दुभिः ॥ (६–१६–१६)

यत्र क्व च ते मनो दक्षं दधस उत्तरम् । तत्रा सदः कृणवसे ॥ (६–१६–१७)

नहि ते पूर्तमक्षिपद्भुवन्नेमानां वसो । अथा दुवो वनवसे ॥ (६–१६–१८)

आग्निरगामि भारतो वृत्रहा पुरुचेतनः । दिवोदासस्य सत्पतिः ॥ (६–१६–१९)

स हि विश्वाति पार्थिवा रयिं दाशन्महित्वना । वन्वन्न अवातो अस्तृतः ॥ (६–१६–२०)

स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता । बृहत्ततन्थ भानुना ॥ (६–१६–२१)

प्र वः सखायो अग्नये स्तोमं यज्ञं च धृष्णुया । अर्च गाय च वेधसे ॥ (६–१६–२२)

स हि यो मानुषा युगा सीदद्धोता कविक्रतुः । दूतश्च हव्यवाहनः ॥ (६–१६–२३)

ता राजाना शुचिव्रतादित्यान्मारुतं गणम् । वसो यक्षीह रोदसी ॥ (६–१६–२४)

वस्वी ते अग्ने संदृष्टिरिषयते मर्त्याय । ऊर्जो नपादमृतस्य ॥ (६–१६–२५)

क्रत्वा दा अस्तु श्रेष्ठोऽद्य त्वा वन्वन्सुरेक्णाः । मर्त आनाश सुवृक्तिम् ॥ (६–१६–२६)

ते ते अग्ने त्वोता इषयन्तो विश्वमायुः ।

तरन्तो अर्यो अरातीर्वन्वन्तो अर्यो अरातीः ॥ (६–१६–२७)

अग्निस्तिग्मेन शोचिषा यासद्विश्वं न्यत्रिणम् । अग्निनी वनते रयिम् ॥ (६–१६–२८)

सुवीरं रयिमा भर जातवेदो विचर्षणे । जहि रक्षांसि सुक्रतो ॥ (६–१६–२९)

त्वं नः पाह्यंहसो जातवेदो अघायतः । रक्षा णो ब्रह्मणस्कवे ॥ (६–१६–३०)

यो नो अग्ने दुरेव आ मर्तो वधाय दाशति । तस्मान्नः पाह्यंहसः ॥ (६–१६–३१)

त्वं तं देव जिह्वया परि बाधस्व दुष्कृतम् । मर्तो यो नो जिघांसति ॥ (६–१६–३२)

भरद्वाजाय सप्रथः शर्म यच्छ सहन्त्य । अग्ने वरेण्यं वसु ॥ (६–१६–३३)

अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः ॥ (६–१६–३४)

गर्भे मातुः पितुष् पिता विदिद्युतानो अक्षरे । सीदन्न ऋतस्य योनिमा ॥ (६–१६–३५)

ब्रह्म प्रजावदा भर जातवेदो विचर्षणे । अग्ने यद्दीदयद्दिवि ॥ (६–१६–३६)

उप त्वा रण्वसंदृशं प्रयस्वन्तः सहस्कृत । अग्ने ससृज्महे गिरः ॥ (६–१६–३७)

उप च्छायामिव घृणेरगन्म शर्म ते वयम् । अग्ने हिरण्यसंदृशः ॥ (६–१६–३८)

य उग्र इव शर्यहा तिग्मशृङ्गो न वंसगः । अग्ने पुरो रुरोजिथ ॥ (६–१६–३९)

आ यं हस्ते न खादिनं शिशुं जातं न बिभ्रति । विशामग्निं स्वध्वरम् ॥ (६–१६–४०)

प्र देवं देववीतये भरता वसुवित्तमम् । आ स्वे योनौ नि षीदतु ॥ (६–१६–४१)

आ जातं जातवेदसि प्रियं शिशीतातिथिम् । स्योन आ गृहपतिम् ॥ (६–१६–४२)

अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्ति मन्यवे ॥ (६–१६–४३)

अच्छा नो याह्या वहाभि प्रयांसि वीतये । आ देवान्सोमपीतये ॥ (६–१६–४४)

उदग्ने भारत द्युमदजस्रेण दविद्युतत् । शोचा वि भाह्यजर ॥ (६–१६–४५)

अग्ने हंसि न्यत्रिणं दीद्यन्मर्त्येष्वा । स्वे क्षये शुचिव्रत ॥ (१०–११८–१)

उत्तिष्ठसि स्वाहुतो घृतानि प्रति मोदसे । यत्त्वा स्रुचः समस्थिरन् ॥ (१०–११८–२)

स आहुतो वि रोचतेऽग्निरीळेन्यो गिरा । स्रुचा प्रतीकमज्यते ॥ (१०–११८–३)

घृतेनाग्निः समज्यते मधुप्रतीक आहुतः । रोचमानो विभावसुः ॥ (१०–११८–४)

जरमाणः समिध्यसे देवेभ्यो हव्यवाहन । तं त्वा हवन्त मर्त्याः ॥ (१०–११८–५)

तं मर्ता अमर्त्यं घृतेनाग्निं सपर्यत । अदाभ्यं गृहपतिम् ॥ (१०–११८–६)

अदाभ्येन शोचिषाग्ने रक्षस्त्वं दह । गोपा ऋतस्य दीदिहि ॥ (१०–११८–७)

स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः । उरुक्षयेषु दीद्यत् ॥ (१०–११८–८)

तं त्वा गीर्भिरुरुक्षया हव्यवाहं समीधिरे । यजिष्ठं मानुषे जने ॥ (१०–११८–९)

अग्निं हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु । तेन जेष्म धनं धनम् ॥ (१०–१५६–१)

यया गा आकरामहे सेनयाग्ने तवोत्या । तां नो हिन्व मघत्तये ॥ (१०–१५६–२)

आग्ने स्थूरं रयिं भर पृथुं गोमन्तमश्विनम् । अङ्धि खं वर्तया पणिम् ॥ (१०–१५६–३)

अग्ने नक्षत्रमजरमा सूर्यं रोहयो दिवि । दधज्ज्योतिर्जनेभ्यः ॥ (१०–१५६–४)

अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत् । बोधा स्तोत्रे वयो दधत् ॥ (१०–१५६–५)

प्राग्नये वाचमीरय वृषभाय क्षितीनाम् । स नः पर्षदति द्विषः ॥ (१०–१८७–१)

यः परस्याः परावतस्तिरो धन्वातिरोचते । स नः पर्षदति द्विषः ॥ (१०–१८७–२)

यो रक्षांसि निजूर्वति वृषा शुक्रेण शोचिषा । स नः पर्षदति द्विषः ॥ (१०–१८७–३)

यो विश्वाभि विपश्यति भुवना सं च पश्यति । स नः पर्षदति द्विषः ॥ (१०–१८७–४)

यो अस्य पारे रजसः शुक्रो अग्निरजायत । स नः पर्षदति द्विषः ॥ (१०–१८७–५)

प्र नूनुाातवेदसमश्वं हिनोत वाजिनम् । इदं नो बर्हिरासदे ॥ (१०–१८८–१)

अस्य प्र जातवेदसो विप्रवीरस्य मीळ्हुषः । महीमियर्मि सुष्टुतिम् ॥ (१०–१८८–२)

या रुचो जातवेदसो देवत्रा हव्यवाहनीः । ताभिनी यज्ञमिन्वतु ॥ (१०–१८८–३)

इमां मे अग्ने समिधमिमामुपसदं वनेः । इमा उ षु श्रुधी गिरः ॥ (२–६–१)

अया ते अग्ने विधेमोर्जो नपादश्वमिष्टे । एना सूक्तेन सुजात ॥ (२–६–२)

तं त्वा गीर्भिर् गिर्वणसं द्रविणस्युं द्रविणोदः । सपर्येम सपर्यवः ॥ (२–६–३)

स बोधि सूरिर्मघवा वसुपते वसुदावन् । युयोध्यस्मद् द्वेषांसि ॥ (२–६–४)

स नो वृष्टिं दिवस्परि स नो वाजमनर्वाणम् । स नः सहस्रिणीरिषः ॥ (२–६–५)

ईळानायावस्यवे यविष्ठ दूत नो गिरा । यजिष्ठ होतरा गहि ॥ (२–६–६)

अन्तर् ह्यग्न ईयसे विद्वाञ्जन्मोभया कवे । दूतो जन्येव मित्र्यः ॥ (२–६–७)

स विद्वाँ आ च पिप्रयो यक्षि चिकित्व आनुषक् । आ चास्मिन्सत्सि बर्हिषि ॥ (२–६–८)

श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा भर । वसो पुरुस्पृहं रयिम् ॥ (२–७–१)

मा नो अरातिरीशत देवस्य मर्त्यस्य च । पर्षि तस्या उत द्विषः ॥ (२–७–२)

विश्वा उत त्वया वयं धारा उदन्या इव । अति गाहेमहि द्विषः ॥ (२–७–३)

शुचिः पावक वन्द्योऽग्ने बृहद्वि रोचसे । त्वं घृतेभिराहुतः ॥ (२–७–४)

त्वं नो असि भारताग्ने वशाभिरुक्षभिः । अष्टापदीभिराहुतः ॥ (२–७–५)

द्र्वन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः ॥ (२–७–६)

वाजयन्निव नू रथान्योगाँ अग्नेरुप स्तुहि । यशस्तमस्य मीळ्हुषः ॥ (२–८–१)

यः सुनीथो ददाशुषेऽजुर्यो जरयन्न अरिम् । चारुप्रतीक आहुतः ॥ (२–८–२)

य उ श्रिया दमेष्वा दोषोषसि प्रशस्यते । यस्य व्रतं न मीयते ॥ (२–८–३)

आ यः स्वर्ण भानुना चित्रो विभात्यर्चिषा । अञ्जानो अजरैरभि ॥ (२–८–४)

अत्रिमनु स्वराज्यमग्निमुक्थानि वावृधुः । विश्वा अधि श्रियो दधे ॥ (२–८–५)

आनुष्टुभम्

त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत । यजा स्वध्वरं जनं मनुजातं घृतप्रुषो३ं

श्रुष्टीवानो हि दाशुषे देवा अग्ने विचेतसः । तान् रोहिदश्व गिर्वणस्त्रयस्त्रिंशतमा वहो३ं

प्रियमेधवदत्रिवज् जातवेदो विरूपवत् । अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवो३ं

महिकेरव ऊतये प्रियमेधा अहूषत । राजन्तमध्वराणामग्निं शुक्रेण शोचिषो३ं

घृताहवन सन्त्येमा उ षु श्रुधी गिरः । याभिः कण्वस्य सूनवो हवन्तेऽवसे त्वो३ं

त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोहळवो३ं

नि त्वा होतारमृत्विजं दधिरे वसुवित्तमम् । श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषो३म्

आ त्वा विप्रा अचुच्यवुः सुतसोमा अभि प्रयः । बृहद् भा बिभ्रतो हविरग्ने मर्ताय दाशुषो३ं

प्रातर्याव्णः सहस्कृत सोमपेयाय सन्त्य । इहाद्य दैव्यं जनं बर्हिरा सादया वसो३म् [१ ।४५ ।१–९] [७२]

त्वं हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे ।

त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥ (६–२–१)

त्वां हि ष्मा चर्षणयो यज्ञेभिर्गीर्भिरीळते ।

त्वां वाजी यात्यवृको रजस्तूर्विश्वचर्षणिः ॥ (६–२–२)

सजोषस्त्वा दिवो नरो यज्ञस्य केतुमिन्धते ।

यद्ध स्य मानुषो जनः सुम्नायुर्जुह्वे अध्वरे ॥ (६–२–३)

ऋधद्यस्ते सुदानवे धिया मर्तः शशमते ।

ऊती ष बृहतो दिवो द्विषो अंहो न तरति ॥ (६–२–४)

समिधा यस्त आहुतिं निशितिं मर्त्यो नशत् ।

वयावन्तं स पुष्यति क्षयमग्ने शतायुषम् ॥ (६–२–५)

त्वेषस्ते धूम ऋण्वति दिवि षञ् च्छुक्र आततः ।

सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥ (६–२–६)

अधा हि विक्ष्व् ईड्योऽसि प्रियो नो अतिथिः ।

रण्वः पुरीव जूर्यः सूनुर्न त्रययाय्यः ॥ (६–२–७)

क्रत्वा हि द्रोणे अज्यसेऽग्ने वाजी न कृत्व्यः ।

परिज्मेव स्वधा गयोऽत्यो न ह्वार्यः शिशुः ॥ (६–२–८)

त्वं त्या चिदच्युताग्ने पशुर्न यवसे ।

धामा ह यत्ते अजर वना वृश्चन्ति शिक्वसः ॥ (६–२–९)

वेषि ह्यध्वरीयतामग्ने होता दमे विशाम् ।

समृधो विश्पते कृणु जुषस्व हव्यमङ्गिरः ॥ (६–२–१०)

अग्ना यो मर्त्यो दुवो धियुञ्जोष धीतिभिः ।

भसन्नु ष प्र पूर्व्य इषं वुरीतावसे ॥ (६–१४–१)

अग्निरिद्धि प्रचेता अग्निर्वेधस्तम ऋषिः ।

अग्निं होतारमीळते यज्ञेषु मनुषो विशः ॥ (६–१४–२)

नाना ह्यग्नेऽवसे स्पर्धन्ते रायो अर्यः ।

तूर्वन्तो दस्युमायवो व्रतैः सीक्षन्तो अव्रतम् ॥ (६–१४–३)

अग्निरप्सामृतीषहं वीरं ददाति सत्पतिम् ।
यस्य त्रसन्ति शवसः संचक्षि शत्रवो भिया ॥ (६–१४–४)
अग्निर्हि विद्मना निदो देवो मर्तमुरुष्यति ।
सहावा यस्यावृतो रयिर्वाजेष्ववृतः ॥ (६–१४–५)
होताजनिष्ट चेतनः पिता पितृभ्य ऊतये ।
प्रयक्षञ्जेन्यं वसु शकेम वाजिनो यमम् ॥ (२–५–१)
आ यस्मिन्सप्त रश्मयस्तता यज्ञस्य नेतरि ।
मनुष्वद्दैव्यमष्टमं पोता विश्वं तदिन्वति ॥ (२–५–२)
दधन्वे वा यदीमनु वोचद्ब्रह्माणि वेरु तत् ।
परि विश्वानि काव्या नेमिश्चक्रमिवाभवत् ॥ (२–५–३)
साकं हि शुचिना शुचिः प्रशास्ता क्रतुनाजनि ।
विद्वाँ अस्य व्रता ध्रुवा वया इवानु रोहते ॥ (२–५–४)
ता अस्य वर्णमायुवो नेष्टुः सचन्त धेनवः ।
कुवित्तिसृभ्य आ वरं स्वसारो या इदं ययुः ॥ (२–५–५)
यदी मातुरुप स्वसा घृतं भरन्त्यस्थित ।
तासामध्वर्युरागतौ यवो वृष्टीव मोदते ॥ (२–५–६)
स्वः स्वाय धायसे कृणुतामृत्विग् ऋत्विजम् ।
स्तोमं यज्ञं चादरं वनेमा ररिमा वयम् ॥ (२–५–७)
यथा विद्वाँ अरं करद्विश्वेभ्यो यजतेभ्यः ।
अयमग्ने त्वे अपि यं यज्ञं चकृमा वयम् ॥ (२–५–८)
प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै ।
गमद्देवेभिरा स नो यजिष्ठो बर्हिरा सदत् ॥ (३–१३–१)
ऋतावा यस्य रोदसी दक्षं सचन्त ऊतयः ।
हविष्मन्तस्तमीळते तं सनिष्यन्तोऽवसे ॥ (३–१३–२)
स यन्ता विप्र एषां स यज्ञानामथा हि षः ।
अग्निं तं वो दुवस्यत दाता यो वनिता मघम् ॥ (३–१३–३)
स नः शर्माणि वीतयेऽग्निर्यच्छतु शंतमा ।
यतो नः प्रुष्णवद्वसु दिवि क्षितिभ्यो अप्स्वा ॥ (३–१३–४)
दीदिवांसमपूर्व्यं वस्वीभिरस्य धीतिभिः ।

ऋक्वाणो अग्निमिन्धते होतारं विश्पतिं विशाम् ॥ (३-१३-५)

उत नो ब्रह्मन्न अविष उक्थेषु देवहूतमः ।

शं नः शोचा मरुद्वृधोऽग्ने सहस्रसातमः ॥ (३-१३-६)

नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु ।

द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम् ॥ (३-१३-७)

अग्ने कदा त आनुषग्भुवद्देवस्य चेतनम् ।

अधा हि त्वा जगृभ्रिरे मर्तासो विक्ष्व् ईड्यम् ॥ (४-७-२)

ऋतावानं विचेतसं पश्यन्तो द्यामिव स्तृभिः ।

विश्वेषामध्वराणां हस्कर्तारं दमे दमे ॥ (४-७-३)

आशुं दूतं विवस्वतो विश्वा यश्चर्षणीरभि ।

आ जभ्रुः केतुमायवो भृगवाणं विशे विशे ॥ (४-७-४)

तमीं होतारमानुषक्चिकित्वांसं नि षेदिरे ।

रण्वं पावकशोचिषं यजिष्ठं सप्त धामभिः ॥ (४-७-५)

त्वश्वतीषु मातृषु वन आ वीतमश्रितम् ।

चित्रं सन्तं गुहा हितं सुवेदं कूचिदर्थिनम् ॥ (४-७-६)

सखायः सं वः सम्यञ्चमिषं स्तोमं चाग्नये ।

वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥ (५-७-१)

कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने ।

अर्हन्तश्चिद्यमिन्धते संजनयन्ति जन्तवः ॥ (५-७-२)

सं यदिषो वनामहे सं हव्या मानुषाणाम् ।

उत द्युम्नस्य शवस ऋतस्य रश्मिमा ददे ॥ (५-७-३)

स स्मा कृणोति केतुमा नक्तं चिद्दूर आ सते ।

पावको यद्वनस्पतीन्प्र स्मा मिनात्यजरः ॥ (५-७-४)

अव स्म यस्य वेषणे स्वेदं पथिषु जुह्वति ।

अभीमह स्वजेन्यं भूमा पृष्ठेव रुरुहुः ॥ (५-७-५)

यं मर्त्यः पुरुस्पृहं विदद्विश्वस्य धायसे ।

प्र स्वादनं पितूनामस्ततातिं चिदायवे ॥ (५-७-६)

स हि ष्मा धन्वाक्षितं दाता न दात्या पशुः ।

हिरिश्मश्रुः शुचिदन्न ऋभुरनिभृष्टतविषिः ॥ (५-७-७)

शुचिः ष्मा यस्मा अत्रिवत्प्र स्वधितीव रीयते ।
सुषूरसूत माता क्राणा यदानशे भगम् ॥ (५–७–८)
आ यस्ते सर्पिरासुतेऽग्ने शमस्ति धायसे ।
ऐषु द्युम्नमुत श्रव आ चित्तं मर्त्येषु धाः ॥ (५–७–९)
इति चिन्मन्युमध्रिजस्त्वादातमा पशुं ददे ।
आदग्ने अपृणतोऽत्रिः सासह्याद्दस्यूनिषः सासह्यान्नॄन् ॥ (५–७–१०)
त्वामग्ने हविष्मन्तो देवं मर्तास ईळते ।
मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक् ॥ (५–९–१)
अग्निर्होता दास्वतः क्षयस्य वृक्तबर्हिषः ।
सं यज्ञासश्चरन्ति यं सं वाजासः श्रवस्यवः ॥ (५–९–२)
उत स्म यं शिशुं यथा नवं जनिष्टारणी ।
धर्तारं मानुषीणां विशामग्निं स्वध्वरम् ॥ (५–९–३)
उत स्म दुर्गृभीयसे पुत्रो न ह्वार्याणाम् ।
पुरू यो दग्धासि वनाग्ने पशुर्न यवसे ॥ (५–९–४)
अध स्म यस्यार्चयः सम्यक्संयन्ति धूमिनः ।
यदीमह त्रितो दिव्युप ध्मातेव धमति शिशीते ध्मातरी यथा ॥ (५–९–५)
तवाहमग्न ऊतिभिर्मित्रस्य च प्रशस्तिभिः ।
द्वेषोयुतो न दुरिता तुर्याम मर्त्यानाम् ॥ (५–९–६)
तं नो अग्ने अभी नरो रयिं सहस्व आ भर ।
स क्षेपयत्स पोषयद्भुवद्वाजस्य सातय उतैधि पृत्सु नो वृधे ॥ (५–९–७)
अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो ।
प्र नो राया परीणसा रत्सि वाजाय पन्थाम् ॥ (५–१०–१)
त्वं नो अग्ने अद्भुत क्रत्वा दक्षस्य मंहना ।
त्वे असुर्यमारुहत् क्राणा मित्रो न यज्ञियः ॥ (५–१०–२)
त्वं नो अग्न एषां गयं पुष्टिं च वर्धय ।
ये स्तोमेभिः प्र सूरयो नरो मघान्यानशुः ॥ (५–१०–३)
ये अग्ने चन्द्र ते गिरः शुम्भन्त्यश्वराधसः ।
शुष्मेभिः शुष्मिणो नरो दिवश्चिद्येषां बृहत्सुकीर्तिर्बोधति त्मना ॥ (५–१०–४)
तव त्ये अग्ने अर्चयो भ्राजन्तो यन्ति धृष्णुया ।

परिज्मानो न विद्युतः स्वानो रथो न वाजयुः ॥ (५–१०–५)

नू नो अग्न ऊतये सबाधसश्च रातये ।

अस्माकासश्च सूरयो विश्वा आशास्तरीषणि ॥ (५–१०–६)

त्वं नो अग्ने अङ्गिर स्तुत स्तवान आ भर ।

होतर्विभ्वासहं रयिं स्तोतृभ्य स्तवसे च न उतैधि पृत्सु नो वृधे ॥ (५–१०–७)

बृहद्वयो हि भानवेऽर्चा देवायाग्नये ।

यं मित्रं न प्रशस्तिभिर्मर्तासो दधिरे पुरः ॥ (५–१६–१)

स हि द्युभिर्जनानां होता दक्षस्य बाह्वोः ।

वि हव्यमग्निरानुषग्भगो न वारमृण्वति ॥ (५–१६–२)

अस्य स्तोमे मघोनः सख्ये वृद्धशोचिषः ।

विश्वा यस्मिन्तुविष्वणि समर्ये शुष्ममादधुः ॥ (५–१६–३)

अधा ह्यग्न एषां सुवीर्यस्य मंहना ।

तमिद्यह्वं न रोदसी परि श्रवो बभूवतुः ॥ (५–१६–४)

नू न एहि वार्यमग्ने गृणान आ भर ।

ये वयं ये च सूरयः स्वस्ति धामहे सचोतैधि पृत्सु नो वृधे ॥ (५–१६–५)

आ यज्ञैर्देव मर्त्य इत्था तव्यांसमूतये ।

अग्निं कृते स्वध्वरे पूरुरीळीतावसे ॥ (५–१७–१)

अस्य हि स्वयशस्तर आसा विधर्मन्मन्यसे ।

तं नाकं चित्रशोचिषं मन्द्रं परो मनीषया ॥ (५–१७–२)

अस्य वासा उ अर्चिषा य आयुक्त तुजा गिरा ।

दिवो न यस्य रेतसा बृहच्छोचन्त्यर्चयः ॥ (५–१७–३)

अस्य क्रत्वा विचेतसो दस्मस्य वसु रथ आ ।

अधा विश्वासु हव्योऽग्निर्विक्षु प्र शस्यते ॥ (५–१७–४)

नू न इद्धि वार्यमासा सचन्त सूरयः ।

ऊर्जो नपादभिष्टये पाहि शग्धि स्वस्तय उतैधि पृत्सु नो वृधे ॥ (५–१७–५)

प्रातरग्निः पुरुप्रियो विश स्तवेतातिथिः ।

विश्वानि यो अमर्त्यो हव्या मर्तेषु रण्यति ॥ (५–१८–१)

द्विताय मृक्तवाहसे स्वस्य दक्षस्य मंहना ।

इन्दुं स धत्त आनुषक् स्तोता चित्ते अमर्त्य ॥ (५–१८–२)

तं वो दीर्घायुशोचिषं गिरा हुवे मघोनाम् ।
अरिष्टो येषां रथो व्यश्वदावन्न ईयते ॥ (५–१८–३)
चित्रा वा येषु दीधितिरासन्नुक्था पान्ति ये ।
स्तीर्णं बर्हिः स्वर्णरे श्रवांसि दधिरे परि ॥ (५–१८–४)
ये मे पञ्चाशतं ददुरश्वानां सधस्तुति ।
द्युमदग्ने महि श्रवो बृहत्कृधि मघोनां नृवदमृत नृणाम् ॥ (५–१८–५)
यमग्ने वाजसातम त्वं चिन्मन्यसे रयिम् ।
तं नो गीर्भिः श्रवाय्यं देवत्रा पनया युजम् ॥ (५–२०–१)
ये अग्ने नेरयन्ति ते वृद्धा उग्रस्य शवसः ।
अप द्वेषो अप ह्वरोऽन्यव्रतस्य सश्चिरे ॥ (५–२०–२)
होतारं त्वा वृणीमहेऽग्ने दक्षस्य साधनम् ।
यज्ञेषु पूर्व्यं गिरा प्रयस्वन्तो हवामहे ॥ (५–२०–३)
इत्था यथा त ऊतये सहसावन् दिवे दिवे ।
राय ऋताय सुक्रतो गोभिः ष्याम सधमादो वीरैः स्याम सधमादः ॥ (५–२०–४)
मनुष्वत्त्वा नि धीमहि मनुष्वत्समिधीमहि ।
अग्ने मनुष्वदङ्गिरो देवान्देवयते यज ॥ (५–२१–१)
त्वं हि मानुषे जनेऽग्ने सुप्रीत इध्यसे ।
स्रुचस्त्वा यन्त्यानुषक्सुजात सर्पिरासुते ॥ (५–२१–२)
त्वां विश्वे सजोषसो देवासो दूतमक्रत ।
सपर्यन्तस्त्वा कवे यज्ञेषु देवमीळते ॥ (५–२१–३)
देवं वो देवयज्ययाग्निमीळीत मर्त्यः ।
समिद्धः शुक्र दीदिह्य् ऋतस्य योनिमासदः ससस्य योनिमासदः ॥ (५–२१–४)
प्र विश्वसामन्न अत्रिवदर्चा पावकशोचिषे ।
यो अध्वरेष्व् ईड्यो होता मन्द्रतमो विशि ॥ (५–२२–१)
न्यग्निाातवेदसं दधाता देवमृत्विजम् ।
प्र यज्ञ एत्वानुषगद्या देवव्यचस्तमः ॥ (५–२२–२)
चिकित्विन्मनसं त्वा देवं मर्तास ऊतये ।
वरेण्यस्य तेऽवस इयानासो अमन्महि ॥ (५–२२–३)
अग्ने चिकिद्ध्यस्य न इदं वचः सहस्य ।

तं त्वा सुशिप्र दम्पते स्तोमैर्वर्धन्त्यत्रयो गीर्भिः शुम्भन्त्यत्रयः ॥ (५–२२–४)

अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम् ।

विश्वा यश्चर्षणीरभ्यासा वाजेषु सासहत् ॥ (५–२३–१)

तमग्ने पृतनाषहं रयिं सहस्व आ भर ।

त्वं हि सत्यो अद्भुतो दाता वाजस्य गोमतः ॥ (५–२३–२)

विश्वे हि त्वा सजोषसो जनासो वृक्तबर्हिषः ।

होतारं सद्मसु प्रियं व्यन्ति वार्या पुरु ॥ (५–२३–३)

स हि ष्मा विश्वचर्षणिरभिमाति सहो दधे ।

अग्न एषु क्षयेष्वा रेवन्नः शुक्र दीदिहि द्युमत्पावक दीदिहि ॥ (५–२३–४)

अच्छा वो अग्निमवसे देवं गासि स नो वसुः ।

रासत्पुत्र ऋषूणामृतावा पर्षति द्विषः ॥ (५–२५–१)

स हि सत्यो यं पूर्वे चिद्देवासश्चिद्यमीधिरे ।

होतारं मन्द्रजिह्वमित्सुदीतिभिर्विभावसुम् ॥ (५–२५–२)

स नो धीती वरिष्ठया श्रेष्ठया च सुमत्या ।

अग्ने रायो दिदीहि नः सुवृक्तिभिर्वरेण्य ॥ (५–२५–३)

अग्निर्देवेषु राजत्यग्निर्मर्तेष्वाविशन् ।

अग्निनी हव्यवाहनोऽग्निं धीभिः सपर्यत ॥ (५–२५–४)

अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् ।

अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥ (५–२५–५)

अग्निर्ददाति सत्पतिं सासाह यो युधा नृभिः ।

अग्निरत्यं रघुष्यदं जेतारमपराजितम् ॥ (५–२५–६)

यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो ।

महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥ (५–२५–७)

तव द्युमन्तो अर्चयो ग्रावेवोच्यते बृहत् ।

उतो ते तन्यतुर्यथा स्वानो अर्त त्मना दिवः ॥ (५–२५–८)

एवाँ अग्निं वसूयवः सहसानं ववन्दिम ।

स नो विश्वा अति द्विषः पर्षन्नावेव सुक्रतुः ॥ (५–२५–९)

त्रैष्टुभम्

अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छो३म्
अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।
समिद्धस्य रुशददर्शि पाजो महान् देवस्तमसो निरमोचो३ं
यदीं गणस्य रशनामजीगः शुचिरङ्क्ते शुचिभिर्गोभिरग्निः ।
आद् दक्षिणा युज्यते वाजयन्त्युत्तानामूर्ध्वो अधयज्जुहूभो३म्
अग्निमच्छा देवयतां मनांसि चक्षूंषीव सूर्ये सं चरन्ति ।
यदीं सुवाते उषसा विरूपे श्वेतो वाजी जायते अग्रे अह्नो३ं
जनिष्ट हि जेन्यो अग्रे अह्नां हितो हितेष्वरुषो वनेषु ।
दमेदमे सप्त रत्ना दधानोऽग्निर्होता नि षसादा यजीयो३म्
अग्निर्होता न्यसीदद् यजीयानुपस्थे मातुः सुरभा उ लोके ।
युवा कविः पुरुनिःष्ठ ऋतावा धर्ता कृष्टीनामुत मध्य इद्धो३ं
प्र णु त्यं विप्रमध्वरेषु साधुमग्निं होतारमीळते नमोभिः ।
आ यस्ततान रोदसी ऋतेन नित्यं मृजन्ति वाजिनं घृतेनो३ं
मार्जाल्यो मृज्यते स्वे दमूनाः कविप्रशस्तो अतिथिः शिवो नः ।
सहस्रशृङ्गो वृषभस्तदोजा विश्वाँ अग्ने सहसा प्रास्यन्यो३ं
प्र सद्यो अग्ने अत्येष्यन्यानाविर्यस्मै चारुतमो बभूथ ।
ईळेन्यो वपुष्यो विभावा प्रियो विशामतिथिर्मानुषीणो३ं
तुभ्यं भरन्ति क्षितयो यविष्ठ बलिमग्ने अन्तित ओत दूरात् ।
आ भन्दिष्ठस्य सुमतिं चिकिद्धि बृहत् ते अग्ने महि शर्म भद्रो३म्
आद्य रथं भानुमो भानुमन्तमग्ने तिष्ठ यजतेभिः समन्तम् ।
विद्वान् पथीनामुर्व१न्तरिक्षमेह देवान् हविरद्याय वक्षो३म्
अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे ।
गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुरुव्यञ्चमश्रो३म् [५ ।१ ।१–१२] [८४]
कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे ।
अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ ॥ (५–२–१)
कमेतं त्वं युवते कुमारं पेषी बिभर्षि महिषी जजान ।
पूर्वीर्हि गर्भः शरदो ववर्धापश्युाातं यदसूत माता ॥ (५–२–२)
हिरण्यदन्त्खुचिवर्णमारात्क्षेत्रादपश्यमायुधा मिमानम् ।

ददानो अस्मा अमृतं विपृक्वत्किं मामनिन्द्राः कृणवन्न अनुक्थाः ॥ (५–२–३)

क्षेत्रादपश्यं सनुतश्चरन्तं सुमद्यूथं न पुरु शोभमानम् ।

न ता अगृभ्रन्न अजनिष्ट हि षः पलिक्नीरिद्युवतयो भवन्ति ॥ (५–२–४)

के मे मर्यकं वि यवन्त गोभिर्न येषां गोपा अरणश्चिदास ।

य ईं जगृभुरव ते सृजन्त्वाजाति पश्व उप नश्चिकित्वान् ॥ (५–२–५)

वसां राजानं वसतिं जनानामरातयो नि दधुर्मर्त्येषु ।

ब्रह्माण्यत्रेरव तं सृजन्तु निन्दितारो निन्द्यासो भवन्तु ॥ (५–२–६)

शुनश्चिच्छेपं निदितं सहस्राद्यूपादमुञ्चो अशमिष्ट हि षः ।

एवास्मदग्ने वि मुमुग्धि पाशान्होतश्चिकित्व इह तू निषद्य ॥ (५–२–७)

ाणीयमानो अप हि मद्येयेः प्र मे देवानां व्रतपा उवाच ।

इन्द्रो विद्वाँ अनु हि त्वा चचक्ष तेनाहमग्ने अनुशिष्ट आगाम् ॥ (५–२–८)

वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा ।

प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥ (५–२–९)

उत स्वानासो दिवि षन्त्वग्नेस्तिग्मायुधा रक्षसे हन्तवा उ ।

मदे चिदस्य प्र रुजन्ति भामा न वरन्ते परिबाधो अदेवीः ॥ (५–२–१०)

एतं ते स्तोमं तुविजात विप्रो रथं न धीरः स्वपा अतक्षम् ।

यदीदग्ने प्रति त्वं देव हर्याः स्वर्वतीरप एना जयेम ॥ (५–२–११)

तुविग्रीवो वृषभो वावृधानोऽशत्र्वर्यः समजाति वेदः ।

इतीममग्निममृता अवोचन् बर्हिष्मते मनवे शर्म यंसद्धविष्मते मनवे शर्म यंसत् ॥ (५–२–१२)

त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत्समिद्धः ।

त्वे विश्वे सहसस्पुत्र देवास्त्वमिन्द्रो दाशुषे मर्त्याय ॥ (५–३–१)

त्वमर्यमा भवसि यत्कनीनां नाम स्वधावन्गुह्यं बिभर्षि ।

अञ्जन्ति मित्रं सुधितं न गोभिर्यद्दम्पती समनसा कृणोषि ॥ (५–३–२)

तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम् ।

पदं यद्विष्णोरुपमं निधायि तेन पासि गुह्यं नाम गोनाम् ॥ (५–३–३)

तव श्रिया सुदृशो देव देवाः पुरू दधाना अमृतं सपन्त ।

होतारमग्निं मनुषो नि षेदुर्दशस्यन्त उशिजः शंसमायोः ॥ (५–३–४)

न त्वद्धोता पूर्वो अग्ने यजीयान्न काव्यैः परो अस्ति स्वधावः ।

विशश्च यस्या अतिथिर्भवासि स यज्ञेन वनवद्देव मर्तान् ॥ (५–३–५)

वयमग्ने वनुयाम त्वोता वसूयवो हविषा बुध्यमानाः ।
वयं समर्ये विदथेष्वह्नां वयं राया सहसस्पुत्र मर्तान् ॥ (५–३–६)
यो न आगो अभ्येनो भरात्यधीदघमघशंसे दधात ।
जही चिकित्वो अभिशस्तिमेतामग्ने यो नो मर्चयति द्वयेन ॥ (५–३–७)
त्वामस्या व्युषि देव पूर्वे दूतं कृण्वाना अयजन्त हव्यैः ।
संस्थे यदग्न ईयसे रयीणां देवो मर्तैर्वसुभिरिध्यमानः ॥ (५–३–८)
अव स्पृधि पितरं योधि विद्वान्पुत्रो यस्ते सहसः सून ऊहे ।
कदा चिकित्वो अभि चक्षसे नोऽग्ने कदाँ ऋतचिद्यातयासे ॥ (५–३–९)
भूरि नाम वन्दमानो दधाति पिता वसो यदि तज्जोषयासे ।
कुविद्देवस्य सहसा चकानः सुम्नमग्निर्वनते वावृधानः ॥ (५–३–१०)
त्वमङ्ग जरितारं यविष्ठ विश्वान्यग्ने दुरिताति पर्षि ।
स्तेना अदृश्रन् रिपवो जनासोऽज्ञातकेता वृजिना अभूवन् ॥ (५–३–११)
इमे यामासस्त्वद्रिगभूवन्वसवे वा तदिदागो अवाचि ।
नाहायमग्निरभिशस्तये नो न रीषते वावृधानः परा दात् ॥ (५–३–१२)
त्वामग्ने वसुपतिं वसूनामभि प्र मन्दे अध्वरेषु राजन् ।
त्वया वाजं वाजयन्तो जयेमाभि ष्याम पृत्सुतीर्मर्त्यानाम् ॥ (५–४–१)
हव्यवाळग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे ।
सुगार्हपत्याः समिषो दिदीह्यस्मद्र्यक्सं मिमीहि श्रवांसि ॥ (५–४–२)
विशां कविं विश्पतिं मानुषीणां शुचिं पावकं घृतपृष्ठमग्निम् ।
नि होतारं विश्वविदं दधिध्वे स देवेषु वनते वार्याणि ॥ (५–४–३)
जुषस्वाग्न इळया सजोषा यतमानो रश्मिभिः सूर्यस्य ।
जुषस्व नः समिधं जातवेद आ च देवान्हविरद्याय वक्षि ॥ (५–४–४)
जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान् ।
विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा भोजनानि ॥ (५–४–५)
वधेन दस्युं प्र हि चातयस्व वयः कृण्वानस्तन्वे स्वायै ।
पिपर्षि यत्सहसस्पुत्र देवान्त्सो अग्ने पाहि नृतम वाजे अस्मान् ॥ (५–४–६)
वयं ते अग्न उक्थैर्विधेम वयं हव्यैः पावक भद्रशोचे ।
अस्मे रयिं विश्ववारं समिन्वास्मे विश्वानि द्रविणानि धेहि ॥ (५–४–७)
अस्माकमग्ने अध्वरं जुषस्व सहसः सूनो त्रिषधस्थ हव्यम् ।

वयं देवेषु सुकृतः स्याम शर्मणा नस्त्रिवरूथेन पाहि ॥ (५–४–८)
विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिं पर्षि ।
अग्ने अत्रिवन्नमसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ (५–४–९)
यस्त्वा ''ह्वा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि ।
जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ॥ (५–४–१०)
यस्मै त्वं सुकृते जातवेद उलोकमग्ने कृणवः स्योनम् ।
अश्विनं स पुतृणं वीरवन्तं गोमन्तं रयिंशते स्वस्ति ॥ (५–४–११)
प्राग्नये बृहते यज्ञियाय ऋतस्य वृष्णे असुराय मन्म ।
घृतं न यज्ञ आस्ये सुपूतं गिरं भरे वृषभाय प्रतीचीम् ॥ (५–१२–१)
ऋतं चिकित्व ऋतमिच्चिकिद्ध्य् ऋतस्य धारा अनु तृन्धि पूर्वीः ।
नाहं यातुं सहसा न द्वयेन ऋतं सपाम्यरुषस्य वृष्णः ॥ (५–१२–२)
कया नो अग्न ऋतयन्न ऋतेन भुवो नवेदा उचथस्य नव्यः ।
वेदा मे देव ऋतुपा ऋतूनां नाहं पतिं सनितुरस्य रायः ॥ (५–१२–३)
के ते अग्ने रिपवे बन्धनासः के पायवः सनिषन्त द्युमन्तः ।
के धासिमग्ने अनृतस्य पान्ति क आसतो वचसः सन्ति गोपाः ॥ (५–१२–४)
सखायस्ते विषुणा अग्न एते शिवासः सन्तो अशिवा अभूवन् ।
अधूर्षत स्वयमेते वचोभिर्ऋजूयते वृजिनानि ब्रुवन्तः ॥ (५–१२–५)
यस्ते अग्ने नमसा यज्ञमी ` ऋतं स पात्यरुषस्य वृष्णः ।
तस्य क्षयः पृथुरा साधुरेतु प्रसर्स्राणस्य नहुषस्य शेषः ॥ (५–१२–६)
प्र वेधसे कवये वेद्याय गिरं भरे यशसे पूर्व्याय ।
घृतप्रसत्तो असुरः सुशेवो रायो धर्ता धरुणो वस्वो अग्निः ॥ (५–१५–१)
ऋतेन ऋतं धरुणं धारयन्त यज्ञस्य शाके परमे व्योमन् ।
दिवो धर्मन् धरुणे सेदुषो नॄञ्जातैरजाताँ अभि ये ननक्षुः ॥ (५–१५–२)
अङ्होयुवस्तन्वस्तन्वते वि वयो महद्दुष्टरं पूर्व्याय ।
स संवतो नवजातस्तुतुर्यात्सिङ्हं न क्रुद्धमभितः परि ष्ठुः ॥ (५–१५–३)
मातेव यद्भरसे पप्रथानो जनंजनं धायसे चक्षसे च ।
वयो वयो जरसे यद्दधानः परि त्मना विषुरूपो जिगासि ॥ (५–१५–४)
वाजो नु ते शवसस्पात्वन्तमुरुं दोघं धरुणं देव रायः ।
पदं न तायुर्गुहा दधानो महो राये चितयन्न अत्रिमस्पः ॥ (५–१५–५)

त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेळोऽव यासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत् ॥ (४–१–४)
स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अव यक्ष्व नो वरुणं रराणो वीहि मृळीकं सुहवो न एधि ॥ (४–१–५)
अस्य श्रेष्ठा सुभगस्य संदृग् देवस्य चित्रतमा मर्त्येषु ।
शुचि घृतं न तप्तमघ्न्याया स्पार्हा देवस्य मंहनेव धेनोः ॥ (४–१–६)
त्रिरस्य ता परमा सन्ति सत्या स्पार्हा देवस्य जनिमान्यग्नेः ।
अनन्ते अन्तः परिवीत आगाच्छुचिः शुक्रो अर्यो रोरुचानः ॥ (४–१–७)
स दूतो विश्वेदभि वष्टि सद्मा होता हिरण्यरथो रंसुजिह्वः
रोहिदश्वो वपुष्यो विभावा सदा रण्वः पितुमतीव संसत् ॥ (४–१–८)
स चेतयन्मनुषो यज्ञबन्धुः प्र तं मह्या रशनया नयन्ति
स क्षेत्यस्य दुर्यासु साधन्देवो मर्तस्य सधनित्वमाप ॥ (४–१–९)
स तू नो अग्निर्नयतु प्रजानन्न अच्छा रत्नं देवभक्तं यदस्य ।
धिया यद्विश्वे अमृता अकृण्वन् द्यौष् पिता जनिता सत्यमुक्षन् ॥ (४–१–१०)
स जायत प्रथमः पस्त्यासु महो बुध्ने रजसो अस्य योनौ ।
अपादशीर्षा गुहमानो अन्तायोयुवानो वृषभस्य नीळे ॥ (४–१–११)
प्र शर्ध आर्त प्रथमं विपन्यँ ऋतस्य योना वृषभस्य नीळे ।
स्पार्हो युवा वपुष्यो विभावा सप्त प्रियासोऽजनयन्त वृष्णे ॥ (४–१–१२)
अस्माकमत्र पितरो मनुष्या अभि प्र सेदुर्ऋतमाशुषाणाः ।
अश्मव्रजाः सुदुघा वव्रे अन्तरुदुस्रा आजन्नुषसो हुवानाः ॥ (४–१–१३)
ते मर्मृजत ददृवांसो अद्रिं तद्येषामन्ये अभितो वि वोचन् ।
पश्वयन्त्रासो अभि कारमर्चन्विदन्त ज्योतिश्चकृपन्त धीभिः ॥ (४–१–१४)
ते गव्यता मनसा दृध्रमुब्धं गा येमान्परि षन्तमद्रिम् ।
दृळ्हं नरो वचसा दैव्येन व्रजं गोमन्तमुशिजो वि वव्रुः ॥ (४–१–१५)
ते मन्वत प्रथमं नाम धेनोस्त्रिः सप्त मातुः परमाणि विन्दन् ।
तज्जानतीरभ्यनूषत व्रा आविर्भुवदरुणीर्यशसा गोः ॥ (४–१–१६)
नेशत्तमो दुधितं रोचत द्यौरुद्देव्या उषसो भानुरर्त ।
आ सूर्यो बृहतस्तिष्ठदज्राँ ऋजु मर्तेषु वृजिना च पश्यन् ॥ (४–१–१७)
आदित्पश्चा बुबुधाना व्यख्यन्न आदिद्रत्नं धारयन्त द्युभक्तम् ।

विश्वे विश्वासु दुर्यासु देवा मित्र धिये वरुण सत्यमस्तु ॥ (४–१–१८)

अच्छा वोचेय शुशुचानमग्निं होतारं विश्वभरसं यजिष्ठम् ।

शुच्यूधो अतृणन्न गवामन्धो न पूतं परिषिक्तमंशोः ॥ (४–१–१९)

विश्वेषामदितिर्यज्ञियानां विश्वेषामतिथिर्मानुषाणाम् ।

अग्निर्देवानामव आवृणानः सुमृळीको भवतु जातवेदाः ॥ (४–१–२०)

यो मर्त्येष्वमृत ऋतावा देवो देवेष्वरतिर्निधायि ।

होता यजिष्ठो मह्ना शुचध्यै हव्यैरग्निर्मनुष ईरयध्यै ॥ (४–२–१)

इह त्वं सूनो सहसो नो अद्य जातो जाताँ उभयाँ अन्तरग्ने ।

दूत ईयसे युयुजान ऋष्व ऋजुमुष्कान्वृषणः शुक्रांश्च ॥ (४–२–२)

अत्या वृधस्नू रोहिता घृतस्नू ऋतस्य मन्ये मनसा जविष्ठा ।

अन्तरीयसे अरुषा युजानो युष्मांश्च देवान्विश आ च मर्तान् ॥ (४–२–३)

अर्यमणं वरुणं मित्रमेषामिन्द्राविष्णू मरुतो अश्विनोत ।

स्वश्वो अग्ने सुरथः सुराधा एदु वह सुहविषे जनाय ॥ (४–२–४)

गोमाँ अग्नेऽविमाँ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः ।

इळावाँ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः सभावान् ॥ (४–२–५)

यस्त इध्मं जभरत्सिष्विदानो मूर्धानं वा ततपते त्वाया ।

भुवस्तस्य स्वतवाँः पायुरग्ने विश्वस्मात्सीमघायत उरुष्य ॥ (४–२–६)

यस्ते भरादन्नियते चिदन्नं निशिषन्मन्द्रमतिथिमुदीरत् ।

आ देवयुरिनधते दुरोणे तस्मिन्रयिर्ध्रुवो अस्तु दास्वान् ॥ (४–२–७)

यस्त्वा दोषा य उषसि प्रशंसात्प्रियं वा त्वा कृणवते हविष्मान् ।

अश्वो न स्वे दम आ हेम्यावान्तमंहसः पीपरो दाश्वांसम् ॥ (४–२–८)

यस्तुभ्यमग्ने अमृताय दाशद्दुवस्त्वे कृणवते यतस्रुक् ।

न स राया शशमानो वि योषन्नैनमंहः परि वरदघायोः ॥ (४–२–९)

यस्य त्वमग्ने अध्वरं जुजोषो देवो मर्तस्य सुधितं रराणः ।

प्रीतेदसद्धोत्रा सा यविष्ठासाम यस्य विधतो वृधासः ॥ (४–२–१०)

चित्तिमचित्तिं चिनवद्वि विद्वान्पृष्ठेव वीता वृजिना च मर्तान् ।

राये च नः स्वपत्याय देव दितिं च रास्वादितिमुरुष्य ॥ (४–२–११)

कविं शशासुः कवयोऽदब्धा निधारयन्तो दुर्यास्वायोः ।

अतस्त्वं दृश्याँ अग्न एतान्पड्भिः पश्येरद्भुताँ अर्य एवैः ॥ (४–२–१२)

त्वमग्ने वाघते सुप्रणीतिः सुतसोमाय विधते यविष्ठ ।
रत्नं भर शशमानाय घृष्वे पृथु श्चन्द्रमवसे चर्षणिप्राः ॥ (४–२–१३)
अधा ह यद्वयमग्ने त्वाया पड्भिर्हस्तेभिश्चकृमा तनूभिः ।
रथं न क्रन्तो अपसा भुरिजोर्ऋतं येमुः सुध्य आशुषाणाः ॥ (४–२–१४)
अधा मातुरुषसः सप्त विप्रा जायेमहि प्रथमा वेधसो नॄन् ।
दिवस्पुत्रा अङ्गिरसो भवेमाद्रिं रुजेम धनिनं शुचन्तः ॥ (४–२–१५)
अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।
शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन् ॥ (४–२–१६)
सुकर्माणः सुरुचो देवयन्तोऽयो न देवा जनिमा धमन्तः ।
शुचन्तो अग्निं ववृधन्त इन्द्रमूर्वाव्यं परिषदन्तो अग्मन् ॥ (४–२–१७)
आ यूथेव क्षुमति पश्वो अख्यद्देवानां यज्जनिमान्त्युग्र ।
मर्तानां चिदुर्वशीरकृप्रन्वृधे चिदर्य उपरस्यायोः ॥ (४–२–१८)
अकर्म ते स्वपसो अभूम ऋतमवस्रन्नुषसो विभातीः ।
अनूनमग्निं पुरुधा सुश्चन्द्रं देवस्य मर्मृजतश्चारु चक्षुः ॥ (४–२–१९)
एता ते अग्न उचथानि वेधोऽवोचाम कवये ता जुषस्व ।
उच्छोचस्व कृणुहि वस्यसो नो महो रायः पुरुवार प्र यन्धि ॥ (४–२–२०)
आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः ।
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ (४–३–१)
अयं योनिश्चकृमा यं वयं ते जायेव पत्य उशती सुवासाः ।
अर्वाचीनः परिवीतो नि षीदेमा उ ते स्वपाक प्रतीचीः ॥ (४–३–२)
आशृण्वते अदृपिताय मन्म नृचक्षसे सुमृळीकाय वेधः ।
देवाय शस्तिममृताय शंस ग्रावेव सोता मधुषुद्यमीळे ॥ (४–३–३)
त्वं चिन्नः शम्या अग्ने अस्या ऋतस्य बोध्य् ऋतचित्स्वाधीः ।
कदा त उक्था सधमाद्यानि कदा भवन्ति सख्या गृहे ते ॥ (४–३–४)
कथा ह तद्वरुणाय त्वमग्ने कथा दिवे गर्हसे कन्न आगः ।
कथा मित्राय मीळ्हुषे पृथिव्यै ब्रवः कदर्यम्णे कद्भगाय ॥ (४–३–५)
कद्धिष्ण्यासु वृधसानो अग्ने कद्वाताय प्रतवसे शुभंये ।
परिज्मने नासत्याय क्षे ब्रवः कदग्ने रुद्राय नृघ्ने ॥ (४–३–६)
कथा महे पुष्टिम्भराय पूष्णे कद्रुद्राय सुमखाय हविर्दे ।

कद्विष्णव उरुगायाय रेतो ब्रवः कदग्ने शरवे बृहत्यै ॥ (४–३–७)

कथा शर्धाय मरुतामृताय कथा सूरे बृहते पृच्छयमानः ।

प्रति ब्रवोऽदितये तुराय साधा दिवो जातवेदश्चिकित्वान् ॥ (४–३–८)

ऋतेन ऋतं नियतमीळ आ गोरामा सचा मधुमत्पक्वमग्ने ।

कृष्णा सती रुशता धासिनैषा जामर्येण पयसा पीपाय ॥ (४–३–९)

ऋतेन हि ष्मा वृषभश्चिदक्तः पुमाँ अग्निः पयसा पृष्ठ्येन ।

अस्पन्दमानो अचरद्वयोधा वृषा शुक्रं दुदुहे पृश्निरूधः ॥ (४–३–१०)

ऋतेनाद्रिं व्यसन् भिदन्तः समङ्गिरसो नवन्त गोभिः ।

शुनं नरः परि षदन्नुषासमाविः स्वरभवज्जाते अग्नौ ॥ (४–३–११)

ऋतेन देवीरमृता अमृक्ता अर्णोभिरापो मधुमद्भिरग्ने ।

वाजी न सर्गेषु प्रस्तुभानः प्र सदमित्स्रवितवे दधन्युः ॥ (४–३–१२)

मा कस्य यक्षं सदमिद्धुरो गा मा वेशस्य प्रमिनतो मापेः ।

मा भ्रातुरग्ने अनृजोर्ऋणं वेर्मा सख्युर्दक्षं रिपोर्भुजेम ॥ (४–३–१३)

रक्षा णो अग्ने तव रक्षणेभी रारक्षाणः सुमख प्रीणानः ।

प्रति ष्फुर वि रुज वीड्वंहो जहि रक्षो महि चिद्वावृधानम् ॥ (४–३–१४)

एभिर्भव सुमना अग्ने अर्कैरिमान् स्पृश मन्मभिः शूर वाजान् ।

उत ब्रह्माण्यङ्गिरो जुषस्व सं ते शस्तिर्देववाता जरेत ॥ (४–३–१५)

एता विश्वा विदुषे तुभ्यं वेधो नीथान्यग्ने निण्या वचांसि ।

निवचना कवये काव्यान्यशंसिषं मतिभिर्विप्र उक्थैः ॥ (४–३–१६)

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।

तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ (४–४–१)

तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः ।

तपूंष्यग्ने जुह्वा पतङ्गानसंदितो वि सृज विष्वगुल्काः ॥ (४–४–२)

प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः ।

यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत् ॥ (४–४–३)

उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राँ ओषतात्तिग्महेते ।

यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥ (४–४–४)

ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।

अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥ (४–४–५)

स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् ।
विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत् ॥ (४–४–६)
सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः ।
पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः ॥ (४–४–७)
अर्चामि ते सुमतिं घोष्यर्वाक्सं ते वावाता जरतामियं गीः ।
स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून् ॥ (४–४–८)
इह त्वा भूर्या चरेदुप त्मन्दोषावस्तर्दीदिवांसमनु द्यून् ।
क्रीळन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवांसो जनानाम् ॥ (४–४–९)
यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन ।
तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत् ॥ (४–४–१०)
महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय ।
त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥ (४–४–११)
अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः ।
ते पायवः सध्र्यञ्चो निषद्याग्ने तव नः पान्त्वमूर ॥ (४–४–१२)
ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।
ररक्ष तान्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥ (४–४–१३)
त्वया वयं सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् ।
उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण ॥ (४–४–१४)
अया ते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय ।
दहाशसो रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात् ॥ (४–४–१५)
ऊर्ध्व ऊ षु णो अध्वरस्य होतरग्ने तिष्ठ देवताता यजीयान् ।
त्वं हि विश्वमभ्यसि मन्म प्र वेधसश्चित्तिरसि मनीषाम् ॥ (४–६–१)
अमूरो होता न्यसादि विक्ष्वग्निर्मन्द्रो विदथेषु प्रचेताः ।
ऊर्ध्वं भानुं सवितेवाश्रेन्मेतेव धूमं स्तभायदुप द्याम् ॥ (४–६–२)
यता सुजूर्णी रातिनी घृताची प्रदक्षिणिद्देवतातिमुराणः ।
उदु स्वरुर्नवजा नाक्रः पश्वो अनक्ति सुधितः सुमेकः ॥ (४–६–३)
स्तीर्णे बर्हिषि समिधाने अग्ना ऊर्ध्वो अध्वर्युर्जुजुषाणो अस्थात् ।
पर्यग्निः पशुपा न होता त्रिविष्ट्येति प्रदिव उराणः ॥ (४–६–४)
परि त्मना मितद्रुरेति होताग्निर्मन्द्रो मधुवचा ऋतावा ।

द्रवन्त्यस्य वाजिनो न शोका भयन्ते विश्वा भुवना यदभ्राट् ॥ (४–६–५)

भद्रा ते अग्ने स्वनीक संदृग् घोरस्य सतो विषुणस्य चारुः ।

न यत्ते शोचिस्तमसा वरन्त न ध्वस्मानस्तन्वी रेप आ धुः ॥ (४–६–६)

न यस्य सातुर्जनितोरवारि न मातरापितरा नू चिदिष्टौ ।

अधा मित्रो न सुधितः पावकोऽग्निदीदाय मानुषीषु विक्षु ॥ (४–६–७)

द्विर्यं पञ्च जीजनन्संवसानाः स्वसारो अग्निं मानुषीषु विक्षु ।

उषर्बुधमथर्यो न दन्तखुक्रं स्वासं परशुं न तिग्मम् ॥ (४–६–८)

तव त्ये अग्ने हरितो घृतस्ना रोहितास ऋज्वञ्चः स्वञ्चः ।

अरुषासो वृषण ऋजुमुष्का आ देवतातिमह्वन्त दस्माः ॥ (४–६–९)

ये ह त्ये ते सहमाना अयासस्त्वेषासो अग्ने अर्चयश्चरन्ति ।

श्येनासो न दुवसनासो अर्थं तुविष्वणसो मारुतं न शर्धः ॥ (४–६–१०)

अकारि ब्रह्म समिधान तुभ्यं शंसात्युक्थं यजते व्यू धाः ।

होतारमग्निं मनुषो नि षेदुर्नमस्यन्त उशिजः शंसमायोः ॥ (४–६–११)

ससस्य यद्वियुता सस्मिन्न ऊधन्न ऋतस्य धामन्रणयन्त देवाः ।

महाँ अग्निर्नमसा रातहव्यो वेरध्वराय सदमिदृतावा ॥ (४–७–७)

वेरध्वरस्य दूत्यानि विद्वानुभे अन्ता रोदसी संचिकित्वान् ।

दूत ईयसे प्रदिव उराणो विदुष्टरो दिव आरोधनानि ॥ (४–७–८)

कृष्णं त एम रुशतः पुरो भाश्चरिष्ण्वर्चिर्वपुषामिदेकम् ।

यदप्रवीता दधते ह गर्भं सद्यश्चिज्जातो भवसीदु दूतः ॥ (४–७–९)

सद्यो जातस्य ददृशानमोजो यदस्य वातो अनुवाति शोचिः ।

वृणक्ति तिग्मामतसेषु जिह्वां स्थिरा चिदन्ना दयते वि जम्भैः ॥ (४–७–१०)

तृषु यदन्ना तृषुणा ववक्ष तृषुं दूतं कृणुते यह्वो अग्निः ।

वातस्य मेळिं सचते निजूर्वन्न आशुं न वाजयते हिन्वे अर्वा ॥ (४–७–११)

भद्रं ते अग्ने सहसिन्न अनीकमुपाक आ रोचते सूर्यस्य । रुशद्दृशे ददृशे नक्तया चिदरूक्षितं दृश आ रूपे अन्नम् ॥ (४–११–१)

वि षाह्यग्ने गृणते मनीषां खं वेपसा तुविजात स्तवानः ।

विश्वेभिर्यद्वावनः शुक्र देवैस्तन्नो रास्व सुमहो भूरि मन्म ॥ (४–११–२)

त्वदग्ने काव्या त्वन्मनीषास्त्वदुक्था जायन्ते राध्यानि ।

त्वदेति द्रविणं वीरपेशा इत्थाधिये दाशुषे मर्त्याय ॥ (४–११–३)

त्वद्वाजी वाजम्भरो विहाया अभिष्टिकृज्जायते सत्यशुष्मः ।

त्वद्रयिर्देवजूतो मयोभुस्त्वदाशुर्जूजुवाँ अग्ने अर्वा ॥ (४–११–४)

त्वामग्ने प्रथमं देवयन्तो देवं मर्ता अमृत मन्द्रजिह्वम् ।

द्वेषोयुतमा विवासन्ति धीभिर्दमूनसं गृहपतिममूरम् ॥ (४–११–५)

आरे अस्मदमतिमारे अंह आरे विश्वां दुर्मतिं यन्निपासि ।

दोषा शिवः सहसः सूनो अग्ने यं देव आ चित्सचसे स्वस्ति ॥ (४–११–६)

यस्त्वामग्न इनधते यतस्रुक् त्रिस्ते अन्नं कृणवत्सस्मिन्न अहन् ।

स सु द्युम्नैरभ्यस्तु प्रसक्षत्तव क्रत्वा जातवेदश्चिकित्वान् ॥ (४–१२–१)

इध्मं यस्ते जभरच्छश्रमाणो महो अग्ने अनीकमा सपर्यन् ।

स इधानः प्रति दोषामुषासं पुष्यन्नयिं सचते घ्नन्न अमित्रान् ॥ (४–१२–२)

अग्निरीशे बृहतः क्षत्रियस्याग्निर्वाजस्य परमस्य रायः ।

दधाति रत्नं विधते यविष्ठो व्यानुषङ् मर्त्याय स्वधावान् ॥ (४–१२–३)

यच्चिद्धि ते पुरुषत्रा यविष्ठाचित्तिभिश्चकृमा कच्चिदागः ।

कृधी ष्वस्माँ अदितेरनागान्व्येनांसि शिश्रथो विष्वगग्ने ॥ (४–१२–४)

महश्चिदग्न एनसो अभीक ऊर्वाद्देवानामुत मर्त्यानाम् ।

मा ते सखायः सदमिद्रिषाम यच्छा तोकाय तनयाय शं योः ॥ (४–१२–५)

यथा ह त्यद्वसवो गौर्यं चित्पदि षितामममुञ्चता यजत्राः ।

एवो ष्वस्मन्मुञ्चता व्यंहः प्र तार्यग्ने प्रतरं न आयुः ॥ (४–१२–६)

सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै ।

देवाँ अच्छा दीद्यद्युञ्जे अद्रिं शमाये अग्ने तन्वं जुषस्व ॥ (३–१–१)

प्राञ्चं यज्ञं चकृम वर्धतां गीः समिद्भिरग्निं नमसा दुवस्यन् ।

दिवः शशासुर्विदथा कवीनां गृत्साय चित्तवसे गातुमीषुः ॥ (३–१–२)

मयो दधे मेधिरः पूतदक्षो दिवः सुबन्धुर्जनुषा पृथिव्याः ।

अविन्दन्नु दर्शतमप्स्वन्तर्देवासो अग्निमपसि स्वसृणाम् ॥ (३–१–३)

अवर्धयन्सुभगं सप्त यह्वीः श्वेतं जज्ञानमरुषं महित्वा ।

शिशुं न जातमभ्यारुरश्वा देवासो अग्निुानिमन्वपुष्यन् ॥ (३–१–४)

शुक्रेभिरङ्गै रज आततन्वान्क्रतुं पुनानः कविभिः पवित्रैः ।

शोचिर्वसानः पर्यायुरपां श्रियो मिमीते बृहतीरनूनाः ॥ (३–१–५)

वव्राजा सीमनदतीरदब्धा दिवो यह्वीरवसाना अनग्नाः।

सना अत्र युवतयः सयोनीरेकं गर्भं दधिरे सप्त वाणीः ॥ (३-१-६)

स्तीर्णा अस्य संहतो विश्वरूपा घृतस्य योनौ स्रवथे मधूनाम् ।

अस्थुरत्र धेनवः पिन्वमाना मही दस्मस्य मातरा समीची ॥ (३-१-७)

बभ्राणः सूनो सहसो व्यद्यौद्दधानः शुक्रा रभसा वपूंषि ।

श्चोतन्ति धारा मधुनो घृतस्य वृषा यत्र वावृधे काव्येन ॥ (३-१-८)

पितुश्चिदूधर्जनुषा विवेद व्यस्य धारा असृजद्वि धेनाः ।

गुहा चरन्तं सखिभिः शिवेभिर्दिवो यह्वीभिर्न गुहा बभूव ॥ (३-१-९)

पितुश्च गर्भं जनितुश्च बभ्रे पूर्वीरेको अधयत्पीप्यानाः ।

वृष्णे सपत्नी शुचये सबन्धू उभे अस्मै मनुष्ये नि पाहि ॥ (३-१-१०)

उरौ महाँ अनिबाधे ववर्धापो अग्निं यशसः सं हि पूर्वीः ।

ऋतस्य योनावशयद्दमूना जामीनामग्निरपसि स्वसॄणाम् ॥ (३-१-११)

अक्रो न बभ्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः ।

उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ॥ (३-१-१२)

अपां गर्भं दर्शतमोषधीनां वना जजान सुभगा विरूपम् ।

देवासश्चिन्मनसा सं हि जग्मुः पनिष्ठं जातं तवसं दुवस्यन् ॥ (३-१-१३)

बृहन्त इद्भानवो भाऋजीकमग्निं सचन्त विद्युतो न शुक्राः ।

गुहेव वृद्धं सदसि स्वे अन्तरपार ऊर्वे अमृतं दुहानाः ॥ (३-१-१४)

ईळे च त्वा यजमानो हविर्भिरीळे सखित्वं सुमतिं निकामः ।

देवैरवो मिमीहि सं जरित्रे रक्षा च नो दम्येभिरनीकैः ॥ (३-१-१५)

उपक्षेतारस्तव सुप्रणीतेऽग्ने विश्वानि धन्या दधानाः ।

सुरेतसा श्रवसा तुञ्जमाना अभि ष्याम पृतनायूँरदेवान् ॥ (३-१-१६)

आ देवानामभवः केतुरग्ने मन्द्रो विश्वानि काव्यानि विद्वान् ।

प्रति मर्ताँ अवासयो दमूना अनु देवान्रथिरो यासि साधन् ॥ (३-१-१७)

नि दुरोणे अमृतो मर्त्यानां राजा ससाद विदथानि साधन् ।

घृतप्रतीक उर्विया व्यद्यौदग्निर्विश्वानि काव्यानि विद्वान् ॥ (३-१-१८)

आ नो गहि सख्येभिः शिवेभिर्महान्महीभिरूतिभिः सरण्यन् ।

अस्मे रयिं बहुलं संतरुत्रं सुवाचं भागं यशसं कृधी नः ॥ (३-१-१९)

एता ते अग्ने जनिमा सनानि प्र पूर्व्याय नूतनानि वोचम् ।

महान्ति वृष्णे सवना कृतेमा जन्मञ्जन्मन्निहितो जातवेदाः ॥ (३-१-२०)

जन्मञ्जन्मन्निहितो जातवेदा विश्वामित्रेभिरिध्यते अजस्रः ।
तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ॥ (३–१–२१)
इमं यज्ञं सहसावन्त्वं नो देवत्रा धेहि सुक्रतो रराणः ।
प्र यंसि होतर्बृहतीरिषो नोऽग्ने महि द्रविणमा यजस्व ॥ (३–१–२२)
इळामग्ने पुरुदंसं सन्गिोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ (३–१–२३)
प्रत्यग्निरुषसश्चेकितानोऽबोधि विप्रः पदवीः कवीनाम् ।
पृथुपाजा देवयद्भिः समिद्धोऽप द्वारा तमसो वह्रिरावः ॥ (३–५–१)
प्रेद्वग्निर्वावृधे स्तोमेभिर्गीर्भि स्तोतॄणां नमस्य उक्थैः ।
पूर्वीर्ऋतस्य संदृशश्चकानः सं दूतो अद्यौदुषसो विरोके ॥ (३–५–२)
अधाय्यग्निर्मानुषीषु विक्ष्वपां गर्भो मित्र ऋतेन साधन् ।
आ हर्यतो यजतः सान्वस्थादभूदु विप्रो हव्यो मतीनाम् ॥ (३–५–३)
मित्रो अग्निर्भवति यत्समिद्धो मित्रो होता वरुणो जातवेदाः ।
मित्रो अध्वर्युरिषिरो दमूना मित्रः सिन्धूनामुत पर्वतानाम् ॥ (३–५–४)
पाति प्रियं रिपो अग्रं पदं वेः पाति यह्वश्चरणं सूर्यस्य ।
पाति नाभा सप्तशीर्षाणमग्निः पाति देवानामुपमादमृष्वः ॥ (३–५–५)
ऋभुश्चक्र ईड्यं चारु नाम विश्वानि देवो वयुनानि विद्वान् ।
ससस्य चर्म घृतवत्पदं वेस्तदिदग्नी रक्षत्यप्रयुच्छन् ॥ (३–५–६)
आ योनिमग्निर् घृतवन्तमस्थात्पृथुप्रगाणमुशन्तमुशानः ।
दीद्यानः शुचिर्ऋष्वः पावकः पुनः पुनर्मातरा नव्यसी कः ॥ (३–५–७)
सद्यो जात ओषधीभिर्ववक्षे यदी वर्धन्ति प्रस्वो घृतेन ।
आप इव प्रवता शुम्भमाना उरुष्यदग्निः पित्रोरुपस्थे ॥ (३–५–८)
उदु ष्टुतः समिधा यह्वो अद्यौद्वर्ष्मन् दिवो अधि नाभा पृथिव्याः ।
मित्रो अग्निरीड्यो मातरिश्वा दूतो वक्षद्यजथाय देवान् ॥ (३–५–९)
उदस्तम्भीत्समिधा नाकमृष्वोऽग्निर्भवन्नुत्तमो रोचनानाम् ।
यदी भृगुभ्यः परि मातरिश्वा गुहा सन्तं हव्यवाहं समीधे ॥ (३–५–१०)
इळामग्ने पुरुदंसं सन्गिोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ (३–५–११)
प्र कारवो मनना वच्यमाना देवद्रीचीं नयत देवयन्तः ।

दक्षिणावाड् वाजिनी प्राच्येति हविर्भरन्त्यग्नये घृताची ॥ (३–६–१)

आ रोदसी अपृणा जायमान उत प्र रिक्था अध नु प्रयज्यो ।

दिवश्चिदग्ने महिना पृथिव्या वच्यन्तां ते वह्नयः सप्तजिह्वाः ॥ (३–६–२)

द्यौश्च त्वा पृथिवी यज्ञियासो नि होतारं सादयन्ते दमाय ।

यदी विशो मानुषीर्देवयन्तीः प्रयस्वतीरीळते शुक्रमर्चिः ॥ (३–६–३)

महान्सधस्थे ध्रुव आ निषत्तोऽन्तर्द्यावा माहिने हर्यमाणः ।

आस्क्रे सपत्नी अजरे अमृक्ते सबर्दुघे उरुगायस्य धेनू ॥ (३–६–४)

व्रता ते अग्ने महतो महानि तव क्रत्वा रोदसी आ ततन्थ ।

त्वं दूतो अभवो जायमानस्त्वं नेता वृषभ चर्षणीनाम् ॥ (३–६–५)

ऋतस्य वा केशिना योग्याभिर् घृतस्नुवा रोहिता धुरि धिष्व ।

अथा वह देवान्देव विश्वान्स्वध्वरा कृणुहि जातवेदः ॥ (३–६–६)

दिवश्चिदा ते रुचयन्त रोका उषो विभातीरनु भासि पूर्वीः ।

अपो यदग्न उशधग् वनेषु होतुर्मन्द्रस्य पनयन्त देवाः ॥ (३–६–७)

उरौ वा ये अन्तरिक्षे मदन्ति दिवो वा ये रोचने सन्ति देवाः ।

ऊमा वा ये सुहवासो यजत्रा आयेमिरे रथ्यो अग्ने अश्वाः ॥ (३–६–८)

ऐभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः ।

पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमा वह मादयस्व ॥ (३–६–९)

स होता यस्य रोदसी चिदुर्वी यज्ञं यज्ञमभि वृधे गृणीतः ।

प्राची अध्वरेव तस्थतुः सुमेके ऋतावरी ऋतजातस्य सत्ये ॥ (३–६–१०)

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।

स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ (३–६–११)

प्र य आरुः शितिपृष्ठस्य धासेरा मातरा विविशुः सप्त वाणीः ।

परिक्षिता पितरा सं चरेते प्र सर्स्राते दीर्घमायुः प्रयक्षे ॥ (३–७–१)

दिवक्षसो धेनवो वृष्णो अश्वा देवीरा तस्थौ मधुमद्वहन्तीः ।

ऋतस्य त्वा सदसि क्षेमयन्तं पर्येका चरति वर्तनिं गौः ॥ (३–७–२)

आ सीमरोहत्सुयमा भवन्तीः पतिश्चिकित्वान्रयिविद्रयीणाम् ।

प्र नीलपृष्ठो अतसस्य धासेस्ता अवासयत्पुरुधप्रतीकः ॥ (३–७–३)

महि त्वाष्ट्रमूर्जयन्तीरजुर्यं स्तभूयमानं वहतो वहन्ति ।

व्यङ्गेभिर्दिद्युतानः सधस्थ एकामिव रोदसी आ विवेश ॥ (३–७–४)

जानन्ति वृष्णो अरुषस्य शेवमुत ब्रध्नस्य शासने रणन्ति ।

दिवोरुचः सुरुचो रोचमाना इळा येषां गण्या माहिना गीः ॥ (३–७–५)

उतो पितृभ्यां प्रविदानु घोषं महो महद्भ्यामनयन्त शूषम् ।

उक्षा ह यत्र परि धानमक्तोरनु स्वं धाम जरितुर्ववक्ष ॥ (३–७–६)

अध्वर्युभिः पञ्चभिः सप्त विप्राः प्रियं रक्षन्ते निहितं पदं वेः ।

प्राञ्चो मदन्त्युक्षणो अजुर्या देवा देवानामनु हि व्रता गुः ॥ (३–७–७)

दैव्या होतारा प्रथमा न्यृञ्जे सप्त पृक्षासः स्वधया मदन्ति ।

ऋतखंसन्त ऋतमित्त आहुरनु व्रतं व्रतपा दीध्यानाः ॥ (३–७–८)

वृषायन्ते महे अत्याय पूर्वीर्वृष्णे चित्राय रश्मयः सुयामाः ।

देव होतर्मन्द्रतरश्चिकित्वान्महो देवान्रोदसी एह वक्षि ॥ (३–७–९)

पृक्षप्रयजो द्रविणः सुवाचः सुकेतव उषसो रेवदूषुः ।

उतो चिदग्ने महिना पृथिव्याः कृतं चिद्येनः सं महे दशस्य ॥ (३–७–१०)

इळामग्ने पुरुदंसं सनिंगोः शश्वत्तमं हवमानाय साध ।

स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ (३–७–११)

आ होता मन्द्रो विदथान्यस्थात्सत्यो यज्वा कवितमः स वेधाः ।

विद्युद्रथः सहसस्पुत्रो अग्निः शोचिष्केशः पृथिव्यां पाजो अश्रेत् ॥ (३–१४–१)

अयामि ते नम उक्तिं जुषस्व ऋतावस्तुभ्यं चेतते सहस्वः ।

विद्वाँ आ वक्षि विदुषो नि षत्सि मध्य आ बर्हिरूतये यजत्र ॥ (३–१४–२)

द्रवतां त उषसा वाजयन्ती अग्ने वातस्य पथ्याभिरच्छ ।

यत्सीमञ्जन्ति पूर्व्यं हविर्भिरा वन्धुरेव तस्थतुर्दुरोणे ॥ (३–१४–३)

मित्रश्च तुभ्यं वरुणः सहस्वोऽग्ने विश्वे मरुतः सुम्नमर्चन् ।

यच्छोचिषा सहसस्पुत्र तिष्ठा अभि क्षितीः प्रथयन्सूर्यो नॄन् ॥ (३–१४–४)

वयं ते अद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य ।

यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो अग्ने ॥ (३–१४–५)

त्वद्धि पुत्र सहसो वि पूर्वीर्देवस्य यन्त्यूतयो वि वाजाः ।

त्वं देहि सहस्रिणं रयिंोऽद्रोघेण वचसा सत्यमग्ने ॥ (३–१४–६)

तुभ्यं दक्ष कविक्रतो यानीमा देव मर्तासो अध्वरे अकर्म ।

त्वं विश्वस्य सुरथस्य बोधि सर्वं तदग्ने अमृत स्वदेह ॥ (३–१४–७)

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ।

सुशर्मणो बृहतः शर्मणि स्यामग्नेरहं सुहवस्य प्रणीतौ ॥ (३–१५–१)

त्वं नो अस्या उषसो व्युष्टौ त्वं सूर उदिते बोधि गोपाः ।

जन्मेव नित्यं तनयुाुषस्व स्तोमं मे अग्ने तन्वा सुजात ॥ (३–१५–२)

त्वं नृचक्षा वृषभानु पूर्वीः कृष्णास्वग्ने अरुषो वि भाहि ।

वसो नेषि च पर्षि चात्यंहः कृधी नो राय उशिजो यविष्ठ ॥ (३–१५–३)

अषाळ्हो अग्ने वृषभो दिदीहि पुरो विश्वाः सौभगा संजिगीवान् ।

यज्ञस्य नेता प्रथमस्य पायोर्जातवेदो बृहतः सुप्रणीते ॥ (३–१५–४)

अच्छिद्रा शर्म जरितः पुरूणि देवाँ अच्छा दीद्यानः सुमेधाः ।

रथो न सस्निरभि वक्षि वाजमग्ने त्वं रोदसी नः सुमेके ॥ (३–१५–५)

प्र पीपय वृषभ जिन्व वाजानग्ने त्वं रोदसी नः सुदोघे ।

देवेभिर्देव सुरुचा रुचानो मा नो मर्तस्य दुर्मतिः परि ष्ठात् ॥ (३–१५–६)

इळामग्ने पुरुदंसं सनिंगोः शश्वत्तमं हवमानाय साध ।

स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ (३–१५–७)

समिध्यमानः प्रथमानु धर्मा समक्तुभिरज्यते विश्ववारः ।

शोचिष्केशो घृतनिर्णिक्पावकः सुयज्ञो अग्निर्यजथाय देवान् ॥ (३–१७–१)

यथायजो होत्रमग्ने पृथिव्या यथा दिवो जातवेदश्चिकित्वान् ।

एवानेन हविषा यक्षि देवान्मनुष्वद्यज्ञं प्र तिरेममद्य ॥ (३–१७–२)

त्रीण्यायूंषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने ।

ताभिर्देवानामवो यक्षि विद्वानथा भव यजमानाय शं योः ॥ (३–१७–३)

अग्निं सुदीतिं सुदृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः ।

त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्न अमृतस्य नाभिम् ॥ (३–१७–४)

यस्त्वद्धोता पूर्वो अग्ने यजीयान् द्विता च सत्ता स्वधया च शम्भुः ।

तस्यानु धर्म प्र यजा चिकित्वोऽथ नो धा अध्वरं देववीतौ ॥ (३–१७–५)

भवा नो अग्ने सुमना उपेतौ सखेव सख्ये पितरेव साधुः ।

पुरुद्रुहो हि क्षितयो जनानां प्रति प्रतीचीर्दहतादरातीः ॥ (३–१८–१)

तपो ष्वग्ने अन्तराँ अमित्रान्तपा शंसमररुषः परस्य ।

तपो वसो चिकितानो अचित्तान्वि ते तिष्ठन्तामजरा अयासः ॥ (३–१८–२)

इध्मेनाग्न इच्छमानो घृतेन जुहोमि हव्यं तरसे बलाय ।

यावदीशे ब्रह्मणा वन्दमान इमां धियं शतसेयाय देवीम् ॥ (३–१८–३)

उच्छोचिषा सहसस्पुत्र स्तुतो बृहद्वयः शशमानेषु धेहि ।
रेवदग्ने विश्वामित्रेषु शं योर्मर्मृज्मा ते तन्वं भूरि कृत्वः ॥ (३–१८–४)
कृधि रत्नं सुसनितर्धनानां स घेदग्ने भवसि यत्समिद्धः ।
स्तोतुर्दुरोणे सुभगस्य रेवत्सृप्रा करस्ना दधिषे वपूंषि ॥ (३–१८–५)
अग्निं होतारं प्र वृणे मियेधे गृत्स्कविं विश्वविदममूरम् ।
स नो यक्षद्देवताता यजीयान्राये वाजाय वनते मघानि ॥ (३–१९–१)
प्र ते अग्ने हविष्मतीमियर्म्यच्छा सुद्युम्नां रातिनीं घृताचीम् ।
प्रदक्षिणिद्देवतातिमुराणः सं रातिभिर्वसुभिर्यज्ञमश्रेत् ॥ (३–१९–२)
स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः ।
अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः ॥ (३–१९–३)
भूरीणि हि त्वे दधिरे अनीकाग्ने देवस्य यज्यवो जनासः ।
स आ वह देवतातिं यविष्ठ शर्धो यदद्य दिव्यं यजासि ॥ (३–१९–४)
यत्त्वा होतारमनजन् मियेधे निषादयन्तो यजथाय देवाः ।
स त्वं नो अग्नेऽवितेह बोध्यधि श्रवांसि धेहि नस्तनूषु ॥ (३–१९–५)
अग्निमुषसमश्विना दधिक्रां व्युष्टिषु हवते वह्निरुक्थैः ।
सुज्योतिषो नः शृण्वन्तु देवाः सजोषसो अध्वरं वावशानाः ॥ (३–२०–१)
अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः ।
तिस्र उ ते तन्वो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् ॥ (३–२०–२)
अग्ने भूरीणि तव जातवेदो देव स्वधावोऽमृतस्य नाम ।
याश्च माया मायिनां विश्वमिन्व त्वे पूर्वीः संदधुः पृष्टबन्धो ॥ (३–२०–३)
अग्निर्नेता भग इव क्षितीनां दैवीनां देव ऋतुपा ऋतावा ।
स वृत्रहा सनयो विश्ववेदाः पर्षद्विश्वाति दुरिता गृणन्तम् ॥ (३–२०–४)
दधिक्रामग्निमुषसं च देवीं बृहस्पतिं सवितारं च देवम् ।
अश्विना मित्रावरुणा भगिा वसून्रुद्राँ आदित्याँ इह हुवे ॥ (३–२०–५)
अयं सो अग्निर्यस्मिन्सोममिन्द्रः सुतं दधे जठरे वावशानः ।
सहस्रिणं वाजमत्यो सप्तिं ससवान्सन् स्तूयसे जातवेदः ॥ (३–२२–१)
अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्स्वा यजत्र ।
येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः ॥ (३–२२–२)
अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाँ ऊचिषे धिष्ण्या ये ।

या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः ॥ (३–२२–३)
पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः ।
जुषन्तां यज्ञमद्रुहोऽनमीवा इषो महीः ॥ (३–२२–४)
इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ (३–२२–५)
निर्मथितः सुधित आ सधस्थे युवा कविरध्वरस्य प्रणेता ।
जूर्यत्स्वग्निरजरो वनेष्वत्रा दधे अमृतं जातवेदाः ॥ (३–२३–१)
अमन्थिष्टां भारता रेवदग्निं देवश्रवा देववातः सुदक्षम् ।
अग्ने वि पश्य बृहताभि रायेषां नो नेता भवतादनु द्यून् ॥ (३–२३–२)
दश क्षिपः पूर्व्यं सीमजीजनन्सुजातं मातृषु प्रियम् ।
अग्निं स्तुहि दैववातं देवश्रवो यो जनानामसद्वशी ॥ (३–२३–३)
नि त्वा दधे वर आ पृथिव्या इळायास्पदे सुदिनत्वे अह्नाम् ।
दृषद्वत्यां मानुष आपयायां सरस्वत्यां रेवदग्ने दिदीहि ॥ (३–२३–४)
इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ (३–२३–५)
दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनुरते स्वाधीः ॥ (१०–४५–१)
विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा ।
विद्मा ते नाम परमुहा यद्विद्मा तमुत्सं यत आजगन्थ ॥ (१०–४५–२)
समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् ।
तृतीये त्वा रजसि तस्थिवांसमपामुपस्थे महिषा अवर्धन् ॥ (१०–४५–३)
अक्रन्ददग्नि स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥ (१०–४५–४)
श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः ।
वसुः सूनुः सहसो अप्सु राजा वि भात्यग्र उषसामिधानः ॥ (१०–४५–५)
विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः ।
वीळुं चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च ॥ (१०–४५–६)
उशिक्पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि ।
इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥ (१०–४५–७)

दृशानो रुक्म उर्विया व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौर्जनयत्सुरेताः ॥ (१०–४५–८)
यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने ।
प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ॥ (१०–४५–९)
आ तं भज सौश्रवसेष्वग्न उक्थ उक्थ आ भज शस्यमाने ।
प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥ (१०–४५–१०)
त्वामग्ने यजमाना अनु द्यून्विश्वा वसु दधिरे वार्याणि ।
त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो वि वव्रुः ॥ (१०–४५–११)
प्र होता जातो महान्नभोविन्नृषद्वा सीददपामुपस्थे ।
दधिर्यो धायि स ते वयांसि यन्ता वसूनि विधते तनूपाः ॥ (१०–४६–१)
इमं विधन्तो अपां सधस्थे पशुं न नष्टं पदैरनु ग्मन् ।
गुहा चतन्तमुशिजो नमोभिरिच्छन्तो धीरा भृगवोऽविन्दन् ॥ (१०–४६–२)
इमं त्रितो भूर्यविन्ददिच्छन्वैभूवसो मूर्धन्यघ्न्यायाः ।
स शेवृधो जात आ हर्म्येषु नाभिर्युवा भवति रोचनस्य ॥ (१०–४६–३)
मन्द्रं होतारमुशिजो नमोभिः प्राञ्चं यज्ञं नेतारमध्वराणाम् ।
विशामकृण्वन्न अरतिं पावकं हव्यवाहं दधतो मानुषेषु ॥ (१०–४६–४)
प्र भूर्जयन्तं महां विपोधां मूरा अमूरं पुरां दर्माणम् ।
नयन्तो गर्भं वनां धियं धुर्हिरिश्मश्रुं नार्वाणं धनर्चम् ॥ (१०–४६–५)
नि पस्त्यासु त्रित स्तभूयन्परिवीतो योनौ सीददन्तः ।
अतः सङ्गृभ्या विशां दमूना विधर्मणायन्त्रैरीयते नॄन् ॥ (१०–४६–६)
अस्याजरासो दमामरित्रा अर्चद्धूमासो अग्नयः पावकाः ।
श्वितीचयः श्वात्रासो भुरण्यवो वनर्षदो वायवो न सोमाः ॥ (१०–४६–७)
प्र जिह्वया भरते वेपो अग्निः प्र वयुनानि चेतसा पृथिव्याः ।
तमायवः शुचयन्तं पावकं मन्द्रं होतारं दधिरे यजिष्ठम् ॥ (१०–४६–८)
द्यावा यमग्निंपृथिवी जनिष्टामापस्त्वष्टा भृगवो यं सहोभिः ।
ईळेन्यं प्रथमं मातरिश्वा देवास्ततक्षुर्मनवे यजत्रम् ॥ (१०–४६–९)
यं त्वा देवा दधिरे हव्यवाहं पुरुस्पृहो मानुषासो यजत्रम् ।
स यामन्न अग्ने स्तुवते वयो धाः प्र देवयन्यशसः सं हि पूर्वीः ॥ (१०–४६–१०)
त्वं ह्यग्ने प्रथमो मनोतास्या धियो अभवो दस्म होता ।

त्वं सीं वृषन्न अकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै ॥ (६–१–१)

अधा होता न्यसीदो यजीयानिळस्पद इषयन्न ईड्यः सन् ।

तं त्वा नरः प्रथमं देवयन्तो महो राये चितयन्तो अनु ग्मन् ॥ (६–१–२)

वृतेव यन्तं बहुभिर्वसव्यैस्त्वे रयिंजागृवांसो अनु ग्मन् ।

रुशन्तमग्निं दर्शतं बृहन्तं वपावन्तं विश्वहा दीदिवांसम् ॥ (६–१–३)

पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्न अमृक्तम् ।

नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ ॥ (६–१–४)

त्वां वर्धन्ति क्षितयः पृथिव्यां त्वां राय उभयासो जनानाम् ।

त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन्मानुषाणाम् ॥ (६–१–५)

सपर्येण्यः स प्रियो विक्ष्वग्निर्होता मन्द्रो नि षसादा यजीयान् ।

तं त्वा वयं दम आ दीदिवांसमुप ज्ञुबाधो नमसा सदेम ॥ (६–१–६)

तं त्वा वयं सुध्यो नव्यमग्ने सुम्नायव ईमहे देवयन्तः ।

त्वं विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेन ॥ (६–१–७)

विशां कविं विश्पतिंशश्वतीनां नितोशनं वृषभं चर्षणीनाम् ।

प्रेतीषणिमिषयन्तं पावकं राजन्तमग्निंयजतं रयीणाम् ॥ (६–१–८)

सो अग्न ईजे शशमे च मर्तो यस्त आनट्समिधा हव्यदातिम् ।

य आहुतिं परि वेदा नमोभिर्विश्वेत्स वामा दधते त्वोतः ॥ (६–१–९)

अस्मा उ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः ।

वेदी सूनो सहसो गीर्भिरुक्थैरा ते भद्रायां सुमतौ यतेम ॥ (६–१–१०)

आ यस्ततन्थ रोदसी वि भासा श्रवोभिश्च श्रवस्यस्तरुत्रः ।

बृहद्भिर्वाजै स्थविरेभिरस्मे रेवद्भिरग्ने वितरं वि भाहि ॥ (६–१–११)

नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः ।

पूर्वीरिषो बृहतीरारे अघा अस्मे भद्रा सौश्रवसानि सन्तु ॥ (६–१–१२)

पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन्वसुता ते अश्याम् ।

पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वे ॥ (६–१–१३)

अग्ने स क्षेषदृतपा ऋतेजा उरु ज्योतिर्नशते देवयुष्टे ।

यं त्वं मित्रेण वरुणः सजोषा देव पासि त्यजसा मर्तमंहः ॥ (६–३–१)

ईजे यज्ञेभिः शशमे शमीभिर्ऋधद्वारायाग्नये ददाश ।

एवा चन तं यशसामजुष्टिर्नांहो मर्तं नशते न प्रदृप्तिः ॥ (६–३–२)

सूरो न यस्य दृशतिररेपा भीमा यद्वेति शुचतस्त आ धीः ।
हेषस्वतः शुरुधो नायमक्तोः कुत्रा चिद्रण्वो वसतिर्वनेजाः ॥ (६–३–३)
तिग्मं चिद्येम महि वर्पो अस्य भसदश्वो न यमसान आसा ।
विजेहमानः परशुर्न जिह्वां द्रविर्न द्रावयति दारु धक्षत् ॥ (६–३–४)
स इदस्तेव प्रति धादसिष्यञ् छिशीत तेजोऽयसो न धाराम् ।
चित्रध्रजतिररतिर्यो अक्तोर्वेर्न द्रुषद्वा रघुपत्मजंहाः ॥ (६–३–५)
स ईं रेभो न प्रति वस्त उस्राः शोचिषा रारपीति मित्रमहाः ।
नक्तं य ईमरुषो यो दिवा नॄनमर्त्यो अरुषो यो दिवा नॄन् ॥ (६–३–६)
दिवो न यस्य विधतो नवीनोद्वृषा रुक्ष ओषधीषु नूनोत् ।
घृणा न यो ध्रजसा पत्मना यन्न आ रोदसी वसुना दं सुपत्नी ॥ (६–३–७)
धायोभिर्वा यो युज्येभिरर्कैर्विद्युन्न दविद्योत्स्वेभिः शुष्मैः ।
शर्धो वा यो मरुतां ततक्ष ऋभुर्न त्वेषो रभसानो अद्यौत् ॥ (६–३–८)
यथा होतर्मनुषो देवताता यज्ञेभिः सूनो सहसो यजासि ।
एवा नो अद्य समना समानानुशन्न अग्न उशतो यक्षि देवान् ॥ (६–४–१)
स नो विभावा चक्षणिर्न वस्तोरग्निर्वन्दारु वेद्यश्चनो धात् ।
विश्वायुर्यो अमृतो मर्त्येषूषर्भुद्भूदतिथिर्जातवेदाः ॥ (६–४–२)
द्यावो न यस्य पनयन्त्यभ्वं भासांसि वस्ते सूर्यो न शुक्रः ।
वि य इनोत्यजरः पावकोऽश्नस्य चिच् छिश्नथत्पूर्व्याणि ॥ (६–४–३)
वद्मा हि सूनो अस्यद्मसद्वा चक्रे अग्निर्जनुषाज्मान्नम् ।
स त्वं न ऊर्जसन ऊर्जं धा राजेव जेरवृके क्षेष्यन्तः ॥ (६–४–४)
नितिक्ति यो वारणमन्नमत्ति वायुर्न राष्ट्र्यत्येत्यक्तून् ।
तुर्याम यस्त आदिशामरातीरत्यो न ह्रुतः पततः परिह्रुत् ॥ (६–४–५)
आ सूर्यो न भानुमद्भिरर्कैरग्ने ततन्थ रोदसी वि भासा ।
चित्रो नयत्परि तमांस्यक्तः शोचिषा पत्मन्न औशिजो न दीयन् ॥ (६–४–६)
त्वां हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने ।
इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः ॥ (६–४–७)
नू नो अग्नेऽवृकेभिः स्वस्ति वेषि रायः पथिभिः पर्ष्यंहः ।
ता सूरिभ्यो गृणते रासि सुम्नं मदेम शतहिमाः सुवीराः ॥ (६–४–८)
हुवे वः सूनुं सहसो युवानमद्रोघवाचं मतिभिर्यविष्ठम् ।

य इन्वति द्रविणानि प्रचेता विश्ववाराणि पुरुवारो अध्रुक् ॥ (६–५–१)
त्वे वसूनि पुर्वणीक होतदीषा वस्तोरेरिरे यज्ञियासः ।
क्षामेव विश्वा भुवनानि यस्मिन्त्सं सौभगानि दधिरे पावके ॥ (६–५–२)
त्वं विक्षु प्रदिवः सीद आसु क्रत्वा रथीरभवो वार्याणाम् ।
अत इनोषि विधते चिकित्वो व्यानुषग्जातवेदो वसूनि ॥ (६–५–३)
यो नः सनुत्यो अभिदासदग्ने यो अन्तरो मित्रमहो वनुष्यात् ।
तमजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वान् ॥ (६–५–४)
यस्ते यज्ञेन समिधा य उक्थैरर्केभिः सूनो सहसो ददाशत् ।
स मर्त्येष्वमृत प्रचेता राया द्युम्नेन श्रवसा वि भाति ॥ (६–५–५)
स तत्कृधीषितस्तूयमग्ने स्पृधो बाधस्व सहसा सहस्वान् ।
यच्छस्यसे द्युभिरक्तो वचोभिस्तज्जुषस्व जरितुर्घोषि मन्म ॥ (६–५–६)
अश्याम तं काममग्ने तवोती अश्याम रयिं रयिवः सुवीरम् ।
अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते ॥ (६–५–७)
प्र नव्यसा सहसः सूनुमच्छा यज्ञेन गातुमव इच्छमानः ।
वृश्चद्वनं कृष्णयामं रुशन्तं वीती होतारं दिव्यं जिगाति ॥ (६–६–१)
स श्वितानस्तन्यतू रोचनस्था अजरेभिर्नानदद्भिर्यविष्ठः ।
यः पावकः पुरुतमः पुरूणि पृथून्यग्निरनुयाति भर्वन् ॥ (६–६–२)
वि ते विष्वग् वातजूतासो अग्ने भामासः शुचे शुचयश्चरन्ति ।
तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः ॥ (६–६–३)
ये ते शुक्रासः शुचयः शुचिष्मः क्षां वपन्ति विषितासो अश्वाः ।
अध भ्रमस्त उर्विया वि भाति यातयमानो अधि सानु पृश्नेः ॥ (६–६–४)
अध जिह्वा पापतीति प्र वृष्णो गोषुयुधो नाशनिः सृजाना ।
शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्तुर्भीमो दयते वनानि ॥ (६–६–५)
आ भानुना पार्थिवानि ज्रयांसि महस्तोदस्य धृषता ततन्थ ।
स बाधस्वाप भया सहोभि स्पृधो वनुष्यन्वनुषो नि जूर्व ॥ (६–६–६)
स चित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम् ।
चन्द्रं रयिं पुरुवीर्टृहन्तं चन्द्र चन्द्राभिर्गृणते युवस्व ॥ (६–६–७)
पुरो वो मन्द्रं दिव्यं सुवृक्तिं प्रयति यज्ञे अग्निमध्वरे दधिध्वम् ।
पुर उक्थेभिः स हि नो विभावा स्वध्वरा करति जातवेदाः ॥ (६–१०–१)

तमु द्युमः पुर्वणीक होतरग्ने अग्निभिर्मनुष इधानः ।
स्तोमं यमस्मै ममतेव शूषं घृतं न शुचि मतयः पवन्ते ॥ (६–१०–२)
पीपाय स श्रवसा मर्त्येषु यो अग्नये ददाश विप्र उक्थैः ।
चित्राभिस्तमूतिभिश्चित्रशोचिर्व्रजस्य साता गोमतो दधाति ॥ (६–१०–३)
आ यः पप्रौ जायमान उर्वी दूरेदृशा भासा कृष्णाध्वा ।
अध बहु चित्तम ऊर्म्यायास्तिरः शोचिषा ददृशे पावकः ॥ (६–१०–४)
नू नश्चित्रं पुरुवाजाभिरूती अग्ने रयिं मघवद्भ्यश्च धेहि ।
ये राधसा श्रवसा चात्यन्यान्सुवीर्येभिश्चाभि सन्ति जनान् ॥ (६–१०–५)
इमं यज्ञं चनो धा अग्न उशन्यं त आसानो जुहुते हविष्मान् ।
भरद्वाजेषु दधिषे सुवृक्तिमवीर्वाजस्य गध्यस्य सातौ ॥ (६–१०–६)
वि द्वेषांसीनुहि वर्धयेळां मदेम शतहिमाः सुवीराः ॥ (६–१०–७)
यजस्व होतरिषितो यजीयानग्ने बाधो मरुतां न प्रयुक्ति ।
आ नो मित्रावरुणा नासत्या द्यावा होत्राय पृथिवी ववृत्याः ॥ (६–११–१)
त्वं होता मन्द्रतमो नो अध्रुगन्तर्देवो विदथा मर्त्येषु ।
पावकया जुह्वा वह्निरासाग्ने यजस्व तन्वं तव स्वाम् ॥ (६–११–२)
धन्या चिद्धि त्वे धिषणा वष्टि प्र देवाञ्जन्म गृणते यजध्यै ।
वेपिष्ठो अङ्गिरसां यद्ध विप्रो मधु च्छन्दो भनति रेभ इष्टौ ॥ (६–११–३)
अदिद्युतत्स्वपाको विभावाग्ने यजस्व रोदसी उरूची ।
आयुं न येमसा रातहव्या अञ्जन्ति सुप्रयसं पञ्च जनाः ॥ (६–११–४)
वृञ्जे ह यन्नमसा बर्हिरग्नावयामि स्रुग् घृतवती सुवृक्तिः ।
अम्यक्षि सद्म सदने पृथिव्या अश्रायि यज्ञः सूर्ये न चक्षुः ॥ (६–११–५)
दशस्या नः पुर्वणीक होतर्देवेभिरग्ने अग्निभिरिधानः ।
रायः सूनो सहसो वावसाना अति स्रसेम वृजनं नांहः ॥ (६–११–६)
मध्ये होता दुरोणे बर्हिषो राळग्निस्तोदस्य रोदसी यजध्यै ।
अयं स सूनुः सहस ऋतावा दूरात्सूर्यो न शोचिषा ततान ॥ (६–१२–१)
आ यस्मिन्त्वे स्वपाके यजत्र यक्षद्राजन्सर्वतातेव नु द्यौः ।
त्रिषधस्थस्ततरुषो न जंहो हव्या मघानि मानुषा यजध्यै ॥ (६–१२–२)
तेजिष्ठा यस्यारतिर्वनेराट् तोदो अध्वन्न वृधसानो अद्यौत् ।
अद्रोघो न द्रविता चेतति त्मन्न अमर्त्योऽवर्त्र ओषधीषु ॥ (६–१२–३)

सास्माकेभिरेतरी न शूषैरग्नि ष्टवे दम आ जातवेदाः ।
द्रूवन्नो वन्वन्क्रत्वा नार्वोस्रः पितेव जारयायि यज्ञैः ॥ (६–१२–४)
अध स्मास्य पनयन्ति भासो वृथा यत्तक्षदनुयाति पृथ्वीम् ।
सद्यो यः स्यन्द्रो विषितो धवीयान् ऋणो न तायुरति धन्वा राट् ॥ (६–१२–५)
स त्वं नो अर्वन्निदाया विश्वेभिरग्ने अग्निभिरिधानः ।
वेषि रायो वि यासि दुच्छुना मदेम शतहिमाः सुवीराः ॥ (६–१२–६)
त्वद्विश्वा सुभग सौभगान्यग्ने वि यन्ति वनिनो न वयाः ।
श्रुष्टी रयिर्वाजो वृत्रतूर्ये दिवो वृष्टिरीड्यो रीतिरपाम् ॥ (६–१३–१)
त्वं भगो न आ हि रत्नमिषे परिज्मेव क्षयसि दस्मवर्चाः ।
अग्ने मित्रो न बृहत ऋतस्यासि क्षत्ता वामस्य देव भूरेः ॥ (६–१३–२)
स सत्पतिः शवसा हन्ति वृत्रमग्ने विप्रो वि पणेर्भर्ति वाजम् ।
यं त्वं प्रचेत ऋतजात राया सजोषा नप्त्रापां हिनोषि ॥ (६–१३–३)
यस्ते सूनो सहसो गीर्भिरुक्थैर्यज्ञैर्मर्तो निशितिं वेद्यानट् ।
विश्वं स देव प्रति वारमग्ने धत्ते धान्यं पत्यते वसव्यैः ॥ (६–१३–४)
ता नृभ्य आ सौश्रवसा सुवीराग्ने सूनो सहसः पुष्यसे धाः ।
कृणोषि यच्छवसा भूरि पश्वो वयो वृकायारये जसुरये ॥ (६–१३–५)
वद्मा सूनो सहसो नो विहाया अग्ने तोकं तनयं वाजि नो दाः ।
विश्वाभिर्गीर्भिरभि पूर्तिमश्यां मदेम शतहिमाः सुवीराः ॥ (६–१३–६)
तं सुप्रतीकं सुदृशं स्वञ्चमविद्वांसो विदुष्टरं सपेम ।
स यक्षद्विश्वा वयुनानि विद्वान्प्र हव्यमग्निरमृतेषु वोचत् ॥ (६–१५–१०)
तमग्ने पास्युत तं पिपर्षि यस्त आनट् कवये शूर धीतिम् ।
यज्ञस्य वा निशितिं वोदितिं वा तमित्पृणक्षि शवसोत राया ॥ (६–१५–११)
त्वमग्ने वनुष्यतो नि पाहि त्वमु नः सहसावन्न अवद्यात् ।
सं त्वा ध्वस्मन्वदभ्येतु पाथः सं रयि स्पृहयाय्यः सहस्री ॥ (६–१५–१२)
अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः ।
देवानामुत यो मर्त्यानां यजिष्ठः स प्र यजतामृतावा ॥ (६–१५–१३)
अग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा ।
ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्य ॥ (६–१५–१४)
अभि प्रयांसि सुधितानि हि ख्यो नि त्वा दधीत रोदसी यजध्यै ।

अवा नो मघवन्वाजसातावग्ने विश्वानि दुरिता तरेम ता तरेम तवावसा तरेम ॥ (६–१५–१५)

हुवे वः सुद्योत्मानं सुवृक्तिं विशामग्निमतिथिं सुप्रयसम् ।
मित्र इव यो दिधिषाय्यो भूद्देव आदेवे जने जातवेदाः ॥ (२–४–१)
इमं विधन्तो अपां सधस्थे द्वितादधुर्भृगवो विक्ष्वायोः ।
एष विश्वान्यभ्यस्तु भूमा देवानामग्निररतिर्जीराश्वः ॥ (२–४–२)
अग्निं देवासो मानुषीषु विक्षु प्रियं धुः क्षेष्यन्तो न मित्रम् ।
स दीदयदुशतीरूर्म्या आ दक्षाय्यो यो दास्वते दम आ ॥ (२–४–३)
अस्य रण्वा स्वस्येव पुष्टिः संदृष्टिरस्य हियानस्य दक्षोः ।
वि यो भरिभ्रदोषधीषु जिह्वामत्यो न रथ्यो दोधवीति वारान् ॥ (२–४–४)
आ यन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम् ।
स चित्रेण चिकिते रंसु भासा जुजुर्वाँ यो मुहुरा युवा भूत् ॥ (२–४–५)
आ यो वना तातृषाणो न भाति वार्ण पथा रथ्येव स्वानीत् ।
कृष्णाध्वा तपू रण्वश्चिकेत द्यौरिव स्मयमानो नभोभिः ॥ (२–४–६)
स यो व्यस्थादभि दक्षदुर्वीं पशुर्नैति स्वयुरगोपाः ।
अग्निः शोचिष्माँ अतसान्युष्णन्कृष्णव्यथिरस्वदयन्न भूम ॥ (२–४–७)
नू ते पूर्वस्यावसो अधीतौ तृतीये विदथे मन्म शंसि ।
अस्मे अग्ने संयद्वीर्तृहन्तं क्षुमन्तं वाजं स्वपत्यं रयिं दाः ॥ (२–४–८)
त्वया यथा गृत्समदासो अग्ने गुहा वन्वन्त उपराँ अभि ष्युः ।
सुवीरासो अभिमातिषाहः स्मत्सूरिभ्यो गृणते तद्वयो धाः ॥ (२–४–९)
नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत्सुदक्षः ।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः ॥ (२–९–१)
त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता ।
अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपाः ॥ (२–९–२)
विधेम ते परमे जन्मन्न अग्ने विधेम स्तोमैरवरे सधस्थे ।
यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवींषि जुहुरे समिद्धे ॥ (२–९–३)
अग्ने यजस्व हविषा यजीयाञ् च्छ्रुष्टी देष्णमभि गृणीहि राधः ।
त्वं ह्यसि रयिपती रयीणां त्वं शुक्रस्य वचसो मनोता ॥ (२–९–४)
उभयं ते न क्षीयते वसव्यं दिवे–दिवे जायमानस्य दस्म ।
कृधि क्षुमन्तं जरितारमग्ने कृधि पत्स्विपत्यस्य रायः ॥ (२–९–५)

सैनानीकेन सुविदत्रो अस्मे यष्टा देवाँ आयजिष्ठः स्वस्ति ।
अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि ॥ (२–९–६)
जोहूत्रो अग्निः प्रथमः पितेवेळस्पदे मनुषा यत्समिद्धः ।
श्रियं वसानो अमृतो विचेता मर्मृजेन्यः श्रवस्यः स वाजी ॥ (२–१०–१)
श्रूया अग्निश्चित्रभानुर्हवं मे विश्वाभिगीर्भिरमृतो विचेताः ।
श्यावा रथं वहतो रोहिता वोतारुषाह चक्रे विभृत्रः ॥ (२–१०–२)
उत्तानायामजनयन्सुषूतं भुवदग्निः पुरुपेशासु गर्भः ।
शिरिणायां चिदक्तुना महोभिरपरीवृतो वसति प्रचेताः ॥ (२–१०–३)
जिघर्म्यग्निं हविषा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा ।
पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभसं दृशानम् ॥ (२–१०–४)
आ विश्वतः प्रत्यञ्चं जिघर्म्यरक्षसा मनसा तज्जुषेत ।
मर्यश्री स्पृहयद्वर्णो अग्निर्नाभिमृशे तन्वा जर्भुराणः ॥ (२–१०–५)
ज्ञेया भागं सहसानो वरेण त्वादूतासो मनुवद्वदेम ।
अनूनमग्निुह्वा वचस्या मधुपृचं धनसा जोहवीमि ॥ (२–१०–६)
त्रिमूर्धानं सप्तरश्मिंगृणीषेऽनूनमग्निं पित्रोरुपस्थे ।
निषत्तमस्य चरतो ध्रुवस्य विश्वा दिवो रोचनापप्रिवांसम् ॥ (१–१४६–१)
उक्षा महाँ अभि ववक्ष एने अजरस्तस्थावित ऊतिर्ऋष्वः ।
उर्व्याः पदो नि दधाति सानौ रिहन्त्यूधो अरुषासो अस्य ॥ (१–१४६–२)
समानं वत्समभि संचरन्ती विष्वग् धेनू वि चरतः सुमेके ।
अनपवृज्याँ अध्वनो मिमाने विश्वान् केताँ अधि महो दधाने ॥ (१–१४६–३)
धीरासः पदं कवयो नयन्ति नाना ह्दा रक्षमाणा अजुर्यम् ।
सिषासन्तः पर्यपश्यन्त सिन्धुमाविरेभ्यो अभवत्सूर्यो नॄन् ॥ (१–१४६–४)
दिदृक्षेण्यः परि काष्ठासु जेन्य ईळेन्यो महो अर्भाय जीवसे ।
पुरुत्रा यदभवत्सूरहैभ्यो गर्भेभ्यो मघवा विश्वदर्शतः ॥ (१–१४६–५)
कथा ते अग्ने शुचयन्त आयोर्ददाशुर्वाजेभिराशुषाणाः ।
उभे यत्तोके तनये दधाना ऋतस्य सामन्रणयन्त देवाः ॥ (१–१४७–१)
बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः ।
पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तन्वं वन्दे अग्ने ॥ (१–१४७–२)
ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।

ररक्ष तान्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥ (१–१४७–३)

यो नो अग्ने अररिवाँ अघायुररातीवा मर्चयति द्वयेन ।

मन्त्रो गुरुः पुनरस्तु सो अस्मा अनु मृक्षीष्ट तन्वं दुरुक्तैः ॥ (१–१४७–४)

उत वा यः सहस्य प्रविद्वान्मर्तो मर्तं मर्चयति द्वयेन ।

अतः पाहि स्तवमान स्तुवन्तमग्ने माकिनी दुरिताय धायीः ॥ (१–१४७–५)

मथीद्यदीं विष्टो मातरिश्वा होतारं विश्वाप्सुं विश्वदेव्यम् ।

नि यं दधुर्मनुष्यासु विक्षु स्वर्ण चित्रं वपुषे विभावम् ॥ (१–१४८–१)

ददानमिन्न ददभन्त मन्माग्निर्वरूथं मम तस्य चाकन् ।

जुषन्त विश्वान्यस्य कर्मोपस्तुतिं भरमाणस्य कारोः ॥ (१–१४८–२)

नित्ये चिन्नु यं सदने जगृभ्रे प्रशस्तिभिर्दधिरे यज्ञियासः ।

प्र सू नयन्त गृभयन्त इष्टावश्वासो न रथ्यो रारहाणाः ॥ (१–१४८–३)

पुरूणि दस्मो नि रिणाति जम्भैराद्रोचते वन आ विभावा ।

आदस्य वातो अनु वाति शोचिरस्तुर्न शर्यामसनामनु द्यून् ॥ (१–१४८–४)

न यं रिपवो न रिषण्यवो गर्भे सन्तं रेषणा रेषयन्ति ।

अन्धा अपश्या न दभन्न अभिख्या नित्यास ईं प्रेतारो अरक्षन् ॥ (१–१४८–५)

वह्निं यशसं विदथस्य केतुं सुप्राव्यं दूतं सद्योअर्थम् ।

द्विजन्मानं रयिमिव प्रशस्तं रातिं भरद्भृगवे मातरिश्वा ॥ (१–६०–१)

अस्य शासुरुभयासः सचन्ते हविष्मन्त उशिजो ये च मर्ताः ।

दिवश्चित्पूर्वो न्यसादि होतापृच्छयो विश्पतिर्विक्षु वेधाः ॥ (१–६०–२)

तं नव्यसी ह्रद आ जायमानमस्मत्सुकीर्तिर्मधुजिह्वमश्याः ।

यमृत्विजो वृजने मानुषासः प्रयस्वन्त आयवो जीजनन्त ॥ (१–६०–३)

उशिक्पावको वसुर्मानुषेषु वरेण्यो होताधायि विक्षु ।

दमूना गृहपतिर्दम आँ अग्निर्भुवद्रयिपती रयीणाम् ॥ (१–६०–४)

तं त्वा वयं पतिमग्ने रयीणां प्र शंसामो मतिभिगीतमासः ।

आशुं न वाजम्भरं मर्जयन्तः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ (१–६०–५)

उप प्र जिन्वन्नुशतीरुशन्तं पतिं न नित्युानयः सनीळाः ।

स्वसारः श्यावीमरुषीमजुष्रञ् चित्रमुच्छन्तीमुषसं न गावः ॥ (१–७१–१)

वीळु चिद्दृळ्हा पितरो न उक्थैरद्रिं रुजन्न अङ्गिरसो रवेण ।

चक्रुर्दिवो बृहतो गातुमस्मे अहः स्वर्विविदुः केतुमुस्राः ॥ (१–७१–२)

दधन्न ऋतं धनयन्न अस्य धीतिमादिदर्यो दिधिष्वो विभृत्राः ।
अतृष्यन्तीरपसो यन्त्यच्छा देवाञ्जन्म प्रयसा वर्धयन्तीः ॥ (१–७१–३)
मथीद्यदीं विभृतो मातरिश्वा गृहे गृहे श्येतो जेन्यो भूत् ।
आदीं राज्ञे न सहीयसे सचा सन्न आ दूत्यं भृगवाणो विवाय ॥ (१–७१–४)
महे यत्पित्र ईं रसं दिवे करव त्सरत्पृशन्यश्चिकित्वान् ।
सृजदस्ता धृषता दिद्युमस्मै स्वायां देवो दुहितरि त्विषिं धात् ॥ (१–७१–५)
स्व आ यस्तुभ्यं दम आ विभाति नमो वा दाशादुशतो अनु द्यून् ।
वर्धो अग्ने वयो अस्य द्विबर्हा यासद्राया सरथं युनासि ॥ (१–७१–६)
अग्निं विश्वा अभि पृक्षः सचन्ते समुद्रं न स्रवतः सप्त यह्वीः ।
न जामिभिर्वि चिकिते वयो नो विदा देवेषु प्रमतिं चिकित्वान् ॥ (१–७१–७)
आ यदिषे नृपतिं तेज आनट्छुचि रेतो निषिक्तं द्यौरभीके ।
अग्निः शर्धमनवद्यं युवानं स्वाध्युनयत्सूदयच्च ॥ (१–७१–८)
मनो न योऽध्वनः सद्य एत्येकः सत्रा सूरो वस्व ईशे ।
राजाना मित्रावरुणा सुपाणी गोषु प्रियममृतं रक्षमाणा ॥ (१–७१–९)
मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठा अभि विदुष् कविः सन् ।
नभो न रूपं जरिमा मिनाति पुरा तस्या अभिशस्तेरधीहि ॥ (१–७१–१०)
नि काव्या वेधसः शश्वतस्कर्हस्ते दधानो नर्या पुरूणि ।
अग्निर्भुवद्रयिपती रयीणां सत्रा चक्राणो अमृतानि विश्वा ॥ (१–७२–१)
अस्मे वत्सं परि षन्तं न विन्दन्निच्छन्तो विश्वे अमृता अमूराः ।
श्रमयुवः पदव्यो धियंधास्तस्थुः पदे परमे चार्वग्नेः ॥ (१–७२–२)
तिस्रो यदग्ने शरदस्त्वामिच्छुचिं घृतेन शुचयः सपर्यान् ।
नामानि चिद्दधिरे यज्ञियान्यसूदयन्त तन्वः सुजाताः ॥ (१–७२–३)
आ रोदसी बृहती वेविदानाः प्र रुद्रिया जभ्रिरे यज्ञियासः ।
विदन्मर्तो नेमधिता चिकित्वानग्निंपदे परमे तस्थिवांसम् ॥ (१–७२–४)
संजानाना उप सीदन्न अभिज्ञु पत्नीवन्तो नमस्योमस्यन् ।
रिरिक्वांसस्तन्वः कृण्वत स्वाः सखा सख्युर्निमिषि रक्षमाणाः ॥ (१–७२–५)
त्रिः सप्त यद्गुह्यानि त्वे इत्पदाविदन्निहिता यज्ञियासः ।
तेभी रक्षन्ते अमृतं सजोषाः पशूञ्च स्थातॄञ्चरथं च पाहि ॥ (१–७२–६)
विद्वाँ अग्ने वयुनानि क्षितीनां व्यानुषक्छुरुधो जीवसे धाः ।

अन्तर्विद्वाँ अध्वनो देवयानानतन्द्रो दूतो अभवो हविर्वाट् ॥ (१–७२–७)
स्वाध्यो दिव आ सप्त यह्वी रायो दुरो व्यृतज्ञा अजानन् ।
विदद्गव्यं सरमा दृळ्हमूर्वं येना नु कं मानुषी भोजते विट् ॥ (१–७२–८)
आ ये विश्वा स्वपत्यानि तस्थुः कृण्वानासो अमृतत्वाय गातुम् ।
मह्ना महद्भिः पृथिवी वि तस्थे माता पुत्रैरदितिर्धायसे वेः ॥ (१–७२–९)
अधि श्रियं नि दधुश्चारुमस्मिन् दिवो यदक्षी अमृता अकृण्वन् ।
अध क्षरन्ति सिन्धवो न सृष्टाः प्र नीचीरग्ने अरुषीरजानन् ॥ (१–७२–१०)
रयिर्न यः पितृवित्तो वयोधाः सुप्रणीतिश्चिकितुषो न शासुः ।
स्योनशीरतिथिर्न प्रीणानो होतेव सद्म विधतो वि तारीत् ॥ (१–७३–१)
देवो न यः सविता सत्यमन्मा क्रत्वा निपाति वृजनानि विश्वा ।
पुरुप्रशस्तो अमतिर्न सत्य आत्मेव शेवो दिधिषाय्यो भूत् ॥ (१–७३–२)
देवो न यः पृथिवीं विश्वधाया उपक्षेति हितमित्रो न राजा ।
पुरःसदः शर्मसदो न वीरा अनवद्या पतिजुष्टेव नारी ॥ (१–७३–३)
तं त्वा नरो दम आ नित्यमिद्धमग्ने सचन्त क्षितिषु ध्रुवासु ।
अधि द्युम्नं नि दधुर्भूर्यस्मिन् भवा विश्वायुर्धरुणो रयीणाम् ॥ (१–७३–४)
वि पृक्षो अग्ने मघवानो अश्युर्वि सूरयो ददतो विश्वमायुः ।
सनेम वाजं समिथेष्वर्यो भागं देवेषु श्रवसे दधानाः ॥ (१–७३–५)
ऋतस्य हि धेनवो वावशानाः स्मदूध्नीः पीपयन्त द्युभक्ताः ।
परावतः सुमतिं भिक्षमाणा वि सिन्धवः समया सस्रुरद्रिम् ॥ (१–७३–६)
त्वे अग्ने सुमतिं भिक्षमाणा दिवि श्रवो दधिरे यज्ञियासः ।
नक्ता च चक्रुरुषसा विरूपे कृष्णं च वर्णमरुणं च सं धुः ॥ (१–७३–७)
यान्राये मर्तान्सुषूदो अग्ने ते स्याम मघवानो वयं च ।
च्छायेव विश्वं भुवनं सिसक्ष्यापप्रिवान्रोदसी अन्तरिक्षम् ॥ (१–७३–८)
अर्वद्भिरग्ने अर्वतो नृभिर्नॄन्वीरैर्वीरान्वनुयामा त्वोताः ।
ईशानासः पितृवित्तस्य रायो वि सूरयः शतहिमा नो अश्युः ॥ (१–७३–९)
एता ते अग्न उचथानि वेधो जुष्टानि सन्तु मनसे हृदे च ।
शकेम रायः सुधुरो यमं तेऽधि श्रवो देवभक्तं दधानाः ॥ (१–७३–१०)
का त उपेतिर्मनसो वराय भुवदग्ने शंतमा का मनीषा ।
को वा यज्ञैः परि दक्षं त आप केन वा ते मनसा दाशेम ॥ (१–७६–१)

एह्यग्न इह होता नि षीदादब्धः सु पुरएता भवा नः ।
अवतां त्वा रोदसी विश्वमिन्वे यजा महे सौमनसाय देवान् ॥ (१–७६–२)
प्र सु विश्वान्रक्षसो धक्ष्यग्ने भवा यज्ञानामभिशस्तिपावा ।
अथा वह सोमपतिं हरिभ्यामातिथ्यमस्मै चकृमा सुदाव्ने ॥ (१–७६–३)
प्रजावता वचसा वह्निरासा च हुवे नि च सत्सीह देवैः ।
वेषि होत्रमुत पोत्रं यजत्र बोधि प्रयन्तर्जनितर्वसूनाम् ॥ (१–७६–४)
यथा विप्रस्य मनुषो हविर्भिर्देवाँ अयजः कविभिः कविः सन् ।
एवा होतः सत्यतर त्वमद्याग्ने मन्द्रया जुह्वा यजस्व ॥ (१–७६–५)
कथा दाशेमाग्नये कास्मै देवजुष्टोच्यते भामिने गीः ।
यो मर्त्येष्वमृत ऋतावा होता यजिष्ठ इत्कृणोति देवान् ॥ (१–७७–१)
यो अध्वरेषु शंतम ऋतावा होता तमू नमोभिरा कृणुध्वम् ।
अग्निर्यद्वेर्मर्ताय देवान्स चा बोधाति मनसा यजाति ॥ (१–७७–२)
स हि क्रतुः स मर्यः स साधुर्मित्रो न भूदद्भुतस्य रथीः ।
तं मेधेषु प्रथमं देवयन्तीर्विश उप ब्रुवते दस्ममारीः ॥ (१–७७–३)
स नो नृणां नृतमो रिशादा अग्निर् गिरोऽवसा वेतु धीतिम् ।
तना च ये मघवानः शविष्ठा वाजप्रसूता इषयन्त मन्म ॥ (१–७७–४)
एवाग्निर्गोतमेभिर्ऋतावा विप्रेभिरस्तोष्ट जातवेदाः ।
स एषु द्युम्नं पीपयत्स वाजं स पुष्टिं याति जोषमा चिकित्वान् ॥ (१–७७–५)
हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान् ।
शुचिभ्राजा उषसो नवेदा यशस्वतीरपस्युवो न सत्याः ॥ (१–७९–१)
आ ते सुपर्णा अमिनन्तँ एवैः कृष्णो नोनाव वृषभो यदीदम् ।
शिवाभिर्न स्मयमानाभिरागात्पतन्ति मिहः स्तनयन्त्यभ्रा ॥ (१–७९–२)
यदीमृतस्य पयसा पियानो नयन्नृतस्य पथिभी रजिष्ठैः ।
अर्यमा मित्रो वरुणः परिज्मा त्वचं पृञ्चन्त्युपरस्य योनौ ॥ (१–७९–३)
अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु ।
नाना हनू विभृते सं भरेते असिन्वती बप्सती भूर्यत्तः ॥ (१०–७९–१)
गुहा शिरो निहितमृधगक्षी असिन्वन्नत्ति जिह्वया वनानि ।
अत्राण्यस्मै पड्भिः सं भरन्त्युत्तानहस्ता नमसाधि विक्षु ॥ (१०–७९–२)
प्र मातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः ।

ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः ॥ (१०–७९–३)

तद्वामृतं रोदसी प्र ब्रवीमि जायमानो मातरा गर्भो अत्ति ।

नाहं देवस्य मर्त्यश्चिकेताग्निरङ्ग विचेताः स प्रचेताः ॥ (१०–७९–४)

यो अस्मा अन्नं तृष्वादधात्याज्यैर् घृतैर्जुहोति पुष्यति ।

तस्मै सहस्रमक्षभिर्वि चक्षेऽग्ने विश्वतः प्रत्यङ्ङ् असि त्वम् ॥ (१०–७९–५)

किं देवेषु त्यज एनश्चकर्थाग्ने पृच्छामि नु त्वामविद्वान् ।

अक्रीळन्क्रीळन्हरिरत्तवेऽदन्वि पर्वशश्चकर्त गामिवासिः ॥ (१०–७९–६)

विषूचो अश्वान्युयुजे वनेजा ऋजीतिभी रशनाभिर्गृभीतान् ।

चक्षदे मित्रो वसुभिः सुजातः समानृधे पर्वभिर्वावृधानः ॥ (१०–७९–७)

अग्निः सप्तिं वाजम्भरं ददात्यग्निर्वीरं श्रुत्यं कर्मनिष्ठाम् ।

अग्नी रोदसी वि चरत्समञ्जन्न अग्निर्नारीं वीरकुक्षिं पुरंधिम् ॥ (१०–८०–१)

अग्नेरप्नसः समिदस्तु भद्राग्निर्मही रोदसी आ विवेश ।

अग्निरेकं चोदयत्समत्स्वग्निर्वृत्राणि दयते पुरूणि ॥ (१०–८०–२)

अग्निर्ह त्युरतः कर्णमावाग्निरद्भ्यो निरदहज्जरूथम् ।

अग्निरत्रिं घर्म उरुष्यदन्तरग्निर्नृमेधं प्रजयासृजत्सम् ॥ (१०–८०–३)

अग्निर्दाद्द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रा सनोति ।

अग्निर्दिवि हव्यमा ततानाग्नेर्धामानि विभृता पुरुत्रा ॥ (१०–८०–४)

अग्निमुक्थैर्ऋषयो वि ह्वयन्तेऽग्निं नरो यामनि बाधितासः ।

अग्निं वयो अन्तरिक्षे पतन्तोऽग्निः सहस्रा परि याति गोनाम् ॥ (१०–८०–५)

अग्निं विश ईळते मानुषीर्या अग्निं मनुषो नहुषो वि जाताः ।

अग्निर्गान्धर्वीं पथ्यामृतस्याग्नेर्गव्यूतिर् घृत आ निषत्ता ॥ (१०–८०–६)

अग्नये ब्रह्म ऋभवस्ततक्षुरग्निं महामवोचामा सुवृक्तिम् ।

अग्ने प्राव जरितारं यविष्ठाग्ने महि द्रविणमा यजस्व ॥ (१०–८०–७)

द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते ।

हरिरन्यस्यां भवति स्वधावाञ् च्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ (१–९५–१)

दशेमं त्वष्टुर्जनयन्त गर्भमतन्द्रासो युवतयो विभृत्रम् ।

तिग्मानीकं स्वयशसं जनेषु विरोचमान्परि षीं नयन्ति ॥ (१–९५–२)

त्रीणि जाना परि भूषन्त्यस्य समुद्र एकं दिव्येकमप्सु ।

पूर्वामनु प्र दिशं पार्थिवानामृतून्प्रशासद्वि दधावनुष्ठु ॥ (१–९५–३)

क इमं वो निण्यमा चिकेत वत्सो मातॄर्जनयत स्वधाभिः ।

बह्वीनां गर्भो अपसामुपस्थान्महान्कविर्निश्चरति स्वधावान् ॥ (१–९५–४)

आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे ।

उभे त्वष्टुर् बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते ॥ (१–९५–५)

उभे भद्रे जोषयेते न मेने गावो न वाश्रा उप तस्थुरेवैः ।

स दक्षाणां दक्षपतिर्बभूवाञ्जन्ति यं दक्षिणतो हविर्भिः ॥ (१–९५–६)

उद्यंयमीति सवितेव बाहू उभे सिचौ यतते भीम ऋञ्जन् ।

उच्छुक्रमत्कमजते सिमस्मान्नवा मातृभ्यो वसना जहाति ॥ (१–९५–७)

त्वेषं रूपं कृणुत उत्तरं यत्सम्पृञ्चानः सदने गोभिरद्भिः ।

कविर्बुध्नंपरि मर्मृज्यते धीः सा देवताता समितिर्बभूव ॥ (१–९५–८)

उरु ते ज्रयः पर्येति बुध्नं विरोचमानं महिषस्य धाम ।

विश्वेभिरग्ने स्वयशोभिरिद्धोऽदब्धेभिः पायुभिः पाह्यस्मान् ॥ (१–९५–९)

धन्वन्स्रोतः कृणुते गातुमूर्मिं शुक्रैरूर्मिभिरभि नक्षति क्षाम् ।

विश्वा सनानि जठरेषु धत्तेऽन्तर्नवासु चरति प्रसूषु ॥ (१–९५–१०)

एवा नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ (१–९५–११)

स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा । आपश्च मित्रं धिषणा च साधन्देवा अग्निं धारयन्द्रविणोदाम् ॥ (१–९६–१)

स पूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन्मनूनाम् । विवस्वता चक्षसा द्यामपश्च देवा अग्निं धारयन्द्रविणोदाम् ॥ (१–९६–२)

तमीळत प्रथमं यज्ञसाधं विश आरीराहुतमृञ्जसानम् ।

ऊर्जः पुत्रं भरतं सृप्रदानुं देवा अग्निं धारयन्द्रविणोदाम् ॥ (१–९६–३)

स मातरिश्वा पुरुवारपुष्टिर्विदद्गातुं तनयाय स्वर्वित् ।

विशां गोपा जनिता रोदस्योर्देवा अग्निं धारयन्द्रविणोदाम् ॥ (१–९६–४)

नक्तोषासा वर्णमामेम्याने धापयेते शिशुमेकं समीची ।

द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन्द्रविणोदाम् ॥ (१–९६–५)

रायो बुध्नः सङ्गमनो वसूनां यज्ञस्य केतुर्मन्मसाधनो वेः ।

अमृतत्वं रक्षमाणास एनं देवा अग्निं धारयन्द्रविणोदाम् ॥ (१–९६–६)

नू च पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षाम् ।

सतश्च गोपां भवतश्च भूरेर्देवा अग्निं धारयन्द्रविणोदाम् ॥ (१–९६–७)

द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्र यंसत् ।

द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः ॥ (१–९६–८)

एवा नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि । त

न्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ (१–९६–९)

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।

युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥ (१–१८९–१)

अग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा ।

पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥ (१–१८९–२)

अग्ने त्वमस्मद्युयोध्यमीवा अनग्नित्रा अभ्यमन्त कृष्टीः ।

पुनरस्मभ्यं सुविताय देव क्षां विश्वेभिरमृतेभिर्यजत्र ॥ (१–१८९–३)

पाहि नो अग्ने पायुभिरजस्रैरुत प्रिये सदन आ शुशुक्वान् ।

मा ते भयुरितारं यविष्ठ नूनं विदन्मापरं सहस्वः ॥ (१–१८९–४)

मा नो अग्नेऽव सृजो अघायाविष्यवे रिपवे दुच्छुनायै ।

मा दत्वते दशते मादते नो मा रीषते सहसावन्परा दाः ॥ (१–१८९–५)

वि घ त्वावाँ ऋतजात यंसद्गृणानो अग्ने तन्वे वरूथम् ।

विश्वाद्रिरिक्षोरुत वा निनित्सोरभिह्रुतामसि हि देव विष्पट् ॥ (१–१८९–६)

त्वं ताँ अग्न उभयान्वि विद्वान्वेषि प्रपित्वे मनुषो यजत्र ।

अभिपित्वे मनवे शास्यो भूर्मर्मृजेन्य उशिग्भिर्नाक्रः ॥ (१–१८९–७)

अवोचाम निवचनान्यस्मिन्मानस्य सूनुः सहसाने अग्नौ ।

वयं सहस्रमृषिभिः सनेम विद्यामेषं वृजनुीरदानुम् ॥ (१–१८९–८)

अग्रे बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान्तमसो ज्योतिषागात् ।

अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः ॥ (१०–१–१)

स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु ।

चित्रः शिशुः परि तमांस्यक्तून्प्र मातृभ्यो अधि कनिक्रदत् गाः ॥ (१०–१–२)

विष्णुरित्था परममस्य विद्वाञ्जातो बृहन्न अभि पाति तृतीयम् ।

आसा यदस्य पयो अक्रत स्वं सचेतसो अभ्यर्चन्त्यत्र ॥ (१०–१–३)

अत उ त्वा पितुभृतो जनित्रीरन्नावृधं प्रति चरन्त्यन्नैः ।

ता ईं प्रत्येषि पुनरन्यरूपा असि त्वं विक्षु मानुषीषु होता ॥ (१०–१–४)

होतारं चित्ररथमध्वरस्य यज्ञस्य यज्ञस्य केतुं रुशन्तम् ।
प्रत्यर्धिं देवस्य देवस्य मह्ना श्रिया त्वग्निमतिथिं जनानाम् ॥ (१०–१–५)
स तु वस्त्राण्यध पेशनानि वसानो अग्निर्नाभा पृथिव्याः ।
अरुषो जातः पद इळायाः पुरोहितो राजन्यक्षीह देवान् ॥ (१०–१–६)
आ हि द्यावापृथिवी अग्न उभे सदा पुत्रो न मातरा ततन्थ ।
प्र याह्यच्छोशतो यविष्ठाथा वह सहस्येह देवान् ॥ (१०–१–७)
पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँर्ऋतुपते यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः ॥ (१०–२–१)
वेषि होत्रमुत पोत्रं जनानां मन्धातासि द्रविणोदा ऋतावा ।
स्वाहा वयं कृणवामा हवींषि देवो देवान्यजत्वग्निरर्हन् ॥ (१०–२–२)
आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोळ्हुम् ।
अग्निर्विद्वान्स यजात्सेदु होता सो अध्वरान्स ऋतून्कल्पयाति ॥ (१०–२–३)
यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः ।
अग्निष्टद्विश्वमा पृणाति विद्वान्येभिर्देवाँ ऋतुभिः कल्पयाति ॥ (१०–२–४)
यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः ।
अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजाति ॥ (१०–२–५)
विश्वेषां ह्यध्वराणामनीकं चित्रं केतुं जनिता त्वा जजान ।
स आ यजस्व नृवतीरनु क्षा स्पार्हा इषः क्षुमतीर्विश्वजन्याः ॥ (१०–२–६)
यं त्वा द्यावापृथिवी यं त्वापस्त्वष्टा यं त्वा सुजनिमा जजान ।
पन्थामनु प्रविद्वान् पितृयाणं द्युमदग्ने समिधानो वि भाहि ॥ (१०–२–७)
इनो राजन्न अरतिः समिद्धो रौद्रो दक्षाय सुषुमाँ अदर्शि ।
चिकिद्वि भाति भासा बृहतासिक्नीमेति रुशतीमपाजन् ॥ (१०–३–१)
कृष्णां यदेनीमभि वर्पसा भूज्जनयन्योषां बृहतः पितुर्जाम् ।
ऊर्ध्वं भानुं सूर्यस्य स्तभायन् दिवो वसुभिररतिर्वि भाति ॥ (१०–३–२)
भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात् ।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभि राममस्थात् ॥ (१०–३–३)
अस्य यामासो बृहतो न वग्नूनिन्धाना अग्नेः सख्युः शिवस्य ।
ईळ्यस्य वृष्णो बृहतः स्वासो भामासो यामन्न अक्तवश्चिकित्रे ॥ (१०–३–४)
स्वना न यस्य भामासः पवन्ते रोचमानस्य बृहतः सुदिवः ।

ज्येष्ठेभिर्यस्तेजिष्ठैः क्रीळुमद्भिर्वर्षिष्ठेभिर्भानुभिर्नक्षति द्याम् ॥ (१०–३–५)

अस्य शुष्मासो ददृशानपवेर्जेहमानस्य स्वनयन्नियुद्भिः ।

प्रत्नेभिर्यो रुशद्भिर्देवतमो वि रेभद्भिररतिर्भाति विभ्वा ॥ (१०–३–६)

स आ वक्षि महि न आ च सत्सि दिवस्पृथिव्योररतिर्युवत्योः ।

अग्निः सुतुकः सुतुकेभिरश्वै रभस्वद्भी रभस्वाँ एह गम्याः ॥ (१०–३–७)

प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु ।

धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् ॥ (१०–४–१)

यं त्वा जनासो अभि संचरन्ति गाव उष्णमिव व्रजं यविष्ठ ।

दूतो देवानामसि मर्त्यानामन्तर्महांश्चरसि रोचनेन ॥ (१०–४–२)

शिशुं न त्वा जेन्यं वर्धयन्ती माता बिभर्ति सचनस्यमाना ।

धनोरधि प्रवता यासि हर्यञ् जिगीषसे पशुरिवावसृष्टः ॥ (१०–४–३)

मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से ।

शये वव्रिश्चरति जिह्वयादन्रेरिह्यते युवतिं विश्पतिः सन् ॥ (१०–४–४)

कूचिज्जायते सनयासु नव्यो वने तस्थौ पलितो धूमकेतुः ।

अस्नातापो वृषभो न प्र वेति सचेतसो यं प्रणयन्त मर्ताः ॥ (१०–४–५)

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम् ।

इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरङ्गैः ॥ (१०–४–६)

ब्रह्म च ते जातवेदो नमश्चेयं च गीः सदमिद्वर्धनी भूत् ।

रक्षा णो अग्ने तनयानि तोका रक्षोत नस्तन्वो अप्रयुच्छन् ॥ (१०–४–७)

एकः समुद्रो धरुणो रयीणामस्मद्धृदो भूरिजन्मा वि चष्टे ।

सिषक्त्यूधर्निण्योरुपस्थ उत्सस्य मध्ये निहितं पदं वेः ॥ (१०–५–१)

समानं नीळं वृषणो वसानाः सं जग्मिरे महिषा अर्वतीभिः ।

ऋतस्य पदं कवयो नि पान्ति गुहा नामानि दधिरे पराणि ॥ (१०–५–२)

ऋतायिनी मायिनी सं दधाते मित्वा शिशुं जज्ञतुर्वर्धयन्ती ।

विश्वस्य नाभिं चरतो ध्रुवस्य कवेश्चित्तन्तुं मनसा वियन्तः ॥ (१०–५–३)

ऋतस्य हि वर्तनयः सुजातमिषो वाजाय प्रदिवः सचन्ते ।

अधीवासं रोदसी वावसाने घृतैरन्नैर्वावृधाते मधूनाम् ॥ (१०–५–४)

सप्त स्वसृररुषीर्वावशानो विद्वान्मध्व उज्जभारा दृशे कम् ।

अन्तर्येमे अन्तरिक्षे पुराजा इच्छन्वव्रिमविदत्पूषणस्य ॥ (१०–५–५)

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् ।
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ॥ (१०–५–६)
असच्च सच्च परमे व्योमन्दक्षस्य जन्मन्न अदितेरुपस्थे ।
अग्निर्ह नः प्रथमजा ऋतस्य पूर्व आयुनि वृषभश्च धेनुः ॥ (१०–५–७)
अयं स यस्य शर्मन्न अवोभिरग्नेरेधते जरिताभिष्टौ ।
ज्येष्ठेभिर्यो भानुभिर्ऋषूणां पर्येति परिवीतो विभावा ॥ (१०–६–१)
यो भानुभिर्विभावा विभात्यग्निर्देवेभिर्ऋतावाजस्रः ।
आ यो विवाय सख्या सखिभ्योऽपरिह्वृतो अत्यो न सप्तिः ॥ (१०–६–२)
ईशे यो विश्वस्या देववीतेरीशे विश्वायुरुषसो व्युष्टौ ।
आ यस्मिन्मना हवींष्यग्नावरिष्टरथ स्कभ्नाति शूषैः ॥ (१०–६–३)
शूषेभिर्वृधो जुषाणो अर्कैर्देवाँ अच्छा रघुपत्वा जिगाति ।
मन्द्रो होता स जुह्वा यजिष्ठः सम्मिश्लो अग्निरा जिघर्ति देवान् ॥ (१०–६–४)
तमुस्रामिन्द्रं न रेजमानमग्न्गिीर्भिर्नमोभिरा कृणुध्वम् ।
आ यं विप्रासो मतिभिर्गृणन्ति जातवेदसं जुह्वं सहानाम् ॥ (१०–६–५)
सं यस्मिन्विश्वा वसूनि जग्मुर्वाजे नाश्वाः सप्तीवन्त एवैः ।
अस्मे ऊतीरिन्द्रवाततमा अर्वाचीना अग्न आ कृणुष्व ॥ (१०–६–६)
अधा ह्यग्ने मह्ना निषद्या सद्यो जज्ञानो हव्यो बभूथ ।
तं ते देवासो अनु केतमायन्न अधावर्धन्त प्रथमास ऊमाः ॥ (१०–६–७)
स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव ।
सचेमहि तव दस्म प्रकेतैरुरुष्या ण उरुभिर्देव शंसैः ॥ (१०–७–१)
इमा अग्ने मतयस्तुभ्युााता गोभिरश्वैरभि गृणन्ति राधः ।
यदा ते मर्तो अनु भोगमानड् वसो दधानो मतिभिः सुजात ॥ (१०–७–२)
अग्निं मन्ये पितरमग्निमापिमग्निं भ्रातरं सदमित्सखायम् ।
अग्नेरनीकं बृहतः सपर्यं दिवि शुक्रं यजतं सूर्यस्य ॥ (१०–७–३)
सिध्रा अग्ने धियो अस्मे सनुत्रीर्यं त्रायसे दम आ नित्यहोता ।
ऋतावा स रोहिदश्वः पुरुक्षुर्द्युभिरस्मा अहभिर्वाममस्तु ॥ (१०–७–४)
द्युभिर्हितं मित्रमिव प्रयोगं प्रत्नमृत्विजमध्वरस्य जारम् ।
बाहुभ्यामग्निमायवोऽजनन्त विक्षु होतारं न्यसादयन्त ॥ (१०–७–५)
स्वयं यजस्व दिवि देव देवान् किं ते पाकः कृणवदप्रचेताः ।

यथायज ऋतुभिर्देव देवान्वा यजस्व तन्वं सुजात ॥ (१०–७–६)

भवा नो अग्नेऽवितोत गोपा भवा वयस्कृदुत नो वयोधाः ।

रास्वा च नः सुमहो हव्यदातिं त्रास्वोत नस्तन्वो अप्रयुच्छन् ॥ (१०–७–७)

प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति ।

दिवश्चिदन्ताँ उपमाँ उदानळपामुपस्थे महिषो ववर्ध ॥ (१०–८–१)

मुमोद गर्भो वृषभः ककुद्मानस्रेमा वत्सः शिमीवाँ अरावीत् ।

स देवतात्युद्यतानि कृण्वन्स्वेषु क्षयेषु प्रथमो जिगाति ॥ (१०–८–२)

आ यो मूर्धानं पित्रोररब्ध न्यध्वरे दधिरे सूरो अर्णः ।

अस्य पत्मन्न अरुषीरश्वबुध्ना ऋतस्य योनौ तन्वो जुषन्त ॥ (१०–८–३)

उष उषो हि वसो अग्रमेषि त्वं यमयोरभवो विभावा ।

ऋताय सप्त दधिषे पदानि जनयन् मित्रं तन्वे स्वायै ॥ (१०–८–४)

भुवश्चक्षुर्मह ऋतस्य गोपा भुवो वरुणो यदृताय वेषि ।

भुवो अपां नपाज्जातवेदो भुवो दूतो यस्य हव्युजोषः ॥ (१०–८–५)

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।

दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥ (१०–८–६)

त्वमग्ने सुहवो रण्वसंदृक्सुदीती सूनो सहसो दिदीहि ।

मा त्वे सचा तनये नित्य आ धङ् मा वीरो अस्मन्नर्यो वि दासीत् ॥ (७–१–२१)

मा नो अग्ने दुर्भृतये सचैषु देवेद्धेष्वग्निषु प्र वोचः ।

मा ते अस्मान्दुर्मतयो भृमाच्चिद्देवस्य सूनो सहसो नशन्त ॥ (७–१–२२)

स मर्तो अग्ने स्वनीक रेवानमर्त्ये य आजुहोति हव्यम् ।

स देवता वसुवनिं दधाति यं सूरिरर्थी पृच्छमान एति ॥ (७–१–२३)

महो नो अग्ने सुवितस्य विद्वान्रयिं सूरिभ्य आ वहा बृहन्तम् ।

येन वयं सहसावन्मदेमाविक्षितास आयुषा सुवीराः ॥ (७–१–२४)

नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।

रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥ (७–१–२५)

अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम् ।

यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः ॥ (७–३–१)

प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद् व्यस्थात् ।

आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥ (७–३–२)

उद्यस्य ते नवजातस्य वृष्णोऽग्ने चरन्त्यजरा इधानाः ।
अच्छा द्यामरुषो धूम एति सं दूतो अग्न ईयसे हि देवान् ॥ (७–३–३)
वि यस्य ते पृथिव्यां पाजो अश्रेत्तृषु यदन्ना समवृक्त जम्भैः ।
सेनेव सृष्टा प्रसितिष्ट एति यवं न दस्म जुह्वा विवेक्षि ॥ (७–३–४)
तमिद्दोषा तमुषसि यविष्ठमग्निमत्यो मर्जयन्त नरः ।
निशिशाना अतिथिमस्य योनौ दीदाय शोचिराहुतस्य वृष्णः ॥ (७–३–५)
सुसंदृक् ते स्वनीक प्रतीकं वि यद्रुक्मो न रोचस उपाके ।
दिवो न ते तन्यतुरेति शुष्मश्चित्रो न सूरः प्रति चक्षि भानुम् ॥ (७–३–६)
यथा वः स्वाहाग्नये दाशेम परीळाभिर् घृतवद्भिश्च हव्यैः ।
तेभिनी अग्ने अमितैर्महोभिः शतं पूर्भिरायसीभिर्नि पाहि ॥ (७–३–७)
या वा ते सन्ति दाशुषे अधृष्टा गिरो वा याभिर्नृवतीरुरुष्याः ।
ताभिर्नः सूनो सहसो नि पाहि स्मत्सूरीञ्जरितॄञ्जातवेदः ॥ (७–३–८)
निर्यत्पूतेव स्वधितिः शुचिर्गात्स्वया कृपा तन्वा रोचमानः ।
आ यो मात्रोरुशेन्यो जनिष्ट देवयज्याय सुक्रतुः पावकः ॥ (७–३–९)
एता नो अग्ने सौभगा दिदीह्यपि क्रतुं सुचेतसं वतेम ।
विश्वा स्तोतृभ्यो गृणते च सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ (७–३–१०)
प्र वः शुक्राय भानवे भरध्वं हव्यं मतिं चाग्नये सुपूतम् ।
यो दैव्यानि मानुषा जनूंष्यन्तर्विश्वानि विद्मना जिगाति ॥ (७–४–१)
स गृत्सो अग्निस्तरुणश्चिदस्तु यतो यविष्ठो अजनिष्ट मातुः ।
सं यो वना युवते शुचिदन् भूरि चिदन्ना समिदत्ति सद्यः ॥ (७–४–२)
अस्य देवस्य संसद्यनीके यं मर्तासः श्येतं जगृभ्रे ।
नि यो गृभं पौरुषेयीमुवोच दुरोकमग्निरायवे शुशोच ॥ (७–४–३)
अयं कविरकविषु प्रचेता मर्तेष्वग्निरमृतो नि धायि ।
स मा नो अत्र जुहुरः सहस्वः सदा त्वे सुमनसः स्याम ॥ (७–४–४)
आ यो योनिं देवकृतं ससाद क्रत्वा ह्यग्निरमृताँ अतारीत् ।
तमोषधीश्च वनिनश्च गर्भं भूमिश्च विश्वधायसं बिभर्ति ॥ (७–४–५)
ईशे ह्यग्निरमृतस्य भूरेरीशे रायः सुवीर्यस्य दातोः ।
मा त्वा वयं सहसावन्न अवीरा माप्सवः परि षदाम मादुवः ॥ (७–४–६)
परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ।

न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः ॥ (७–४–७)

नहि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ ।

अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळ् एतु नव्यः ॥ (७–४–८)

त्वमग्ने वनुष्यतो नि पाहि त्वमु नः सहसावन्न अवद्यात् ।

सं त्वा ध्वस्मन्वदभ्येतु पाथः सं रयि स्पृहयाय्यः सहस्री ॥ (७–४–९)

एता नो अग्ने सौभगा दिदीह्यपि क्रतुं सुचेतसं वतेम ।

विश्वा स्तोतृभ्यो गृणते च सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ (७–४–१०)

प्र वो देवं चित्सहसानमग्निमश्वं न वाजिनं हिषे नमोभिः ।

भवा नो दूतो अध्वरस्य विद्वात्मना देवेषु विविदे मितद्रुः ॥ (७–७–१)

आ याह्यग्ने पथ्या अनु स्वा मन्द्रो देवानां सख्युाषाणः ।

आ सानु शुष्मैर्नदयन्पृथिव्या जम्भेभिर्विश्वमुशधग् वनानि ॥ (७–७–२)

प्राचीनो यज्ञः सुधितं हि बर्हिः प्रीणीते अग्निरीळितो न होता ।

आ मातरा विश्ववारे हुवानो यतो यविष्ठ जज्ञिषे सुशेवः ॥ (७–७–३)

सद्यो अध्वरे रथिरं जनन्त मानुषासो विचेतसो य एषाम् ।

विशामधायि विश्पतिर्दुरोणेऽग्निर्मन्द्रो मधुवचा ऋतावा ॥ (७–७–४)

असादि वृतो वह्निराजगन्वानग्निर्ब्रह्मा नृषदने विधर्ता ।

द्यौश्च यं पृथिवी वावृधाते आ यं होता यजति विश्ववारम् ॥ (७–७–५)

एते द्युम्नेभिर्विश्वमातिरन्त मन्त्रं ये वारं नर्या अतक्षन् ।

प्र ये विशस्तिरन्त श्रोषमाणा आ ये मे अस्य दीधयन्न ऋतस्य ॥ (७–७–६)

नू त्वामग्न ईमहे वसिष्ठा ईशानं सूनो सहसो वसूनाम् ।

इषं स्तोतृभ्यो मघवद्भ्य आनड् यूयं पात स्वस्तिभिः सदा नः ॥ (७–७–७)

इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन ।

नरो हव्येभिरीळते सबाध आग्निरग्र उषसामशोचि ॥ (७–८–१)

अयमु ष्य सुमहाँ अवेदि होता मन्द्रो मनुषो यह्वो अग्निः ।

वि भा अकः ससृजानः पृथिव्यां कृष्णपविरोषधीभिर्ववक्षे ॥ (७–८–२)

कया नो अग्ने वि वसः सुवृक्तिं कामु स्वधामृणवः शस्यमानः ।

कदा भवेम पतयः सुदत्र रायो वन्तारो दुष्टरस्य साधोः ॥ (७–८–३)

प्र प्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः ।

अभि यः पूरुं पृतनासु तस्थौ द्युतानो दैव्यो अतिथिः शुशोच ॥ (७–८–४)

असन्नित्त्वे आहवनानि भूरि भुवो विश्वेभिः सुमना अनीकैः ।
स्तुतश्चिदग्ने शृण्विषे गृणानः स्वयं वर्धस्व तन्वं सुजात ॥ (७–८–५)
इदं वचः शतसाः संसहस्रमुदग्नये जनिषीष्ट द्विबर्हाः ।
शं यत्स्तोतृभ्य आपये भवाति द्युमदमीवचातनं रक्षोहा ॥ (७–८–६)
नू त्वामग्न ईमहे वसिष्ठा ईशानं सूनो सहसो वसूनाम् ।
इषं स्तोतृभ्यो मघवद्भ्य आनड् यूयं पात स्वस्तिभिः सदा नः ॥ (७–८–७)
अबोधि जार उषसामुपस्थाद्धोता मन्द्रः कवितमः पावकः ।
दधाति केतुमुभयस्य जन्तोर्हव्या देवेषु द्रविणं सुकृत्सु ॥ (७–९–१)
स सुक्रतुर्यो वि दुरः पणीनां पुनानो अर्कं पुरुभोजसं नः ।
होता मन्द्रो विशां दमूनास्तिरस्तमो ददृशे राम्याणाम् ॥ (७–९–२)
अमूरः कविरदितिर्विवस्वान्सुसंसन् मित्रो अतिथिः शिवो नः ।
चित्रभानुरुषसां भात्यग्रेऽपां गर्भः प्रस्व आ विवेश ॥ (७–९–३)
ईळेन्यो वो मनुषो युगेषु समनगा अशुचज्जातवेदाः ।
सुसंदृशा भानुना यो विभाति प्रति गावः समिधानं बुधन्त ॥ (७–९–४)
अग्ने याहि दूत्यं मा रिषण्यो देवाँ अच्छा ब्रह्मकृता गणेन ।
सरस्वतीं मरुतो अश्विनापो यक्षि देवान्रत्नधेयाय विश्वान् ॥ (७–९–५)
त्वामग्ने समिधानो वसिष्ठो जरूथं हन्यक्षि राये पुरंधिम् ।
पुरुणीथा जातवेदो जरस्व यूयं पात स्वस्तिभिः सदा नः ॥ (७–९–६)
उषो न जारः पृथु पाजो अश्रेद्दविद्युतद्दीद्यच्छोशुचानः ।
वृषा हरिः शुचिरा भाति भासा धियो हिन्वान उशतीरजीगः ॥ (७–१०–१)
स्वर्ण वस्तोरुषसामरोचि यज्ञं तन्वाना उशिजो न मन्म ।
अग्निर्जन्मानि देव आ वि विद्वान्द्रवद्दूतो देवयावा वनिष्ठः ॥ (७–१०–२)
अच्छा गिरो मतयो देवयन्तीरग्निंयन्ति द्रविणं भिक्षमाणाः ।
सुसंदृशं सुप्रतीकं स्वञ्चं हव्यवाहमरतिं मानुषाणाम् ॥ (७–१०–३)
इन्द्रं नो अग्ने वसुभिः सजोषा रुद्रं रुद्रेभिरा वहा बृहन्तम् ।
आदित्येभिरदितिं विश्वजन्यां बृहस्पतिमृक्वभिर्विश्ववारम् ॥ (७–१०–४)
मन्द्रं होतारमुशिजो यविष्ठमग्निं विश ईळते अध्वरेषु ।
स हि क्षपावाँ अभवद्रयीणामतन्द्रो दूतो यजथाय देवान् ॥ (७–१०–५)
महाँ अस्यध्वरस्य प्रकेतो न ऋते त्वदमृता मादयन्ते ।

आ विश्वेभिः सरथं याहि देवैर् न्यग्ने होता प्रथमः सदेह ॥ (७–११–१)
त्वामीळते अजिरं दूत्याय हविष्मन्तः सदमिन्मानुषासः ।
यस्य देवैरासदो बर्हिरग्नेऽहान्यस्मै सुदिना भवन्ति ॥ (७–११–२)
त्रिश्चिदक्तोः प्र चिकितुर्वसूनि त्वे अन्तर्दाशुषे मर्त्याय ।
मनुष्वदग्न इह यक्षि देवान् भवा नो दूतो अभिशस्तिपावा ॥ (७–११–३)
अग्निरीशे बृहतो अध्वरस्याग्निर्विश्वस्य हविषः कृतस्य ।
क्रतुं ह्यस्य वसवो जुषन्ताथा देवा दधिरे हव्यवाहम् ॥ (७–११–४)
आग्ने वह हविरद्याय देवानिन्द्रज्येष्ठास इह मादयन्ताम् ।
इमं यज्ञं दिवि देवेषु धेहि यूयं पात स्वस्तिभिः सदा नः ॥ (७–११–५)
अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे ।
चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ॥ (७–१२–१)
स मह्ना विश्वा दुरितानि साह्वानग्नि ष्टवे दम आ जातवेदाः ।
स नो रक्षिषद्दुरितादवद्यादस्मान्गृणत उत नो मघोनः ॥ (७–१२–२)
त्वं वरुण उत मित्रो अग्ने त्वां वर्धन्ति मतिभिर्वसिष्ठाः ।
त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ (७–१२–३)

अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे ।
चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चोइं
स मह्ना विश्वा दुरितानि सह्वानग्निः ष्टवे दम आ जातवेदाः ।
स नो रक्षिषद् दुरितादवद्यादस्मान् गृणत उत नो मघोनोइं
त्वं वरुण उत मित्रो अग्ने त्वां वर्धन्ति मतिभिर्वसिष्ठाः ।
त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्तिभिः सदा नो३म् [७ ।१२ ।१–३] [८७]
बार्हतम्
एना वो अग्निं नमसोर्जो नपातमा हुवे । प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतोइं
स योजते अरुषा विश्वभोजसा स दुद्रवत् स्वाहुतः ।
सुब्रह्मा यज्ञः सुशमी वसूनां देवं राधो जनानो३म्
उदस्य शोचिरस्थादाजुह्वानस्य मीह्ळुषः ।
उद् धूमासो अरुषासो दिविस्पृशः समग्निमिन्धते नरोइं
तं त्वा दूतं कृण्महे यशस्तमं देवाँ आ वीतये वह ।

विश्वा सूनो सहसो मर्तभोजना रास्व तद् यत् त्वेमहो३ं

त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे । त्वं पोता विश्ववार प्रचेता यक्षि वेषि च वार्यो३ं

कृधि रत्नं यजमानाय सुक्रतो त्वं हि रत्नधा असि ।

आ न ऋते शिशीहि विश्वमृत्विजं सुशंसो यश्च दक्षतो३ं

त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः ।

यन्तारो ये मघवानो जनानामूर्वान् दयन्त गोनो३ं

येषामिळा घृतहस्ता दुरोण आँ अपि प्राता निषीदति ।

ताँस्त्रायस्व सहस्य द्रुहो निदो यच्छा नः शर्म दीर्घश्रो३ं

स मन्द्रया च जिह्वया वह्निरासा विदुष्टरः । अग्ने रयिं मघवद्भ्यो न आ वह हव्यदातिं च सूदयो३ं

ये राधांसि ददत्यश्व्या मघा कामेन श्रवसो महः ।

ताँ अंहसः पिपृहि पर्तृभिष्ट्वं शतं पूर्भिर्यविष्ठ्यो३ं

देवो वो द्रविणोदाः पूर्णां विवष्ट्यासिचम् । उद् वा सिञ्चध्वमुप वा पृणध्वमादिद् वो देव ओहतो३ं

तं होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृण्वत ।

दधाति रत्नं विधते सुवीर्यमग्निर्जनाय दाशुषो३म्   [७ ।१६ ।१–१२] [९९]

प्र वो यह्वं पुरूणां विशां देवयतीनाम् । अग्निं सूक्तेभिर्वचोभिरीमहे । यं सीमिदन्य ईळते ॥ (१–३६–१)

जनासो अग्निं दधिरे सहोवृधं । हविष्मन्तो विधेम ते । स त्वं नो अद्य सुमना इहाविता । भवा वाजेषु सन्त्य ॥ (१–३६–२)

प्र त्वा दूतं वृणीमहे होतारं विश्ववेदसम् । महस्ते सतो वि चरन्त्यर्चयो । दिवि स्पृशन्ति भानवः ॥ (१–३६–३)

देवासस्त्वा वरुणो मित्रो अर्यमा । सं दूतं प्रत्नमिन्धते । विश्वं सो अग्ने जयति त्वया धनं । यस्ते ददाश मर्त्यः ॥ (१–३६–४)

मन्द्रो होता गृहपतिरग्ने दूतो विशामसि । त्वे विश्वा सङ्गतानि व्रता ध्रुवा । यानि देवा अकृण्वत ॥ (१–३६–५)

त्वे इदग्ने सुभगे यविष्ठ्य । विश्वमा हूयते हविः । स त्वं नो अद्य सुमना उतापरं । यक्षि देवान्सुवीर्या ॥ (१–३६–६)

तं घेमित्था नमस्विन उप स्वराजमासते । होत्राभिरग्निं मनुषः समिन्धते । तितिर्वांसो अति स्रिधः ॥ (१–३६–७)

घ्नन्तो वृत्रमतरन्रोदसी अप । उरु क्षयाय चक्रिरे । भुवत्कण्वे वृषा द्युम्न्याहुतः । क्रन्ददश्वो गविष्टिषु ॥ (१–३६–८)

सं सीदस्व महाँ असि शोचस्व देववीतमः । वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ॥ (१–३६–९)

यं त्वा देवासो मनवे दधुरिह । यजिष्ठं हव्यवाहन । यं कण्वो मेध्यातिथिर्धनस्पृतं । यं वृषा यमुपस्तुतः ॥ (१–३६–१०)

यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि । तस्य प्रेषो दीदियुस्तमिमा ऋचस् । तमग्निं वर्धयामसि ॥ (१–३६–११)

रायस्पूर्धि स्वधावोऽस्ति हि । तेऽग्ने देवेष्वाप्यम् । त्वं वाजस्य श्रुत्यस्य राजसि । स नो मृळ महाँ असि ॥ (१–३६–१२)

ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता । ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर् । वाघद्भिर्विह्वयामहे ॥ (१–३६–१३)

ऊर्ध्वो नः पाह्यंहसो नि केतुना । विश्वं समत्रिणं दह । कृधी न ऊर्ध्वाञ्चरथाय जीवसे । विदा देवेषु नो दुवः ॥ (१–३६–१४)

पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः । पाहि रीषत उत वा जिघांसतो । बृहद्भानो यविष्ठ्य ॥ (१–३६–१५)

घनेव विष्वग् वि जह्यराव्णस् । तपुर्जम्भ यो अस्मध्रुक् । यो मर्त्यः शिशीते अत्यक्तुभिर् । मा नः स रिपुरीशत ॥ (१–३६–१६)

अग्निर्वव्ने सुवीर्यमग्निः कण्वाय सौभगम् । अग्निः प्रावन् मित्रोत मेध्यातिथिम् । अग्निः साता उपस्तुतम् ॥ (१–३६–१७)

अग्निना तुर्वशं यदुं परावत । उग्रादेवं हवामहे । अग्निर्नयन्नववास्त्वं बृहद्रथं । तुर्वीतिं दस्यवे सहः ॥ (१–३६–१८)

नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते । दीदेथ कण्व ऋतजात उक्षितो । येमस्यन्ति कृष्टयः ॥ (१–३६–१९)

त्वेषासो अग्नेरमवन्तो अर्चयो । भीमासो न प्रतीतये । रक्षस्विनः सदमिद्यातुमावतो विश्वं समत्रिणं दह ॥ (१–३६–२०)

अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥ (१–४४–१)
जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम् ।
सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥ (१–४४–२)
अद्या दूतं वृणीमहे वसुमग्निपुरुप्रियम् ।
धूमकेतुं भाऋजीकं व्युष्टिषु यज्ञानामध्वरश्रियम् ॥ (१–४४–३)
श्रेष्ठं यविष्ठमतिथिं स्वाहुतं जुष्टं जनाय दाशुषे ।
देवाँ अच्छा यातवे जातवेदसमग्निमीळे व्युष्टिषु ॥ (१–४४–४)
स्तविष्यामि त्वामहं विश्वस्यामृत भोजन ।

अग्ने त्रातारममृतं मियेध्य यजिष्ठं हव्यवाहन ॥ (१–४४–५)
सुशंसो बोधि गृणते यविष्ठ्य मधुजिह्वः स्वाहुतः ।
प्रस्कण्वस्य प्रतिरन्न आयुजीवसे नमस्या दैव्युानम् ॥ (१–४४–६)
होतारं विश्ववेदसं सं हि त्वा विश इन्धते ।
स आ वह पुरुहूत प्रचेतसोऽग्ने देवाँ इह द्रवत् ॥ (१–४४–७)
सवितारमुषसमश्विना भगमग्न्व्युिष्टिषु क्षपः ।
कण्वासस्त्वा सुतसोमास इन्धते हव्यवाहं स्वध्वर ॥ (१–४४–८)
पतिर् ह्यध्वराणामग्ने दूतो विशामसि ।
उषर्बुध आ वह सोमपीतये देवाँ अद्य स्वर्दृशः ॥ (१–४४–९)
अग्ने पूर्वा अनूषसो विभावसो दीदेथ विश्वदर्शतः ।
असि ग्रामेष्वविता पुरोहितोऽसि यज्ञेषु मानुषः ॥ (१–४४–१०)
नि त्वा यज्ञस्य साधनमग्ने होतारमृत्विजम् ।
मनुष्वद्देव धीमहि प्रचेतसं जीरं दूतममर्त्यम् ॥ (१–४४–११)
यद्देवानां मित्रमहः पुरोहितोऽन्तरो यासि दूत्यम् ।
सिन्धोरिव प्रस्वनितास ऊर्मयोऽग्नेर्भ्राजन्ते अर्चयः ॥ (१–४४–१२)
श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः ।
आ सीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम् ॥ (१–४४–१३)
शृण्वन्तु स्तोमं मरुतः सुदानवोऽग्निजिह्वा ऋतावृधः ।
पिबतु सोमं वरुणो धृतव्रतोऽश्विभ्यामुषसा सजूः ॥ (१–४४–१४)
सखायस्त्वा ववृमहे देवं मर्तास ऊतये ।
अपां नपातं सुभगं सुदीदितिं सुप्रतूर्तिमनेहसम् ॥ (३–९–१)
कायमानो वना त्वं यन्मातृरजगन्न अपः ।
न तत्ते अग्ने प्रमृषे निवर्तन्यद्दूरे सन्निहाभवः ॥ (३–९–२)
अति तृष्टं ववक्षिथाथैव सुमना असि ।
प्र प्रान्ये यन्ति पर्यन्य आसते येषां सख्ये असि श्रितः ॥ (३–९–३)
ईयिवांसमति स्रिधः शश्वतीरति सश्चतः ।
अन्व् ईमविन्दन्निचिरासो अद्रुहोऽप्सु सिंहमिव श्रितम् ॥ (३–९–४)
ससृवांसमिव त्मनाग्निमित्था तिरोहितम् ।
ऐनं नयन्मातरिश्वा परावतो देवेभ्यो मथितं परि ॥ (३–९–५)

तं त्वा मर्ता अगृभ्णत देवेभ्यो हव्यवाहन ।

विश्वान्यद्यज्ञाँ अभिपासि मानुष तव क्रत्वा यविष्ठ्य ॥ (३–९–६)

तद्भद्रं तव दंसना पाकाय चिच्छदयति ।

त्वां यदग्ने पशवः समासते समिद्धमपिशर्वरे ॥ (३–९–७)

आ जुहोता स्वध्वरं शीरं पावकशोचिषम् ।

आशुं दूतमजिरं प्रत्नमीड्यं श्रुष्टी देवं सपर्यत ॥ (३–९–८)

त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन् ।

औक्षन् घृतैरस्तृणन् बर्हिरस्मा आदिद्धोतारं न्यसादयन्त ॥ (३–९–९)

अयमग्निः सुवीर्यस्येशे महः सौभगस्य ।

राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥ (३–१६–१)

इमं नरो मरुतः सश्चता वृधं यस्मिन्रायः शेवृधासः ।

अभि ये सन्ति पृतनासु दूढ्यो विश्वाहा शत्रुमादभुः ॥ (३–१६–२)

स त्वं नो रायः शिशीहि मीढ्वो अग्ने सुवीर्यस्य ।

तुविद्युम्न वर्षिष्ठस्य प्रजावतोऽनमीवस्य शुष्मिणः ॥ (३–१६–३)

चक्रिर्यो विश्वा भुवनाभि सासहिश्चक्रिर्देवेष्वा दुवः ।

आ देवेषु यतत आ सुवीर्य आ शंस उत नृणाम् ॥ (३–१६–४)

मा नो अग्नेऽमतये मावीरतायै रीरधः ।

मागोतायै सहसस्पुत्र मा निदेऽप द्वेषांस्या कृधि ॥ (३–१६–५)

शग्धि वाजस्य सुभग प्रजावतोऽग्ने बृहतो अध्वरे ।

सं राया भूयसा सृज मयोभुना तुविद्युम्न यशस्वता ॥ (३–१६–६)

अग्न आ याह्यग्निभिर्होतारं त्वा वृणीमहे ।

आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ (८–६०–१)

अच्छा हि त्वा सहसः सूनो अङ्गिरः स्रुचश्चरन्त्यध्वरे ।

ऊर्जो नपातं घृतकेशमीमहेऽग्निंयज्ञेषु पूर्व्यम् ॥ (८–६०–२)

अग्ने कविर्वेधा असि होता पावक यक्ष्यः ।

मन्द्रो यजिष्ठो अध्वरेष्व् ईड्यो विप्रेभिः शुक्र मन्मभिः ॥ (८–६०–३)

अद्रोघमा वहोशतो यविष्ठ्य देवाँ अजस्र वीतये ।

अभि प्रयांसि सुधिता वसो गहि मन्दस्व धीतिभिर्हितः ॥ (८–६०–४)

त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतस्कविः ।

त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः ॥ (८–६०–५)

शोचा शोचिष्ठ दीदिहि विशे मयो रास्व स्तोत्रे महाँ असि ।

देवानां शर्मन्मम सन्तु सूरयः शत्रूषाहः स्वग्नयः ॥ (८–६०–६)

यथा चिद्वृद्धमतसमग्ने संजूर्वसि क्षमि ।

एवा दह मित्रमहो यो अस्मध्रुग् दुर्मन्मा कश्च वेनति ॥ (८–६०–७)

मा नो मर्ताय रिपवे रक्षस्विने माघशंसाय रीरधः ।

अस्रेधद्भिस्तरणिभिर्यविष्ठ्य शिवेभिः पाहि पायुभिः ॥ (८–६०–८)

पाहि नो अग्न एकया पाह्यु उत द्वितीयया ।

पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥ (८–६०–९)

पाहि विश्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नोऽव ।

त्वामिद्धि नेदिष्ठं देवतातय आपिं नक्षामहे वृधे ॥ (८–६०–१०)

आ नो अग्ने वयोवृधं रयिं पावक शंस्यम् ।

रास्वा च न उपमाते पुरुस्पृहं सुनीती स्वयशस्तरम् ॥ (८–६०–११)

येन वंसाम पृतनासु शर्धतस्तरन्तो अर्य आदिशः ।

स त्वं नो वर्ध प्रयसा शचीवसो जिन्वा धियो वसुविदः ॥ (८–६०–१२)

शिशानो वृषभो यथाग्निः शृङ्गे दविध्वत् ।

तिग्मा अस्य हनवो न प्रतिधृषे सुजम्भः सहसो यहुः ॥ (८–६०–१३)

नहि ते अग्ने वृषभ प्रतिधृषे जम्भासो यद्वितिष्ठसे ।

स त्वं नो होतः सुहुतं हविष्कृधि वंस्वा नो वार्या पुरु ॥ (८–६०–१४)

शेषे वनेषु मातूरोः सं त्वा मर्तास इन्धते ।

अतन्द्रो हव्या वहसि हविष्कृत आदिद्देवेषु राजसि ॥ (८–६०–१५)

सप्त होतारस्तमिदीळते त्वाग्ने सुत्यजमह्रयम् ।

भिनत्स्यद्रिं तपसा वि शोचिषा प्राग्ने तिष्ठ जनाँ अति ॥ (८–६०–१६)

अग्निमग्निं वो अध्रिगुं हुवेम वृक्तबर्हिषः ।

अग्निं हितप्रयसः शश्वतीष्वा होतारं चर्षणीनाम् ॥ (८–६०–१७)

केतेन शर्मन्सचते सुषामण्यग्ने तुभ्यं चिकित्वना ।

इषण्यया नः पुरुरूपमा भर वाजं नेदिष्ठमूतये ॥ (८–६०–१८)

अग्ने जरितर्विश्पतिस्तेपानो देव रक्षसः ।

अप्रोषिवान्गृहपतिर्महाँ असि दिवस्पायुर्दुरोणयुः ॥ (८–६०–१९)

मा नो रक्ष आ वेशीदाघृणीवसो मा यातुर्यातुमावताम् ।
परोगव्यूत्यनिरामप क्षुधमग्ने सेध रक्षस्विनः ॥ (८-६०-२०)
अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम् ।
अच्छा यज्ञासो नमसा पुरूवसुं पुरुप्रशस्तमूतये ॥ (८-७१-१०)
अग्निं सूनुं सहसो जातवेदसं दानाय वार्याणाम् ।
द्विता यो भूदमृतो मर्त्येष्वा होता मन्द्रतमो विशि ॥ (८-७१-११)
अग्निं वो देवयज्ययाग्निम्प्रयत्यध्वरे ।
अग्निं धीषु प्रथममग्निमर्वत्यग्निंक्षैत्राय साधसे ॥ (८-७१-१२)
अग्निरिषां सख्ये ददातु न ईशे यो वार्याणाम् ।
अग्निं तोके तनये शश्वदीमहे वसुं सन्तं तनूपाम् ॥ (८-७१-१३)
अग्निमीळिष्वावसे गाथाभिः शीरशोचिषम् ।
अग्निं राये पुरुमीळ्ह श्रुतं नरोऽग्निं सुदीतये च्छर्दिः ॥ (८-७१-१४)
अग्निं द्वेषो योतवै नो गृणीमस्यग्निं शं योश्च दातवे ।
विश्वासु विक्ष्ववितेव हव्यो भुवद्वस्तुर्ऋषूणाम् ॥ (८-७१-१५)
अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः ।
उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्त नो गिरः ॥ (८-१०३-१)
प्र दैवोदासो अग्निर्देवाँ अच्छा न मज्मना ।
अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य सानवि ॥ (८-१०३-२)
यस्माद्रेजन्त कृष्टयश्चर्कृत्यानि कृण्वतः ।
सहस्रसां मेधसाताविव त्मनाग्निं धीभिः सपर्यत ॥ (८-१०३-३)
प्र यं राये निनीषसि मर्तो यस्ते वसो दाशत् ।
स वीरं धत्ते अग्न उक्थशंसिनं त्मना सहस्रपोषिणम् ॥ (८-१०३-४)
स दृळ्हे चिदभि तृणत्ति वाजमर्वता स धत्ते अक्षिति श्रवः ।
त्वे देवत्रा सदा पुरूवसो विश्वा वामानि धीमहि ॥ (८-१०३-५)
यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।
मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्यग्नये ॥ (८-१०३-६)
अश्वं न गीर्भी रथ्यं सुदानवो मर्मृज्यन्ते देवयवः ।
उभे तोके तनये दस्म विश्पते पर्षि राधो मघोनाम् ॥ (८-१०३-७)

औष्णिहम्

अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवो३ं

स इधानो वसुष्कविरग्निरीळेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहो३ं

क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः । स तिग्मजम्भ रक्षसो दह प्रतो३ं [१ ।७९ ।४–६] [१०२]

पुरु त्वा दाश्वान्वोचेऽरिरग्ने तव स्विदा । तोदस्येव शरण आ महस्य ॥ (१–१५०–१)

व्यनिनस्य धनिनः प्रहोषे चिदररुषः । कदा चन प्रजिगतो अदेवयोः ॥ (१–१५०–२)

स चन्द्रो विप्र मर्त्यो महो व्राधन्तमो दिवि । प्र प्रेत्ते अग्ने वनुषः स्याम ॥ (१–१५०–३)

त्वामग्ने मनीषिणः सम्राजं चर्षणीनाम् । देवं मर्तास इन्धते समध्वरे ॥ (३–१०–१)

त्वां यज्ञेष्वृत्विजमग्ने होतारमीळते । गोपा ऋतस्य दीदिहि स्वे दमे ॥ (३–१०–२)

स घा यस्ते ददाशति समिधा जातवेदसे । सो अग्ने धत्ते सुवीर्यं स पुष्यति ॥ (३–१०–३)

स केतुरध्वराणामग्निर्देवेभिरा गमत् । अञ्जानः सप्त होतृभिर्हविष्मते ॥ (३–१०–४)

प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत् । विपां ज्योतींषि बिभ्रते न वेधसे ॥ (३–१०–५)

अग्निं वर्धन्तु नो गिरो यतो जायत उक्थ्यः । महे वाजाय द्रविणाय दर्शतः ॥ (३–१०–६)

अग्ने यजिष्ठो अध्वरे देवान्देवयते यज । होता मन्द्रो वि राजस्यति स्रिधः ॥ (३–१०–७)

स नः पावक दीदिहि द्युमदस्मे सुवीर्यम् । भवा स्तोतृभ्यो अन्तमः स्वस्तये ॥ (३–१०–८)

तं त्वा विप्रा विपन्यवो जागृवांसः समिन्धते । हव्यवाहममर्त्यं सहोवृधम् ॥ (३–१०–९)

ईळिष्वा हि प्रतीव्यं यजस्व जातवेदसम् । चरिष्णुधूममगृभीतशोचिषम् ॥ (८–२३–१)

दामानं विश्वचर्षणेऽग्निं विश्वमनो गिरा । उत स्तुषे विष्पर्धसो रथानाम् ॥ (८–२३–२)

येषामाबाध ऋग्मिय इषः पृक्षश्च निग्रभे । उपविदा वह्निर्विन्दते वसु ॥ (८–२३–३)

उदस्य शोचिरस्थाद्दीदियुषो व्यजरम् । तपुर्जम्भस्य सुद्युतो गणश्रियः ॥ (८–२३–४)

उदु तिष्ठ स्वध्वर स्तवानो देव्या कृपा । अभिख्या भासा बृहता शुशुक्वनिः ॥ (८–२३–५)

अग्ने याहि सुशस्तिभिर्हव्या जुह्वान आनुषक् । यथा दूतो बभूथ हव्यवाहनः ॥ (८–२३–६)

अग्निं वः पूर्व्यं हुवे होतारं चर्षणीनाम् । तमया वाचा गृणे तमु व स्तुषे ॥ (८–२३–७)

यज्ञेभिरद्भुतक्रतुं यं कृपा सूदयन्त इत् । मित्रं न जने सुधितमृतावनि ॥ (८–२३–८)

ऋतावानमृतायवो यज्ञस्य साधनं गिरा । उपो एनुजुजुषुर्नमसस्पदे ॥ (८–२३–९)

अच्छा नो अङ्गिरस्तमं यज्ञासो यन्तु संयतः । होता यो अस्ति विक्ष्वा यशस्तमः ॥ (८–२३–१०)

अग्ने तव त्ये अजरेन्धानासो बृहद्भाः । अश्वा इव वृषणस्तविषीयवः ॥ (८–२३–११)

स त्वं न ऊर्जां पते रयिं रास्व सुवीर्यम् । प्राव नस्तोके तनये समत्स्वा ॥ (८–२३–१२)

यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशि । विश्वेदग्निः प्रति रक्षांसि सेधति ॥ (८–२३–१३)

श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते । नि मायिनस्तपुषा रक्षसो दह ॥ (८–२३–१४)
न तस्य मायया चन रिपुरीशीत मर्त्यः । यो अग्नये ददाश हव्यदातिभिः ॥ (८–२३–१५)
व्यश्वस्त्वा वसुविदमुक्षण्युरप्रीणादृषिः । महो राये तमु त्वा समिधीमहि ॥ (८–२३–१६)
उशना काव्यस्त्वा नि होतारमसादयत् । आयजिं त्वा मनवे जातवेदसम् ॥ (८–२३–१७)
विश्वे हि त्वा सजोषसो देवासो दूतमक्रत । श्रुष्टी देव प्रथमो यज्ञियो भुवः ॥ (८–२३–१८)
इमं घा वीरो अमृतं दूतं कृण्वीत मर्त्यः । पावकं कृष्णवर्तनिं विहायसम् ॥ (८–२३–१९)
तं हुवेम यतस्रुचः सुभासं शुक्रशोचिषम् । विशामग्निमजरं प्रत्नमीड्यम् ॥ (८–२३–२०)
यो अस्मै हव्यदातिभिराहुतिं मर्तोऽविधत् । भूरि पोषं स धत्ते वीरवद्यशः ॥ (८–२३–२१)
प्रथमं जातवेदसमग्निं यज्ञेषु पूर्व्यम् । प्रति स्रुग् एति नमसा हविष्मती ॥ (८–२३–२२)
आभिर्विधेमाग्नये ज्येष्ठाभिर् व्यश्ववत् । मंहिष्ठाभिर्मतिभिः शुक्रशोचिषे ॥ (८–२३–२३)
नूनमर्च विहायसे स्तोमेभि स्थूरयूपवत् । ऋषे वैयश्व दम्यायाग्नये ॥ (८–२३–२४)
अतिथिं मानुषाणां सूनुं वनस्पतीनाम् । विप्रा अग्निमवसे प्रत्नमीळते ॥ (८–२३–२५)
महो विश्वाँ अभि षतोऽभि हव्यानि मानुषा । अग्ने नि षत्सि नमसाधि बर्हिषि ॥ (८–२३–२६)
वंस्वा नो वार्या पुरु वंस्व रायः पुरुस्पृहः । सुवीर्यस्य प्रजावतो यशस्वतः ॥ (८–२३–२७)
त्वं वरो सुषाम्णेऽग्ने जनाय चोदय । सदा वसो रातिं यविष्ठ शश्वते ॥ (८–२३–२८)
त्वं हि सुप्रतूरसि त्वं नो गोमतीरिषः । महो रायः सातिमग्ने अपा वृधि ॥ (८–२३–२९)
अग्ने त्वं यशा अस्या मित्रावरुणा वह । ऋतावाना सम्राजा पूतदक्षसा ॥ (८–२३–३०)

जागतम्

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद् वि भाति भरतेभ्यः शुचोइं
यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समीधिरे ।
इन्द्रेण देवैः सरथं स बर्हिषि सीदन्नि होता यजथाय सुक्रतो३म्
असंमृष्टो जायसे मात्रोः शुचिर्मन्द्रः कविरुदतिष्ठो विवस्वतः ।
घृतेन त्वावर्धयन्नग्न आहुत धूमस्ते केतुरभवद् दिवि श्रितो३म्
अग्निर्नो यज्ञमुप वेतु साधुयाग्निं नरो वि भरन्ते गृहेगृहे ।
अग्निर्दूतो अभवद्धव्यवाहनोऽग्निं वृणाना वृणते कविक्रतोइं
तुभ्येदमग्ने मधुमत्तमं वचस्तुभ्यं मनीषा इयमस्तु शं हृदे ।
त्वां गिरः सिन्धुमिवावनीर्महीरा पृणन्ति शवसा वर्धयन्ति चोइं

त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने ।

स जायसे मथ्यमानः सहो महत् त्वामाहुः सहसस्पुत्रमङ्गिरो३म् [५ ।११ ।१–६] [१०८]

त्वामग्न ऋतायवः समीधिरे प्रत्नं प्रत्नास ऊतये सहस्कृत ।

पुरुश्चन्द्रं यजतं विश्वधायसं दमूनसं गृहपतिं वरेण्यम् ॥ (५–८–१)

त्वामग्ने अतिथिं पूर्व्यं विशः शोचिष्केशं गृहपतिं नि षेदिरे ।

बृहत्केतुं पुरुरूपं धनस्पृतं सुशर्माणं स्ववसं जरद्विषम् ॥ (५–८–२)

त्वामग्ने मानुषीरीळते विशो होत्राविदं विविचिं रत्नधातमम् ।

गुहा सन्तं सुभग विश्वदर्शतं तुविष्वणसं सुयजं घृतश्रियम् ॥ (५–८–३)

त्वामग्ने धर्णसिं विश्वधा वयं गीर्भिर्गृणन्तो नमसोप सेदिम ।

स नो जुषस्व समिधानो अङ्गिरो देवो मर्तस्य यशसा सुदीतिभिः ॥ (५–८–४)

त्वमग्ने पुरुरूपो विशे विशे वयो दधासि प्रत्नथा पुरुष्टुत ।

पुरूण्यन्ना सहसा वि राजसि त्विषिः सा ते तित्विषाणस्य नाधृषे ॥ (५–८–५)

त्वामग्ने समिधान्यविष्ठ्य देवा दूतं चक्रिरे हव्यवाहनम् ।

उरुज्रयसं घृतयोनिमाहुतं त्वेषं चक्षुर्दधिरे चोदयन्मति ॥ (५–८–६)

त्वामग्ने प्रदिव आहुतं घृतैः सुम्नायवः सुषमिधा समीधिरे ।

स वावृधान ओषधीभिरुक्षितोऽभि ज्रयांसि पार्थिवा वि तिष्ठसे ॥ (५–८–७)

इममू षु वो अतिथिमुषर्बुधं विश्वासां विशां पतिमृञ्जसे गिरा ।

वेतीद्दिवो जनुषा कच्चिदा शुचिर् ज्योक्चिदत्ति गर्भो यदच्युतम् ॥ (६–१५–१)

मित्रं न यं सुधितं भृगवो दधुर्वनस्पताव् ईड्यमूर्ध्वशोचिषम् ।

स त्वं सुप्रीतो वीतहव्ये अद्भुत प्रशस्तिभिर्महयसे दिवे दिवे ॥ (६–१५–२)

स त्वं दक्षस्यावृको वृधो भूरर्यः परस्यान्तरस्य तरुषः ।

रायः सूनो सहसो मर्त्येष्वा च्छर्दिर्यच्छ वीतहव्याय सप्रथो भरद्वाजाय सप्रथः ॥ (६–१५–३)

द्युतानं वो अतिथिं स्वर्णरमग्निं होतारं मनुषः स्वध्वरम् ।

विप्रं न द्युक्षवचसं सुवृक्तिभिर्हव्यवाहमरतिं देवमृञ्जसे ॥ (६–१५–४)

पावकया यश्चितयन्त्या कृपा क्षामन्रुरुच उषसो न भानुना ।

तूर्वन्न यामन्न एतशस्य नू रण आ यो घृणे न ततृषाणो अजरः ॥ (६–१५–५)

अग्निमग्निं वः समिधा दुवस्यत प्रियंप्रियं वो अतिथिं गृणीषणि ।

उप वो गीर्भिरमृतं विवासत देवो देवेषु वनते हि वार्यं देवो देवेषु वनते हि नो दुवः ॥ (६–१५–६)

समिद्धमग्निं समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवम् ।

विप्रं होतारं पुरुवारमद्रुहं कविं सुम्नैरीमहे जातवेदसम् ॥ (६–१५–७)
त्वां दूतमग्ने अमृतं युगे युगे हव्यवाहं दधिरे पायुमीड्यम् ।
देवासश्च मर्तासश्च जागृविं विभुं विश्पतिं नमसा नि षेदिरे ॥ (६–१५–८)
विभूषन्न अग्न उभयाँ अनु व्रता दूतो देवानां रजसी समीयसे ।
यत्ते धीतिं सुमतिमावृणीमहेऽध स्मा नस्त्रिवरूथः शिवो भव ॥ (६–१५–९)
त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥ (२–१–१)
तवाग्ने होत्रं तव पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः ।
तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे ॥ (२–१–२)
त्वमग्न इन्द्रो वृषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः ।
त्वं ब्रह्मा रयिविद्ब्रह्मणस्पते त्वं विधर्तः सचसे पुरंध्या ॥ (२–१–३)
त्वमग्ने राजा वरुणो धृतव्रतस्त्वं मित्रो भवसि दस्म ईड्यः ।
त्वमर्यमा सत्पतिर्यस्य सम्भुजं त्वमंशो विदथे देव भाजयुः ॥ (२–१–४)
त्वमग्ने त्वष्टा विधते सुवीर्यं तव ग्नावो मित्रमहः सजात्यम् ।
त्वमाशुहेमा ररिषे स्वश्व्यं त्वं नरां शर्धो असि पुरूवसुः ॥ (२–१–५)
त्वमग्ने रुद्रो असुरो महो दिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे ।
त्वं वातैररुणैर्यासि शङ्गयस्त्वं पूषा विधतः पासि नु त्मना ॥ (२–१–६)
त्वमग्ने द्रविणोदा अरंकृते त्वं देवः सविता रत्नधा असि ।
त्वं भगो नृपते वस्व ईशिषे त्वं पायुर्दमे यस्तेऽविधत् ॥ (२–१–७)
त्वामग्ने दम आ विश्पतिं विशस्त्वां राजानं सुविदत्रमृञ्जते ।
त्वं विश्वानि स्वनीक पत्यसे त्वं सहस्राणि शता दश प्रति ॥ (२–१–८)
त्वामग्ने पितरमिष्टिभिर्नरस्त्वां भ्रात्राय शम्या तनूरुचम् ।
त्वं पुत्रो भवसि यस्तेऽविधत्त्वं सखा सुशेवः पास्याधृषः ॥ (२–१–९)
त्वमग्न ऋभुराके नमस्यस्त्वं वाजस्य क्षुमतो राय ईशिषे ।
त्वं वि भास्यनु दक्षि दावने त्वं विशिक्षुरसि यज्ञमातनिः ॥ (२–१–१०)
त्वमग्ने अदितिर्देव दाशुषे त्वं होत्रा भारती वर्धसे गिरा ।
त्वमिळा शतहिमासि दक्षसे त्वं वृत्रहा वसुपते सरस्वती ॥ (२–१–११)
त्वमग्ने सुभृत उत्तमं वयस्तव स्पार्हे वर्ण आ संदृशि श्रियः ।
त्वं वाजः प्रतरणो बृहन्न असि त्वं रयिर्टाहुलो विश्वतस्पृथुः ॥ (२–१–१२)

त्वामग्न आदित्यास आस्यं त्वां जिह्वां शुचयश्चक्रिरे कवे ।

त्वां रातिषाचो अध्वरेषु सश्चिरे त्वे देवा हविरदन्त्याहुतम् ॥ (२–१–१३)

त्वे अग्ने विश्वे अमृतासो अद्रुह आसा देवा हविरदन्त्याहुतम् ।

त्वया मर्तासः स्वदन्त आसुतिं त्वं गर्भो वीरुधां जज्ञिषे शुचिः ॥ (२–१–१४)

त्वं तान्सं च प्रति चासि मज्मनाग्ने सुजात प्र च देव रिच्यसे ।

पृक्षो यदत्र महिना वि ते भुवदनु द्यावापृथिवी रोदसी उभे ॥ (२–१–१५)

ये स्तोतृभ्यो गोअग्रामश्वपेशसमग्ने रातिमुपसृजन्ति सूरयः ।

अस्माञ्च तांश्च प्र हि नेषि वस्य आ बृहद्वदेम विदथे सुवीराः ॥ (२–१–१६)

यज्ञेन वर्धत जातवेदसमग्न्यिजध्वं हविषा तना गिरा ।

समिधानं सुप्रयसं स्वर्णरं द्युक्षं होतारं वृजनेषु धूर्षदम् ॥ (२–२–१)

अभि त्वा नक्तीरुषसो ववाशिरेऽग्ने वत्सं न स्वसरेषु धेनवः ।

दिव इवेदरतिर्मानुषा युगा क्षपो भासि पुरुवार संयतः ॥ (२–२–२)

तं देवा बुध्ने रजसः सुदंससं दिवस्पृथिव्योररतिं न्येरिरे ।

रथमिव वेद्यं शुक्रशोचिषमग्निं मित्रं न क्षितिषु प्रशंस्यम् ॥ (२–२–३)

तमुक्षमाणं रजसि स्व आ दमे चन्द्रमिव सुरुचं ह्वार आ दधुः ।

पृश्न्याः पतरं चितयन्तमक्षभिः पाथो न पायुं जनसी उभे अनु ॥ (२–२–४)

स होता विश्वं परि भूत्वध्वरं तमु हव्यैर्मनुष ऋञ्जते गिरा ।

हिरिशिप्रो वृधसानासु जर्भुरद्द्यौर्न स्तृभिश्चितयद्रोदसी अनु ॥ (२–२–५)

स नो रेवत्समिधानः स्वस्तये संददस्वान्रयिमस्मासु दीदिहि ।

आ नः कृणुष्व सुविताय रोदसी अग्ने हव्या मनुषो देव वीतये ॥ (२–२–६)

दा नो अग्ने बृहतो दाः सहस्रिणो दुरो न वाजं श्रुत्या अपा वृधि ।

प्राची द्यावापृथिवी ब्रह्मणा कृधि स्वर्ण शुक्रमुषसो वि दिद्युतः ॥ (२–२–७)

स इधान उषसो राम्या अनु स्वर्ण दीदेदरुषेण भानुना ।

होत्राभिरग्निर्मनुषः स्वध्वरो राजा विशामतिथिश्चारुरायवे ॥ (२–२–८)

एवा नो अग्ने अमृतेषु पूर्व्य धीष्पीपाय बृहद्दिवेषु मानुषा ।

दुहाना धेनुर्वृजनेषु कारवे त्मना शतिन्पुरुरूपमिषणि ॥ (२–२–९)

वयमग्ने अर्वता वा सुवीर्यं ब्रह्मणा वा चितयेमा जनाँ अति ।

अस्माकं द्युम्नमधि पञ्च कृष्टिषूच्चा स्वर्ण शुशुचीत दुष्टरम् ॥ (२–२–१०)

स नो बोधि सहस्य प्रशंस्यो यस्मिन्सुजाता इषयन्त सूरयः ।

यमग्ने यज्ञमुपयन्ति वाजिनो नित्ये तोके दीदिवांसं स्वे दमे ॥ (२–२–११)

उभयासो जातवेदः स्याम ते स्तोतारो अग्ने सूरयश्च शर्मणि ।

वस्वो रायः पुरुश्चन्द्रस्य भूयसः प्रजावतः स्वपत्यस्य शग्धि नः ॥ (२–२–१२)

ये स्तोतृभ्यो गोअग्रामश्वपेशसमग्ने रातिमुपसृजन्ति सूरयः ।

अस्माञ्च तांश्च प्र हि नेषि वस्य आ बृहद्वदेम विदथे सुवीराः ॥ (२–२–१३)

त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।

तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ (१–३१–१)

त्वमग्ने प्रथमो अङ्गिरस्तमः कविर्देवानां परि भूषसि व्रतम् ।

विभुर्विश्वस्मै भुवनाय मेधिरो द्विमाता शयुः कतिधा चिदायवे ॥ (१–३१–२)

त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया विवस्वते ।

अरेजेतां रोदसी होतृवूर्येऽसघ्नोर्भारमयजो महो वसो ॥ (१–३१–३)

त्वमग्ने मनवे द्यामवाशयः पुरूरवसे सुकृते सुकृत्तरः ।

श्वात्रेण यत्पित्रोर्मुच्यसे पर्या त्वा पूर्वमनयन्न आपरं पुनः ॥ (१–३१–४)

त्वमग्ने वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः ।

य आहुतिं परि वेदा वषट्कृतिमेकायुरग्रे विश आविवाससि ॥ (१–३१–५)

त्वमग्ने वृजिनवर्तनिं नरं सक्मन् पिपर्षि विदथे विचर्षणे ।

यः शूरसाता परितक्म्ये धने दभ्रेभिश्चित्समृता हंसि भूयसः ॥ (१–३१–६)

त्वं तमग्ने अमृतत्व उत्तमे मर्तं दधासि श्रवसे दिवे दिवे ।

यस्तातृषाण उभयाय जन्मने मयः कृणोषि प्रय आ च सूरये ॥ (१–३१–७)

त्वं नो अग्ने सनये धनानां यशस्कारुं कृणुहि स्तवानः ।

ऋध्याम कर्मापसा नवेन देवैर्द्यावापृथिवी प्रावतं नः ॥ (१–३१–८)

त्वं नो अग्ने पित्रोरुपस्थ आ देवो देवेष्वनवद्य जागृविः ।

तनूकृद्बोधि प्रमतिश्च कारवे त्वं कल्याण वसु विश्वमोपिषे ॥ (१–३१–९)

त्वमग्ने प्रमतिस्त्वं पितासि नस्त्वं वयस्कृत्तव जामयो वयम् ।

सं त्वा रायः शतिनः सं सहस्रिणः सुवीरं यन्ति व्रतपामदाभ्य ॥ (१–३१–१०)

त्वामग्ने प्रथममायुमायवे देवा अकृण्वन्नहुषस्य विश्पतिम् ।

इळामकृण्वन्मनुषस्य शासनीं पितुर्यत्पुत्रो ममकस्य जायते ॥ (१–३१–११)

त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य ।

त्राता तोकस्य तनये गवामस्यनिमेषं रक्षमाणस्तव व्रते ॥ (१–३१–१२)

त्वमग्ने यज्यवे पायुरन्तरोऽनिषङ्गाय चतुरक्ष इध्यसे ।
यो रातहव्योऽवृकाय धायसे कीरेश्चिन्मन्त्रं मनसा वनोषि तम् ॥ (१–३१–१३)
त्वमग्न उरुशंसाय वाघते स्पार्हं यद्रेक्णः परमं वनोषि तत् ।
आध्रस्य चित्प्रमतिरुच्यसे पिता प्र पाकं शास्सि प्र दिशो विदुष्टरः ॥ (१–३१–१४)
त्वमग्ने प्रयतदक्षिणं नरं वर्मेव स्यूतं परि पासि विश्वतः ।
स्वादुक्षद्मा यो वसतौ स्योनकृज्जीवयाजं यजते सोपमा दिवः ॥ (१–३१–१५)
इमामग्ने शरणिं मीमृषो न इममध्वान्यमगाम दूरात् ।
आपिः पिता प्रमतिः सोम्यानां भृमिरस्य् ऋषिकृन्मर्त्यानाम् ॥ (१–३१–१६)
मनुष्वदग्ने अङ्गिरस्वदङ्गिरो ययातिवत्सदने पूर्ववच्छुचे ।
अच्छ याह्या वहा दैव्युनमा सादय बर्हिषि यक्षि च प्रियम् ॥ (१–३१–१७)
एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा ।
उत प्र णेष्यभि वस्यो अस्मान्सं नः सृज सुमत्या वाजवत्या ॥ (१–३१–१८)
नू चित्सहोजा अमृतो नि तुन्दते होता यद्दूतो अभवद्विवस्वतः ।
वि साधिष्ठेभिः पथिभी रजो मम आ देवताता हविषा विवासति ॥ (१–५८–१)
आ स्वमद्म युवमानो अजरस्तृष्वविष्यन्न अतसेषु तिष्ठति ।
अत्यो न पृष्ठं प्रुषितस्य रोचते दिवो न सानु स्तनयन्न अचिक्रदत् ॥ (१–५८–२)
क्राणा रुद्रेभिर्वसुभिः पुरोहितो होता निषत्तो रयिषाळमर्त्यः ।
रथो न विक्ष्वृञ्जसान आयुषु व्यानुषग् वार्या देव ऋण्वति ॥ (१–५८–३)
वि वातजूतो अतसेषु तिष्ठते वृथा जुहूभिः सृण्या तुविष्वणिः ।
तृषु यदग्ने वनिनो वृषायसे कृष्णं त एम रुशदूर्मे अजर ॥ (१–५८–४)
तपुर्जम्भो वन आ वातचोदितो यूथे न साह्वाँ अव वाति वंसगः ।
अभिव्रजन्न अक्षितं पाजसा रज स्थातुश्चरथं भयते पतत्रिणः ॥ (१–५८–५)
वेदिषदे प्रियधामाय सुद्युते धासिमिव प्र भरा योनिमग्नये ।
वस्त्रेणेव वासया मन्मना शुचिं ज्योतीरथं शुक्रवर्णं तमोहनम् ॥ (१–१४०–१)
अभि द्विजन्मा त्रिवृदन्नमृज्यते संवत्सरे वावृधे जग्धमी पुनः ।
अन्यस्यासा जिह्वया जेन्यो वृषा न्यन्येन वनिनो मृष्ट वारणः ॥ (१–१४०–२)
कृष्णप्रुतौ वेविजे अस्य सक्षिता उभा तरेते अभि मातरा शिशुम् ।
प्राचाजिह्वं ध्वसयन्तं तृषुच्युतमा साच्यं कुपयं वर्धनं पितुः ॥ (१–१४०–३)
मुमुक्ष्वो मनवे मानवस्यते रघुद्रुवः कृष्णसीतास ऊ जुवः ।

असमना अजिरासो रघुष्यदो वातजूता उप युज्यन्त आशवः ॥ (१–१४०–४)

आदस्य ते ध्वसयन्तो वृथेरते कृष्णमभ्वं महि वर्पः करिक्रतः ।

यत्सीं महीमवनिप्राभि मर्मृशदभिश्वसन् स्तनयन्नेति नानदत् ॥ (१–१४०–५)

भूषन्न योऽधि बभ्रूषु नम्नते वृषेव पत्नीरभ्येति रोरुवत् ।

ओजायमानस्तन्वश्च शुम्भते भीमो न शृङ्गा दविधाव दुर्गृभिः ॥ (१–१४०–६)

स संस्तिरो विष्टिरः सं गृभायति जानन्न एव जानतीर्नित्य आ शये ।

पुनर्वर्धन्ते अपि यन्ति देव्यमन्यद्वर्पः पित्रोः कृण्वते सचा ॥ (१–१४०–७)

तमग्रुवः केशिनीः सं हि रेभिर ऊर्ध्वास्तस्थुर्मम्रुषीः प्रायवे पुनः ।

तासां जरां प्रमुञ्चन्नेति नानददसुं परं जनयञ्जीवमस्तृतम् ॥ (१–१४०–८)

अधीवासं परि मातू रिहन्नह तुविग्रेभिः सत्वभिर्याति वि ज्रयः ।

वयो दधत्पद्वते रेरिहत्सदानु श्येनी सचते वर्तनीरह ॥ (१–१४०–९)

अस्माकमग्ने मघवत्सु दीदिह्यध श्वसीवान्वृषभो दमूनाः ।

अवास्या शिशुमतीरदीदेर्वर्मेव युत्सु परिजर्भुराणः ॥ (१–१४०–१०)

इदमग्ने सुधितं दुर्धितादधि प्रियादु चिन्मन्मनः प्रेयो अस्तु ते ।

यत्ते शुक्रं तन्वो रोचते शुचि तेनास्मभ्यं वनसे रत्नमा त्वम् ॥ (१–१४०–११)

रथाय नावमुत नो गृहाय नित्यारित्रां पद्वतीं रास्यग्ने ।

अस्माकं वीराँ उत नो मघोनो जनांश्च या पारयाच्छर्म या च ॥ (१–१४०–१२)

अभी नो अग्न उक्थमिज्जुगुर्या द्यावाक्षामा सिन्धवश्च स्वगूर्ताः ।

गव्यं यव्यं यन्तो दीर्घाहेषं वरमरुण्यो वरन्त ॥ (१–१४०–१३)

बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जनि ।

यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ॥ (१–१४१–१)

पृक्षो वपुः पितुमान्नित्य आ शये द्वितीयमा सप्तशिवासु मातृषु ।

तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ॥ (१–१४१–२)

निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रन्त सूरयः ।

यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति ॥ (१–१४१–३)

प्र यत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति ।

उभा यदस्य जनुषं यदिन्वत आदिद्यविष्ठो अभवद् घृणा शुचिः ॥ (१–१४१–४)

आदिन्मातॄराविशद्यास्वा शुचिरहिंस्यमान उर्विया वि वावृधे ।

अनु यत्पूर्वा अरुहत्सनाजुवो नि नव्यसीष्ववरासु धावते ॥ (१–१४१–५)

आदिद्धोतारं वृणते दिविष्टिषु भगमिव पपृचानास ऋञ्जते ।

देवान्यत् क्रत्वा मज्मना पुरुष्टुतो मर्तं शंसं विश्वधा वेति धायसे ॥ (१–१४१–६)

वि यदस्थाद्यजतो वातचोदितो ह्वारो न वक्वा जरणा अनाकृतः ।

तस्य पत्मन्दक्षुषः कृष्णजंहसः शुचिजन्मनो रज आ व्यध्वनः ॥ (१–१४१–७)

रथो न यातः शिक्वभिः कृतो द्यामङ्गेभिररुषेभिरीयते ।

आदस्य ते कृष्णासो दक्षि सूरयः शूरस्येव त्वेषथादीषते वयः ॥ (१–१४१–८)

त्वया ह्यग्ने वरुणो धृतव्रतो मित्रः शाशद्रे अर्यमा सुदानवः ।

यत्सीमनु क्रतुना विश्वथा विभुररान्न नेमिः परिभूरजायथाः ॥ (१–१४१–९)

त्वमग्ने शशमानाय सुन्वते रत्नं यविष्ठ देवतातिमिन्वसि ।

तं त्वा नु नव्यं सहसो युवन्वयं भगं न कारे महिरत्न धीमहि ॥ (१–१४१–१०)

अस्मे रयिं स्वर्थं दमूनसं भगं दक्षं न पपृचासि धर्णसिम् ।

रश्मीँरिव यो यमति जन्मनी उभे देवानां शंसमृत आ च सुक्रतुः ॥ (१–१४१–११)

उत नः सुद्योत्मा जीराश्वो होता मन्द्रः शृणवच्चन्द्ररथः ।

स नो नेषन्नेषतमैरमूरोऽग्निर्वामं सुवितं वस्यो अच्छ ॥ (१–१४१–१२)

अस्ताव्यग्निः शिमीवद्भिरर्कैः साम्राज्याय प्रतरं दधानः ।

अमी च ये मघवानो वयं च मिहं न सूरो अति निष्टतन्युः ॥ (१–१४१–१३)

प्र तव्यसीं नव्यसीं धीतिमग्नये वाचो मतिं सहसः सूनवे भरे ।

अपां नपाद्यो वसुभिः सह प्रियो होता पृथिव्यां न्यसीददृत्वियः ॥ (१–१४३–१)

स जायमानः परमे व्योमन्याविरग्निरभवन्मातरिश्वने ।

अस्य क्रत्वा समिधानस्य मज्मना प्र द्यावा शोचिः पृथिवी अरोचयत् ॥ (१–१४३–२)

अस्य त्वेषा अजरा अस्य भानवः सुसंदृशः सुप्रतीकस्य सुद्युतः ।

भात्वक्षसो अत्यक्तुर्न सिन्धवोऽग्ने रेजन्ते अससन्तो अजराः ॥ (१–१४३–३)

यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना ।

अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति ॥ (१–१४३–४)

न यो वराय मरुतामिव स्वनः सेनेव सृष्टा दिव्या यथाशनिः ।

अग्निर्जम्भैस्तिगितैरत्ति भर्वति योधो न शत्रून्स वना न्यृञ्जते ॥ (१–१४३–५)

कुविन्नो अग्निरुचथस्य वीरसद्वसुष् कुविद्वसुभिः काममावरत् ।

चोदः कुवित्तुतुज्यात्सातये धियः शुचिप्रतीकं तमया धिया गृणे ॥ (१–१४३–६)

घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समिधान ऋञ्जते ।

इन्धानो अक्रो विदथेषु दीद्यच्छुक्रवर्णामुदु नो यंसते धियम् ॥ (१–१४३–७)

अप्रयुच्छन्न अप्रयुच्छद्भिरग्ने शिवेभिर्नः पायुभिः पाहि शग्मैः ।

अदब्धेभिरदृपितेभिरिष्टेऽनिमिषद्भिः परि पाहि नो जाः ॥ (१–१४३–८)

एति प्र होता व्रतमस्य माययोर्ध्वां दधानः शुचिपेशसं धियम् ।

अभि स्रुचः क्रमते दक्षिणावृतो या अस्य धाम प्रथमं ह निंसते ॥ (१–१४४–१)

अभीमृतस्य दोहना अनूषत योनौ देवस्य सदने परीवृताः ।

अपामुपस्थे विभृतो यदावसदध स्वधा अधयद्याभिरीयते ॥ (१–१४४–२)

युयूषतः सवयसा तदिद्वपुः समानमर्थं वितरित्रता मिथः ।

आदीं भगो न हव्यः समस्मदा वोळ्हुर्न रश्मीन्समयंस्त सारथिः ॥ (१–१४४–३)

यमीं द्वा सवयसा सपर्यतः समाने योना मिथुना समोकसा ।

दिवा न नक्तं पलितो युवाजनि पुरू चरन्न अजरो मानुषा युगा ॥ (१–१४४–४)

तमीं हिन्वन्ति धीतयो दश व्रिशो देवं मर्तास ऊतये हवामहे ।

धनोरधि प्रवत आ स ऋण्वत्यभिव्रजद्भिर्वयुना नवाधित ॥ (१–१४४–५)

त्वं ह्यग्ने दिव्यस्य राजसि त्वं पार्थिवस्य पशुपा इव त्मना ।

एनी त एते बृहती अभिश्रिया हिरण्ययी वक्वरी बर्हिराशाते ॥ (१–१४४–६)

अग्ने जुषस्व प्रति हर्य तद्वचो मन्द्र स्वधाव ऋतजात सुक्रतो ।

यो विश्वतः प्रत्यङ्ङसि दर्शतो रण्वः संदृष्टौ पितुमाँ इव क्षयः ॥ (१–१४४–७)

तं पृच्छता स जगामा स वेद स चिकित्वाँ ईयते सा न्व् ईयते ।

तस्मिन्सन्ति प्रशिषस्तस्मिन्निष्टयः स वाजस्य शवसः शुष्मिणस्पतिः ॥ (१–१४५–१)

तमित्पृच्छन्ति न सिमो वि पृच्छति स्वेनेव धीरो मनसा यदग्रभीत् ।

न मृष्यते प्रथमं नापरं वचोऽस्य क्रत्वा सचते अप्रदृपितः ॥ (१–१४५–२)

तमिद्गच्छन्ति जुह्वस्तमर्वतीर्विश्वान्येकः शृणवद्वचांसि मे ।

पुरुप्रैषस्ततुरिर्यज्ञसाधनोऽच्छिद्रोतिः शिशुरादत्त सं रभः ॥ (१–१४५–३)

उपस्थायं चरति यत्समारत सद्यो जातस्तत्सार युज्येभिः ।

अभि श्वान्तं मृशते नान्द्ये मुदे यदीं गच्छन्त्युशतीरपिष्ठितम् ॥ (१–१४५–४)

स ईं मृगो अप्यो वनर्गुरुप त्वच्युपमस्यां नि धायि ।

व्यब्रवीद्वयुना मर्त्येभ्योऽग्निर्विद्वाँ ऋतचिद्धि सत्यः ॥ (१–१४५–५)

इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।

भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–१)

यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम् ।
स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–२)
शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम् ।
त्वमादित्याँ आ वह तान् ह्यू उश्मस्यग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–३)
भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणा पर्वणा वयम् ।
जीवातवे प्रतरं साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–४)
विशां गोपा अस्य चरन्ति जन्तवो द्विपच्च यदुत चतुष्पदक्तुभिः ।
चित्रः प्रकेत उषसो महाँ अस्यग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–५)
त्वमध्वर्युरुत होतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः ।
विश्वा विद्वाँ आर्त्विज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–६)
यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित्सन्तळिदिवाति रोचसे ।
रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–७)
पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्यः ।
तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–८)
वधैर्दुः शंसाँ अप दूढ्यो जहि दूरे वा ये अन्ति वा के चिदत्रिणः ।
अथा यज्ञाय गृणते सुगं कृध्यग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–९)
यदयुक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते रवः ।
आदिन्वसि वनिनो धूमकेतुनाग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–१०)
अध स्वनादुत बिभ्युः पतत्रिणो द्रप्सा यत्ते यवसादो व्यस्थिरन् ।
सुगं तत्ते तावकेभ्यो रथेभ्योऽग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–११)
अयं मित्रस्य वरुणस्य धायसेऽवयातां मरुतां हेळो अद्भुतः ।
मृळा सु नो भूत्वेषां मनः पुनरग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–१२)
देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे ।
शर्मन् स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–१३)
तत्ते भद्रं यत्समिद्धः स्वे दमे सोमाहुतो जरसे मृळयत्तमः ।
दधासि रत्नं द्रविणं च दाशुषेऽग्ने सख्ये मा रिषामा वयं तव ॥ (१–९४–१४)
यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता ।
यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ॥ (१–९४–१५)
स त्वमग्ने सौभगत्वस्य विद्वानस्माकमायुः प्र तिरेह देव ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ (१–९४–१६)

सं जागृवद्भिर्जरमाण इध्यते दमे दमूना इषयन्निळस्पदे ।

विश्वस्य होता हविषो वरेण्यो विभुर्विभावा सुषखा सखीयते ॥ (१०–९१–१)

स दर्शतश्रीरतिथिर्गृहे गृहे वने वने शिश्रिये तक्ववीरिव ।

जनुानुान्यो नाति मन्यते विश आ क्षेति विश्यो विशं विशम् ॥ (१०–९१–२)

सुदक्षो दक्षैः क्रतुनासि सुक्रतुरग्ने कविः काव्येनासि विश्ववित् ।

वसुर्वसूनां क्षयसि त्वमेक इद्द्यावा च यानि पृथिवी च पुष्यतः ॥ (१०–९१–३)

प्रजानन्न अग्ने तव योनिमृत्वियमिळायास्पदे घृतवन्तमासदः ।

आ ते चिकित्र उषसामिवेतयोऽरेपसः सूर्यस्येव रश्मयः ॥ (१०–९१–४)

तव श्रियो वर्ष्यस्येव विद्युतश्चित्राश्चिकित्र उषसां न केतवः ।

यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमास्ये ॥ (१०–९१–५)

तमोषधीर्दधिरे गर्भमृत्वियं तमापो अग्निुानयन्त मातरः ।

तमित्समानं वनिनश्च वीरुधोऽन्तर्वतीश्च सुवते च विश्वहा ॥ (१०–९१–६)

वातोपधूत इषितो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे ।

आ ते यतन्ते रथ्यो यथा पृथक् च्छर्धांस्यग्ने अजराणि धक्षतः ॥ (१०–९१–७)

मेधाकारं विदथस्य प्रसाधनमग्निं होतारं परिभूतमं मतिम् ।

तमिदर्भे हविष्या समानमित्तमिन्महे वृणते नान्यं त्वत् ॥ (१०–९१–८)

त्वामिदत्र वृणते त्वायवो होतारमग्ने विदथेषु वेधसः ।

यद्देवयन्तो दधति प्रयांसि ते हविष्मन्तो मनवो वृक्तबर्हिषः ॥ (१०–९१–९)

तवाग्ने होत्रं तव पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः ।

तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे ॥ (१०–९१–१०)

यस्तुभ्यमग्ने अमृताय मर्त्यः समिधा दाशदुत वा हविष्कृति ।

तस्य होता भवसि यासि दूत्यमुप ब्रूषे यजस्यध्वरीयसि ॥ (१०–९१–११)

इमा अस्मै मतयो वाचो अस्मदाँ ऋचो गिरः सुष्टुतयः समग्मत ।

वसूयवो वसवे जातवेदसे वृद्धासु चिद्वर्धनो यासु चाकनत् ॥ (१०–९१–१२)

इमां प्रत्नाय सुष्टुतिं नवीयसीं वोचेयमस्मा उशते शृणोतु नः ।

भूया अन्तरा ह्यृस्य निस्पृशे जायेव पत्य उशती सुवासाः ॥ (१०–९१–१३)

यस्मिन्न अश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः ।

कीलालपे सोमपृष्ठाय वेधसे ह्यृदा मतिं जनये चारुमग्नये ॥ (१०–९१–१४)

अहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोमः ।
वाजसनिं रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् ॥ (१०–९१–१५)
चित्र इच् च्छिशोस्तरुणस्य वक्षथो न यो मातरावप्येति धातवे ।
अनूधा यदि जीजनदधा च नु ववक्ष सद्यो महि दूत्यं चरन् ॥ (१०–११५–१)
अग्निर्ह नाम धायि दन्न अपस्तमः सं यो वना युवते भस्मना दता ।
अभिप्रमुरा जुह्वा स्वध्वर इनो न प्रोथमानो यवसे वृषा ॥ (१०–११५–२)
तं वो विं न द्रुषदं देवमन्धस इन्दुं प्रोथन्तं प्रवपन्तमर्णवम् ।
आसा वह्निं न शोचिषा विरप्शिनं महिव्रतं न सरजन्तमध्वनः ॥ (१०–११५–३)
वि यस्य ते ज्रयसानस्याजर धक्षोर्न वाताः परि सन्त्यच्युताः ।
आ रण्वासो युयुधयो न सत्वनं त्रितं नशन्त प्र शिषन्त इष्टये ॥ (१०–११५–४)
स इदग्निः कण्वतमः कण्वसखार्यः परस्यान्तरस्य तरुषः ।
अग्निः पातु गृणतो अग्निः सूरीनग्निर्ददातु तेषामवो नः ॥ (१०–११५–५)
वाजिन्तमाय सह्यसे सुपित्र्य तृषु च्यवानो अनु जातवेदसे ।
अनुद्रे चिद्यो धृषता वरं सते महिन्तमाय धन्वनेदविष्यते ॥ (१०–११५–६)
एवाग्निर्मर्तैः सह सूरिभिर्वसु ष्टवे सहसः सूनरो नृभिः ।
मित्रासो न ये सुधिता ऋतायवो द्यावो न द्युम्नैरभि सन्ति मानुषान् ॥ (१०–११५–७)
ऊर्जो नपात्सहसावन्निति त्वोपस्तुतस्य वन्दते वृषा वाक् ।
त्वां स्तोषाम त्वया सुवीरा द्राघीय आयुः प्रतरं दधानाः ॥ (१०–११५–८)
इति त्वाग्ने वृष्टिहव्यस्य पुत्रा उपस्तुतास ऋषयोऽवोचन् ।
तांश्च पाहि गृणतश्च सूरीन्वषड् वषळित्यूर्ध्वासो अनक्षन्नमो नम इत्यूर्ध्वासो अनक्षन् ॥ (१०–११५–९)
वसुं न चित्रमहसं गृणीषे वामं शेवमतिथिमद्विषेण्यम् ।
स रासते शुरुधो विश्वधायसोऽग्निर्होता गृहपतिः सुवीर्यम् ॥ (१०–१२२–१)
जुषाणो अग्ने प्रति हर्य मे वचो विश्वानि विद्वान्वयुनानि सुक्रतो ।
घृतनिर्णिग्ब्रह्मणे गातुमेरय तव देवा अजनयन्न अनु व्रतम् ॥ (१०–१२२–२)
सप्त धामानि परियन्न अमर्त्यो दाशद्दाशुषे सुकृते मामहस्व ।
सुवीरेण रयिणाग्ने स्वाभुवा यस्त आनट्समिधा तं जुषस्व ॥ (१०–१२२–३)
यज्ञस्य केतुं प्रथमं पुरोहितं हविष्मन्त ईळते सप्त वाजिनम् ।
शृण्वन्तमग्निं घृतपृष्ठमुक्षणं पृणन्तं देवं पृणते सुवीर्यम् ॥ (१०–१२२–४)
त्वं दूतः प्रथमो वरेण्यः स हूयमानो अमृताय मत्स्व ।

त्वां मर्जयन्मरुतो दाशुषो गृहे त्वां स्तोमेभिर्भृगवो वि रुरुचुः ॥ (१०–१२२–५)
इषं दुहन्सुदुघां विश्वधायसं यज्ञप्रिये यजमानाय सुक्रतो ।
अग्ने घृतस्नुस्त्रिर्ऋतानि दीद्यद्वर्तिर्यज्ञं परियन्सुक्रतूयसे ॥ (१०–१२२–६)
त्वामिदस्या उषसो व्युष्टिषु दूतं कृण्वाना अयजन्त मानुषाः ।
त्वां देवा महयाय्याय वावृधुराज्यमग्ने निमृजन्तो अध्वरे ॥ (१०–१२२–७)
नि त्वा वसिष्ठा अह्वन्त वाजिन्गृणन्तो अग्ने विदथेषु वेधसः ।
रायस्पोषं यजमानेषु धारय यूयं पात स्वस्तिभिः सदा नः ॥ (१०–१२२–८)

पाङ्क्तम्
अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आ भरो३ं
सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः ।
समर्वन्तो रघुद्रुवः सं सुजातासः सूरय इषं स्तोतृभ्य आ भरो३म्
अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।
अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य आ भरो३म्
आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद् दीदयति द्यवीषं स्तोतृभ्य आ भरो३म्
आ ते अग्न ऋचा हविः शुक्रस्य शोचिषस्पते ।
सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यं हूयत इषं स्तोतृभ्य आ भरो३ं
प्रो त्ये अग्नयोऽग्निषु विश्वं पुष्यन्ति वार्यम् ।
ते हिन्विरे त इन्विरे त इषण्यन्त्यानुषगिषं स्तोतृभ्य आ भरो३ं
तव त्ये अग्ने अर्चयो महि व्राधन्त वाजिनः ।
ये पत्वभिः शफानां व्रजा भुरन्त गोनामिषं स्तोतृभ्य आ भरो३ं
नवा नो अग्न आ भर स्तोतृभ्यः सुक्षितीरिषः ।
ती स्याम य आनृचुस्त्वादूतासो दमेदम इषं स्तोतृभ्य आ भरो३म्
उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि ।
उतो न उत् पुपूर्या उक्थेषु शवसस्पत इषं स्तोतृभ्य आ भरो३म्
एवाँ अग्निमजुर्यमुर्गीर्भिर्यज्ञेभिरानुषक् ।
दधदस्मे सुवीर्यमुत त्यदाश्वश्व्यमिषं स्तोतृभ्य आ भरो३ं [५ ।६ ।१–१०] [११८]

## उषस्यः ऋतुः

गायत्रम्

प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः । दिवो अदर्शि दुहितो३म्

अश्वेव चित्रारुषी माता गवामृतावरी । सखाभूदश्विनोरुषो३म्

उत सखास्यश्विनोरुत माता गवामसि । उतोषो वस्व ईशिषो३ं

यावयद्द्वेषसं त्वा चिकित्वित् सूनृतावरि । प्रति स्तोमैरभुत्स्महो३ं

प्रति भद्रा अदृक्षत गवां सर्गा न रश्मयः । ओषा अप्रा उरु ज्रयो३म्

आपप्रुषी विभावरि व्यावर्ज्योतिषा तमः । उषो अनु स्वधामहो३म्

आ द्यां तनोषि रश्मिभिरान्तरिक्षमुरु प्रियम् । उषः शुक्रेण शोचिषो३म् [४ ।५२ ।१–७] [१२५]

कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये । कं नक्षसे विभावरि ॥ (१–३०–२०)

वयं हि ते अमन्मह्यान्तादा पराकात् । अश्वे न चित्रे अरुषि ॥ (१–३०–२१)

त्वं त्येभिरा गहि वाजेभिर्दुहितर्दिवः । अस्मे रयिं नि धारय ॥ (१–३०–२२)

आनुष्टुभम्

उषो भद्रेभिरा गहि दिवश्चिद् रोचनादधि । वहन्त्वरुणप्सव उप त्वा सोमिनो गृहो३ं

सुपेशसं सुखं रथं यमध्यस्था उषस्त्वम् । तेना सुश्रवसं जनं प्रावाद्य दुहितर्दिवो३ं

वयश्चित् ते पतत्रिणो द्विपच्चतुष्पदर्जुनि । उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परो३ं

व्युच्छन्ती हि रश्मिभिर्विश्वमाभासि रोचनम् । तां त्वामुषर्वसूयवो गीर्भिः कण्वा अहूषतो३म्[१ ।४९ ।१–४][१२९]

त्रैष्टुभम्

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।

यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारो३ं

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।

समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनानो३ं

समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशिष्टे ।

न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपो३ं

भास्वती नेत्री सूनृतानामचेति चित्रा वि दुरो न आवः ।

प्रार्प्या जगद्व्यु नो रायो अख्यदुषा अजीगर्भुवनानि विश्वो३ं

जिह्मश्ये३ चरितवे मघोन्याभोगय इष्टये राय उ त्वम् ।

दभ्रण् पश्यद्भ्य उर्विया विचक्ष उषा अजीगर्भुवनानि विश्वो३ं

क्षत्राय त्वं श्रवसे त्वं महीया इष्टये त्वमर्थमिव त्वमित्यै ।
विसदृशा जीविताभिप्रचक्ष उषा अजेगर्भुवनानि विश्वोꣳ३म्
एषा दिवो दुहिता प्रत्यदर्शि व्युच्छन्ती युवतिः शुक्रवासाः ।
विश्वस्येशाना पार्थिवस्य वस्व उषो अद्येह सुभगे व्युच्छोꣳ३ं
परायतीनामन्वेति पाथ आयतीनां प्रथमा शश्वतीनाम् ।
व्युच्छन्ती जीवमुदीरयन्त्युषा मृतं कं चन बोधयन्तोꣳ३म्
उषो यदग्निं समिधे चकर्थ वि यदावश्चक्षसा सूर्यस्य ।
यन्मानुषान् यक्ष्यमाणाँ अजीगस्तद् देवेषु चकृषे भद्रमप्नोꣳ३ं
कियात्या यत् समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान् ।
अनु पूर्वाः कृपते वावशाना प्रदीध्याना जोषमन्याभिरेतोꣳ३म्
ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः ।
अस्माभिरू नु प्रतिचक्ष्याभूदो ते यन्ति ये अपरीषु पश्योꣳ३ं
यावयद् द्वेषा ऋतपा ऋतेजाः सुम्नावरी सूनृता ईरयन्ती ।
सुमङ्गलीर्बिभ्रती देववीतिमिहाद्योषः श्रेष्ठतमा व्युच्छोꣳ३ं
शश्वत् पुरोगा व्युवास देव्यथो अद्येदं व्यावो मघोनी ।
अथो व्युच्छादुत्तराँ अनु द्यूनजरामृता चरति स्वधाभोꣳ३ं
व्य१ञ्जिभिर्दिव आतास्वद्यौदप कृष्णां निर्णिजं देव्यावः ।
प्रबोधयन्त्यरुणेभिरश्वैरोषा याति सुयुजा रथेनोꣳ३म्
आवहन्ती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना ।
ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वोꣳ३म्
उदीर्ध्वं जीवो असुर्न आगादप प्रागात् तम आ ज्योतिरेति ।
आरैक् पन्थां यातवे सूर्यायागन्म यत्र प्रतिरन्त आयोꣳ३ं
स्यूमना वाच उदियर्ति वह्निः स्तवानो रेभ उषसो विभातीः ।
अद्या तदुच्छ  गृणते मघोन्यस्मे आयुर्नि दिदीहि प्रजावोꣳ३ं
या गोमतीरुषसः सर्ववीरा व्युच्छन्ति दाशुषे मर्त्याय ।
वायोरिव सूनृतानामुदर्के आ अश्वदा अश्नवत् सोमसुत्वोꣳ३ं
माता देवानामदितेरनीकं यज्ञस्य केतुर्बृहती वि भाहि ।
प्रशस्तिकृद् ब्रह्मणे नो व्यु१च्छा नो जने जनय विश्ववारोꣳ३ं
यच्चित्रमप्न उषसो वहन्तीजानाय शशमानाय भद्रम् ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्योः [१ ।११३ ।१-२०] [१४९]

पृथू रथो दक्षिणाया अयोज्यैनं देवासो अमृतासो अस्थुः ।

कृष्णादुदस्थादर्या विहायाश्चिकित्सन्ती मानुषाय क्षयाय ॥ (१-१२३-१)

पूर्वा विश्वस्माद्भुवनादबोधि जयन्ती वाजं बृहती सनुत्री ।

उच्चा व्यख्यद्युवतिः पुनर्भूरोषा अगन्प्रथमा पूर्वहूतौ ॥ (१-१२३-२)

यदद्य भागं विभजासि नृभ्य उषो देवि मर्त्यत्रा सुजाते ।

देवो नो अत्र सविता दमूना अनागसो वोचति सूर्याय ॥ (१-१२३-३)

गृहं गृहमहना यात्यच्छा दिवे दिवे अधि नामा दधाना ।

सिषासन्ती द्योतना शश्वदागादग्रमग्रमिद्भजते वसूनाम् ॥ (१-१२३-४)

भगस्य स्वसा वरुणस्य जामिरुषः सूनृते प्रथमा जरस्व ।

पश्चा स दघ्या यो अघस्य धाता जयेम तं दक्षिणया रथेन ॥ (१-१२३-५)

उदीरतां सूनृता उत्पुरंधीरुदग्नयः शुशुचानासो अस्थुः ।

स्पार्हा वसूनि तमसापगूळ्हाविष्कृण्वन्त्युषसो विभातीः ॥ (१-१२३-६)

अपान्यदेत्यभ्यन्यदेति विषुरूपे अहनी सं चरेते ।

परिक्षितोस्तमो अन्या गुहाकरद्यौदुषाः शोशुचता रथेन ॥ (१-१२३-७)

सदृशीरद्य सदृशीरिदु श्वो दीर्घं सचन्ते वरुणस्य धाम ।

अनवद्यास्त्रिंशतं योजनान्येकैका क्रतुं परि यन्ति सद्यः ॥ (१-१२३-८)

जानत्यह्नः प्रथमस्य नाम शुक्रा कृष्णादजनिष्ट श्वितीची ।

ऋतस्य योषा न मिनाति धामाहरहर्निष्कृतमाचरन्ती ॥ (१-१२३-९)

कन्येव तन्वा शाशदानाँ एषि देवि देवमियक्षमाणम् ।

संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुषे विभाती ॥ (१-१२३-१०)

सुसंकाशा मातृमृष्टेव योषाविस्तन्वं कृणुषे दृशे कम् ।

भद्रा त्वमुषो वितरं व्युच्छ न तत्ते अन्या उषसो नशन्त ॥ (१-१२३-११)

अश्वावतीर्गोमतीर्विश्ववारा यतमाना रश्मिभिः सूर्यस्य ।

परा च यन्ति पुनरा च यन्ति भद्रा नाम वहमाना उषासः ॥ (१-१२३-१२)

ऋतस्य रश्मिमनुयच्छमाना भद्रंभद्रं क्रतुमस्मासु धेहि ।

उषो नो अद्य सुहवा व्युच्छास्मासु रायो मघवत्सु च स्युः ॥ (१-१२३-१३)

उषा उच्छन्ती समिधाने अग्ना उद्यन्सूर्य उर्विया ज्योतिरश्रेत् ।

देवो नो अत्र सविता न्वर्थं प्रासावीद् द्विपत्प्र चतुष्पदित्यै ॥ (१-१२४-१)

अमिनती दैव्यानि व्रतानि प्रमिनती मनुष्या युगानि ।
ईयुषीणामुपमा शश्वतीनामायतीनां प्रथमोषा व्यद्यौत् ॥ (१–१२४–२)
एषा दिवो दुहिता प्रत्यदर्शि ज्योतिर्वसाना समना पुरस्तात् ।
ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥ (१–१२४–३)
उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि ।
अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम् ॥ (१–१२४–४)
पूर्वे अर्धे रजसो अप्त्यस्य गवां जनित्र्यकृत प्र केतुम् ।
व्यु प्रथते वितरं वरीय ओभा पृणन्ती पित्रोरुपस्था ॥ (१–१२४–५)
एवेदेषा पुरुतमा दृशे कं नाजामिं न परि वृणक्ति जामिम् ।
अरेपसा तन्वा शाशदाना नार्भादीषते न महो विभाती ॥ (१–१२४–६)
अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।
जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः ॥ (१–१२४–७)
स्वसा स्वस्रे ज्यायस्यै योनिमारैगपैत्यस्याः प्रतिचक्ष्येव ।
व्युच्छन्ती रश्मिभिः सूर्यस्याञ्ज्यङ्क्ते समनगा इव व्राः ॥ (१–१२४–८)
आसां पूर्वासामहसु स्वसॄणामपरा पूर्वामभ्येति पश्चात् ।
ताः प्रत्नवन्नव्यसीर्नूनमस्मे रेवदुच्छन्तु सुदिना उषासः ॥ (१–१२४–९)
प्र बोधयोषः पृणतो मघोन्यबुध्यमानाः पणयः ससन्तु ।
रेवदुच्छ मघवद्भ्यो मघोनि रेवत्स्तोत्रे सूनृते जारयन्ती ॥ (१–१२४–१०)
अवेयमश्वैद्युवतिः पुरस्ताद्युङ्क्ते गवामरुणानामनीकम् ।
वि नूनमुच्छादसति प्र केतुर्गृहंगृहमुप तिष्ठाते अग्निः ॥ (१–१२४–११)
उत्ते वयश्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो व्युष्टौ ।
अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥ (१–१२४–१२)
अस्तोढ्वं स्तोम्या ब्रह्मणा मेऽवीवृधध्वमुशतीरुषासः ।
युष्माकं देवीरवसा सनेम सहस्रिणं च शतिनं च वाजम् ॥ (१–१२४–१३)
प्रत्यर्ची रुशदस्या अदर्शि वि तिष्ठते बाधते कृष्णमभ्वम् ।
स्वरुं न पेशो विदथेष्वञ्जञ् चित्रं दिवो दुहिता भानुमश्रेत् ॥ (१–९२–५)
अतारिष्म तमसस्पारमस्योषा उच्छन्ती वयुना कृणोति ।
श्रिये च्छन्दो न स्मयते विभाती सुप्रतीका सौमनसायाजीगः ॥ (१–९२–६)
भास्वती नेत्री सूनृतानां दिव स्तवे दुहिता गोतमेभिः ।

प्रजावतो नृवतो अश्वबुध्यानुषो गोअग्राँ उप मासि वाजान् ॥ (१–९२–७)

उषस्तमश्यां यशसं सुवीरं दासप्रवर्गं रयिमश्वबुध्यम् ।

सुदंससा श्रवसा या विभासि वाजप्रसूता सुभगे बृहन्तम् ॥ (१–९२–८)

विश्वानि देवी भुवनाभिचक्ष्या प्रतीची चक्षुरुर्विया वि भाति ।

विश्वं जीवं चरसे बोधयन्ती विश्वस्य वाचमविदन्मनायोः ॥ (१–९२–९)

पुनः पुनर्जायमाना पुराणी समानं वर्णमभि शुम्भमाना ।

श्वघ्नीव कृत्नुर्विज आमिनाना मर्तस्य देवी जरयन्त्यायुः ॥ (१–९२–१०)

व्यूर्ण्वती दिवो अन्ताँ अबोध्यप स्वसारं सनुतर्युयोति ।

प्रमिनती मनुष्या युगानि योषा जारस्य चक्षसा वि भाति ॥ (१–९२–११)

पशून्न चित्रा सुभगा प्रथाना सिन्धुर्न क्षोद उर्विया व्यश्वैत् ।

अमिनती दैव्यानि व्रतानि सूर्यस्य चेति रश्मिभिर्दृशाना ॥ (१–९२–१२)

द्युतद्यामान्बृहतीमृतेन ऋतावरीमरुणप्सुं विभातीम् ।

देवीमुषसं स्वरावहन्तीं प्रति विप्रासो मतिभिर्जरन्ते ॥ (५–८०–१)

एषा जनं दर्शता बोधयन्ती सुगान्पथः कृण्वती यात्यग्रे ।

बृहद्रथा बृहती विश्वमिन्वोषा ज्योतिर्यच्छत्यग्रे अह्नाम् ॥ (५–८०–२)

एषा गोभिररुणेभिर्युजानास्रेधन्ती रयिमप्रायु चक्रे ।

पथो रदन्ती सुविताय देवी पुरुष्टुता विश्ववारा वि भाति ॥ (५–८०–३)

एषा व्येनी भवति द्विबर्हा आविष्कृण्वाना तन्वं पुरस्तात् ।

ऋतस्य पन्थामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥ (५–८०–४)

एषा शुभ्रा न तन्वो विदानोर्ध्वेव स्नाती दृशये नो अस्थात् ।

अप द्वेषो बाधमाना तमांस्युषा दिवो दुहिता ज्योतिषागात् ॥ (५–८०–५)

एषा प्रतीची दुहिता दिवो नॄन्योषेव भद्रा नि रिणीते अप्सः ।

व्यूर्ण्वती दाशुषे वार्याणि पुनर् ज्योतिर्युवतिः पूर्वथाकः ॥ (५–८०–६)

उषो वाजेन वाजिनि प्रचेता स्तोमं जुषस्व गृणतो मघोनि ।

पुराणी देवि युवतिः पुरंधिरनु व्रतं चरसि विश्ववारे ॥ (३–६१–१)

उषो देव्यमर्त्या वि भाहि चन्द्ररथा सूनृता ईरयन्ती ।

आ त्वा वहन्तु सुयमासो अश्वा हिरण्यवर्णां पृथुपाजसो ये ॥ (३–६१–२)

उषः प्रतीची भुवनानि विश्वोर्ध्वा तिष्ठस्यमृतस्य केतुः ।

समानमर्थं चरणीयमाना चक्रमिव नव्यस्या ववृत्स्व ॥ (३–६१–३)

अव स्यूमेव चिन्वती मघोन्युषा याति स्वसरस्य पत्नी ।
स्वर्जनन्ती सुभगा सुदंसा आन्ताद्दिवः पप्रथ आ पृथिव्याः ॥ (३–६१–४)
अच्छा वो देवीमुषसं विभातीं प्र वो भरध्वं नमसा सुवृक्तिम् ।
ऊर्ध्वं मधुधा दिवि पाजो अश्रेत्प्र रोचना रुरुचे रण्वसंदृक् ॥ (३–६१–५)
ऋतावरी दिवो अर्कैरबोध्या रेवती रोदसी चित्रमस्थात् ।
आयतीमग्न उषसं विभातीं वाममेषि द्रविणं भिक्षमाणः ॥ (३–६१–६)
ऋतस्य बुध्न उषसामिषण्यन्वृषा मही रोदसी आ विवेश ।
मही मित्रस्य वरुणस्य माया चन्द्रेव भानुं वि दधे पुरुत्रा ॥ (३–६१–७)
इदमु त्यत्पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् ।
नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय ॥ (४–५१–१)
अस्थुरु चित्रा उषसः पुरस्तान् मिता इव स्वरवोऽध्वरेषु ।
व्यू व्रजस्य तमसो द्वारोच्छन्तीरव्रञ् च्छुचयः पावकाः ॥ (४–५१–२)
उच्छन्तीरद्य चितयन्त भोजान्राधोदेयायोषसो मघोनीः ।
अचित्रे अन्तः पणयः ससन्त्वबुध्यमानास्तमसो विमध्ये ॥ (४–५१–३)
कुवित्स देवीः सनयो नवो वा यामो बभूयादुषसो वो अद्य ।
येना नवग्वे अङ्गिरे दशग्वे सप्तास्ये रेवती रेवदूष ॥ (४–५१–४)
यूयं हि देवीर्ऋतयुग्भिरश्वैः परिप्रयाथ भुवनानि सद्यः ।
प्रबोधयन्तीरुषसः ससन्तं द्विपाच्चतुष्पाच्चरथाय जीवम् ॥ (४–५१–५)
क्व स्विदासां कतमा पुराणी यया विधाना विदधुर्ऋभूणाम् ।
शुभं यच्छुभ्रा उषसश्चरन्ति न वि ज्ञायन्ते सदृशीरजुर्याः ॥ (४–५१–६)
ता घा ता भद्रा उषसः पुरासुरभिष्टिद्युम्ना ऋतजातसत्याः ।
यास्व् ईजानः शशमान उक्थै स्तुवञ् च्छंसन्द्रविणं सद्य आप ॥ (४–५१–७)
ता आ चरन्ति समना पुरस्तात्समानतः समना पप्रथानाः ।
ऋतस्य देवीः सदसो बुधाना गवां न सर्गा उषसो जरन्ते ॥ (४–५१–८)
ता इन्वेव समना समानीरमीतवर्णा उषसश्चरन्ति ।
गूहन्तीरभ्वमसितं रुशद्भिः शुक्रास्तनूभिः शुचयो रुचानाः ॥ (४–५१–९)
रयिं दिवो दुहितरो विभातीः प्रजावन्तं यच्छतास्मासु देवीः ।
स्योनादा वः प्रतिबुध्यमानाः सुवीर्यस्य पतयः स्याम ॥ (४–५१–१०)
तद्वो दिवो दुहितरो विभातीरुप ब्रुव उषसो यज्ञकेतुः ।

वयं स्याम यशसो जनेषु तद्द्यौश्च धत्तां पृथिवी च देवी ॥ (४–५१–११)

उदु श्रिय उषसो रोचमाना अस्थुरपां नोर्मयो रुशन्तः ।

कृणोति विश्वा सुपथा सुगान्यभूदु वस्वी दक्षिणा मघोनी ॥ (६–६४–१)

भद्रा ददृक्ष उर्विया वि भास्युत्ते शोचिर्भानवो द्यामपप्तन् ।

आविर्वक्षः कृणुषे शुम्भमानोषो देवि रोचमाना महोभिः ॥ (६–६४–२)

वहन्ति सीमरुणासो रुशन्तो गावः सुभगामुर्विया प्रथानाम् ।

अपेजते शूरो अस्तेव शत्रून् बाधते तमो अजिरो न वोळ्हा ॥ (६–६४–३)

सुगोत ते सुपथा पर्वतेष्ववाते अपस्तरसि स्वभानो ।

सा न आ वह पृथुयामन्नृष्वे रयिं दिवो दुहितरिषयध्यै ॥ (६–६४–४)

सा वह योक्षभिरवातोषो वरं वहसि जोषमनु ।

त्वं दिवो दुहितर्या ह देवी पूर्वहूतौ मंहना दर्शता भूः ॥ (६–६४–५)

उत्ते वयश्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो व्युष्टौ ।

अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥ (६–६४–६)

एषा स्या नो दुहिता दिवोजाः क्षितीरुच्छन्ती मानुषीरजीगः ।

या भानुना रुशता राम्यास्वज्ञायि तिरस्तमसश्चिदक्तून् ॥ (६–६५–१)

वि तद्ययुररुणयुग्भिरश्वैश्चित्रं भान्त्युषसश्चन्द्ररथाः ।

अग्रं यज्ञस्य बृहतो नयन्तीर्वि ता बाधन्ते तम ऊर्म्यायाः ॥ (६–६५–२)

श्रवो वाजमिषमूर्जं वहन्तीर्नि दाशुष उषसो मर्त्याय ।

मघोनीवीरवत्पत्यमाना अवो धात विधते रत्नमद्य ॥ (६–६५–३)

इदा हि वो विधते रत्नमस्तीदा वीराय दाशुष उषासः ।

इदा विप्राय जरते यदुक्था नि ष्म मावते वहथा पुरा चित् ॥ (६–६५–४)

इदा हि त उषो अद्रिसानो गोत्रा गवामङ्गिरसो गृणन्ति ।

व्यर्केण बिभिदुर्ब्रह्मणा च सत्या नृणामभवद्देवहूतिः ॥ (६–६५–५)

उच्छा दिवो दुहितः प्रत्नवन्नो भरद्वाजवद्विधते मघोनि ।

सुवीरं रयिं गृणते रिरीह्युरुगायमधि धेहि श्रवो नः ॥ (६–६५–६)

व्युषा आवो दिविजा ऋतेनाविष्कृण्वाना महिमानमागात् ।

अप द्रुहस्तम आवरजुष्टमङ्गिरस्तमा पथ्या अजीगः ॥ (७–७५–१)

महे नो अद्य सुविताय बोध्युषो महे सौभगाय प्र यन्धि ।

चित्रं रयिं यशसं धेह्यस्मे देवि मर्तेषु मानुषि श्रवस्युम् ॥ (७–७५–२)

एते त्ये भानवो दर्शतायाश्चित्रा उषसो अमृतास आगुः ।
जनयन्तो दैव्यानि व्रतान्यापृणन्तो अन्तरिक्षा व्यस्थुः ॥ (७–७५–३)
एषा स्या युजाना पराकात्पञ्च क्षितीः परि सद्यो जिगाति ।
अभिपश्यन्ती वयुना जनानां दिवो दुहिता भुवनस्य पत्नी ॥ (७–७५–४)
वाजिनीवती सूर्यस्य योषा चित्रामघा राय ईशे वसूनाम् ।
ऋषिष्टुता जरयन्ती मघोन्युषा उच्छति वह्निभिर्गृणाना ॥ (७–७५–५)
प्रति द्युतानामरुषासो अश्वाश्चित्रा अदृश्रन्नुषसं वहन्तः ।
याति शुभ्रा विश्वपिशा रथेन दधाति रत्नं विधते जनाय ॥ (७–७५–६)
सत्या सत्येभिर्महती महद्भिर्देवी देवेभिर्यजता यजत्रैः ।
रुजद्दृळ्हानि ददुदुस्रियाणां प्रति गाव उषसं वावशन्त ॥ (७–७५–७)
नू नो गोमद्वीरवद्धेहि रत्नमुषो अश्वावद् पुरुभोजो अस्मे ।
मा नो बर्हिः पुरुषता निदे कर्यूयं पात स्वस्तिभिः सदा नः ॥ (७–७५–८)
उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत् ।
क्रत्वा देवानामजनिष्ट चक्षुराविरकर्भुवनं विश्वमुषाः ॥ (७–७६–१)
प्र मे पन्था देवयाना अदृश्रन्न अमर्धन्तो वसुभिरिष्कृतासः ।
अभूदु केतुरुषसः पुरस्तात्प्रतीच्यागादधि हर्म्येभ्यः ॥ (७–७६–२)
तानीदहानि बहुलान्यासन्या प्राचीनमुदिता सूर्यस्य ।
यतः परि जार इवाचरन्त्युषो ददृक्षे न पुनर्यतीव ॥ (७–७६–३)
त इद्देवानां सधमाद आसन्न ऋतावानः कवयः पूर्व्यासः ।
गूळ्हं ज्योतिः पितरो अन्वविन्दन्सत्यमन्त्रा अजनयन्नुषासम् ॥ (७–७६–४)
समान ऊर्वे अधि सङ्गतासः सं जानते न यतन्ते मिथस्ते ।
ते देवानां न मिनन्ति व्रतान्यमर्धन्तो वसुभिर्यादमानाः ॥ (७–७६–५)
प्रति त्वा स्तोमैरीळते वसिष्ठा उषर्बुधः सुभगे तुष्टुवांसः ।
गवां नेत्री वाजपत्नी न उच्छोषः सुजाते प्रथमा जरस्व ॥ (७–७६–६)
एषा नेत्री राधसः सूनृतानामुषा उच्छन्ती रिभ्यते वसिष्ठैः ।
दीर्घश्रुतं रयिमस्मे दधाना यूयं पात स्वस्तिभिः सदा नः ॥ (७–७६–७)
उपो रुरुचे युवतिर्न योषा विश्वं जीवं प्रसुवन्ती चरायै ।
अभूदग्निः समिधे मानुषाणामकर् ज्योतिर्बाधमाना तमांसि ॥ (७–७७–१)
विश्वं प्रतीची सप्रथा उदस्थाद्रुशद्वासो बिभ्रती शुक्रमश्वैत् ।

हिरण्यवर्णा सुदृशीकसंदृगावां माता नेत्र्यह्नामरोचि ॥ (७–७७–२)

देवानां चक्षुः सुभगा वहन्ती श्वेतं नयन्ती सुदृशीकमश्वम् ।

उषा अदर्शि रश्मिभिर् व्यक्ता चित्रामघा विश्वमनु प्रभूता ॥ (७–७७–३)

अन्तिवामा दूरे अमित्रमुच्छोर्वीं गव्यूतिमभयं कृधी नः ।

यावय द्वेष आ भरा वसूनि चोदय राधो गृणते मघोनि ॥ (७–७७–४)

अस्मे श्रेष्ठेभिर्भानुभिर्वि भाह्य् उषो देवि प्रतिरन्ती न आयुः ।

इषं च नो दधती विश्ववारे गोमदश्वावद्रथवच्च राधः ॥ (७–७७–५)

यां त्वा दिवो दुहितर्वर्धयन्त्युषः सुजाते मतिभिर्वसिष्ठाः ।

सास्मासु धा रयिमृष्वं बृहन्तं यूयं पात स्वस्तिभिः सदा नः ॥ (७–७७–६)

प्रति केतवः प्रथमा अदृश्रन्न ऊर्ध्वा अस्या अञ्जयो वि श्रयन्ते ।

उषो अर्वाचा बृहता रथेन ज्योतिष्मता वाममस्मभ्यं वक्षि ॥ (७–७८–१)

प्रति षीमग्निर्जरते समिद्धः प्रति विप्रासो मतिभिर्गृणन्तः ।

उषा याति ज्योतिषा बाधमाना विश्वा तमांसि दुरिताप देवी ॥ (७–७८–२)

एता उ त्याः प्रत्यदृश्रन्पुरस्ताज्ज्योतिर्यच्छन्तीरुषसो विभातीः ।

अजीजनन्सूर्यं यज्ञमग्निमपाचीनं तमो अगादजुष्टम् ॥ (७–७८–३)

अचेति दिवो दुहिता मघोनी विश्वे पश्यन्त्युषसं विभातीम् ।

आस्थाद्रथं स्वधया युज्यमानमा यमश्वासः सुयुजो वहन्ति ॥ (७–७८–४)

प्रति त्वाद्य सुमनसो बुधन्तास्माकासो मघवानो वयं च ।

तिल्विलायध्वमुषसो विभातीर्यूयं पात स्वस्तिभिः सदा नः ॥ (७–७८–५)

व्युषा आवः पथ्या जनानां पञ्च क्षितीर्मानुषीर्बोधयन्ती ।

सुसंदृग्भिरुक्षभिर्भानुमश्रेद्वि सूर्यो रोदसी चक्षसावः ॥ (७–७९–१)

व्यञ्जते दिवो अन्तेष्वक्तून्विशो न युक्ता उषसो यतन्ते ।

सं ते गावस्तम आ वर्तयन्ति ज्योतिर्यच्छन्ति सवितेव बाहू ॥ (७–७९–२)

अभूदुषा इन्द्रतमा मघोन्यजीजनत्सुविताय श्रवांसि ।

वि दिवो देवी दुहिता दधात्यङ्गिरस्तमा सुकृते वसूनि ॥ (७–७९–३)

तावदुषो राधो अस्मभ्यं रास्व यावत्स्तोतृभ्यो अरदो गृणाना ।

यां त्वा जज्ञुर्वृषभस्या रवेण वि दृळ्हस्य दुरो अद्रेरौर्णोः ॥ (७–७९–४)

देवंदेवं राधसे चोदयन्त्यस्मद्र्यक्सूनृता ईरयन्ती ।

व्युच्छन्ती नः सनये धियो धा यूयं पात स्वस्तिभिः सदा नः ॥ (७–७९–५)

प्रति स्तोमेभिरुषसं वसिष्ठा गीर्भिर्विप्रासः प्रथमा अबुध्रन् ।
विवर्तयन्तीं रजसी समन्ते आविष्कृण्वतीं भुवनानि विश्वा ॥ (७–८०–१)
एषा स्या नव्यमायुर्दधाना गूढ्वी तमो ज्योतिषोषा अबोधि ।
अग्र एति युवतिरह्रयाणा प्राचिकितत्सूर्यं यज्ञमग्निम् ॥ (७–८०–२)
अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः ।
घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥ (७–८०–३)

बार्हतम्

प्रत्यु अदर्श्यायत्यु१च्छन्ती दुहिता दिवः । अपो महि व्ययति चक्षसे तमो ज्योतिष्कृणोति सूनरो३म्
उदुस्रियाः सृजते सूर्यः सचाँ उद्यन्नक्षत्रमर्चिवत् ।
तवेदुषो व्युषि सूर्यस्य च सं भक्तेन गमेमहो३ं
प्रति त्वा दुहितर्दिव उषो जीरा अभुत्स्महि । या वहसि पुरु स्पार्हं वनन्वति रत्नं न दाशुषे मयो३म्
उच्छन्ती या कृणोषि मंहना महि प्रख्यै देवि स्वर्दृशे ।
तस्यास्ते रत्नभाज ईमहे वयं स्याम मातुर्न सूनवो३ं
तच्चित्रं राध आ भरोषो यद् दीर्घश्रुत्तमम् । यत् ते दिवो दुहितुर्मर्तभोजनं तद् रास्व भुनजामहो३ं
श्रवः सूरिभ्यो अमृतं वसुत्वनं वाजाँ अस्मभ्यं गोमतः ।
चोदयित्री मघोनः सूनृतावत्युषा उच्छदप स्रिधो३म्  [७ ।८१ ।१–६] [१५५]
सह वामेन न उषो व्युच्छा दुहितर्दिवः ।
सह द्युम्नेन बृहता विभावरि राया देवि दास्वती ॥ (१–४८–१)
अश्वावतीर्गोमतीर्विश्वसुविदो भूरि च्यवन्त वस्तवे ।
उदीरय प्रति मा सूनृता उषश्चोद राधो मघोनाम् ॥ (१–४८–२)
उवासोषा उच्छाच्च नु देवी जीरा रथानाम् ।
ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ॥ (१–४८–३)
उषो ये ते प्र यामेषु युञ्जते मनो दानाय सूरयः ।
अत्राह तत्कण्व एषां कण्वतमो नाम गृणाति नृणाम् ॥ (१–४८–४)
आ घा योषेव सूनर्युषा याति प्रभुञ्जती ।
जरयन्ती वृजनम्पद्वदीयत उत्पातयति पक्षिणः ॥ (१–४८–५)
वि या सृजति समनं व्यर्थिनः पदं न वेत्योदती ।
वयो नकिष्टे पप्तिवांस आसते व्युष्टौ वाजिनीवति ॥ (१–४८–६)

एषायुक्त परावतः सूर्यस्योदयनादधि ।
शतं रथेभिः सुभगोषा इयं वि यात्यभि मानुषान् ॥ (१–४८–७)
विश्वमस्या नानाम चक्षसे जगज्ज्योतिष्कृणोति सूनरी ।
अप द्वेषो मघोनी दुहिता दिव उषा उच्छदप स्रिधः ॥ (१–४८–८)
उष आ भाहि भानुना चन्द्रेण दुहितर्दिवः ।
आवहन्ती भूर्यस्मभ्यं सौभगं व्युच्छन्ती दिविष्टिषु ॥ (१–४८–९)
विश्वस्य हि प्राणनुीवनं त्वे वि यदुच्छसि सूनरि ।
सा नो रथेन बृहता विभावरि श्रुधि चित्रामघे हवम् ॥ (१–४८–१०)
उषो वाजं हि वंस्व यश्चित्रो मानुषे जने ।
तेना वह सुकृतो अध्वराँ उप ये त्वा गृणन्ति वह्नयः ॥ (१–४८–११)
विश्वान्देवाँ आ वह सोमपीतयेऽन्तरिक्षादुषस्त्वम् ।
सास्मासु धा गोमदश्वावदुक्थ्यमुषो वाजं सुवीर्यम् ॥ (१–४८–१२)
यस्या रुशन्तो अर्चयः प्रति भद्रा अदृक्षत ।
सा नो रयिं विश्ववारं सुपेशसमुषा ददातु सुग्म्यम् ॥ (१–४८–१३)
ये चिद्धि त्वामृषयः पूर्व ऊतये जुहूरेऽवसे महि ।
सा न स्तोमाँ अभि गृणीहि राधसोषः शुक्रेण शोचिषा ॥ (१–४८–१४)
उषो यदद्य भानुना वि द्वारावृणवो दिवः ।
प्र नो यच्छतादवृकं पृथु च्छर्दिः प्र देवि गोमतीरिषः ॥ (१–४८–१५)
सं नो राया बृहता विश्वपेशसा मिमिक्ष्वा समिळाभिरा ।
सं द्युम्नेन विश्वतुरोषो महि सं वाजैर्वाजिनीवति ॥ (१–४८–१६)

औष्णिहम्

उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहो३म्
उषो अद्येह गोमत्यश्वावति विभावरि । रेवदस्मे व्युच्छ सूनृतावतो३ं
युक्ष्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः । अथा नो विश्वा सौभगान्या वहो३म् [१ ।९२ ।१३–१५] [१५८]

जागतम्

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरो३म्
उदपप्तन्नरुणा भानवो वृथा स्वायुधो अरुषीर्गा अयुक्षत ।

अक्रन्नुषासो वयुनानि पूर्वथा रुशन्तं भानुमरुषीरशिश्रयो३म्
अर्चन्ति नारीरपसो न विष्टिभिः समानेन योजनेना परावतः ।
इषं वहन्तीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वतो३म्
अधि पेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव बर्जहम् ।
ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्यु१षा आवर्तमो३ं [१ ।९२ ।१–४] [१६२]

पाङ्क्तम्

महे नो अद्य बोधयोषो राये दिवत्मती ।
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृतो३ं
या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः ।
सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृतो३ं
सा नो अद्या भरद्वसुर्व्युच्छा दुहितर्दिवः ।
यो व्यौच्छः सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृतो३म्
अभि ये त्वा विभावरि स्तोमैर्गृणन्ति वह्नयः ।
मघैर्मघोनि सुश्रियो दामन्वन्तः सुरातयः सुजाते अश्वसूनृतो३ं
यच्चिद्धि ते गणा इमे छदयन्ति मघत्तये ।
परि चिद् वष्टयो दधुर्ददतो राधो अह्रयं सुजाते अश्वसूनृतो३म्
ऐषु धा वीरवद् यश उषो मघोनि सूरिषु ।
ये नो राधांस्यह्रया मघवानो अरासत सुजाते अश्वसूनृतो३ं
तेभ्यो द्युम्नं बृहद् यश उषो मघोन्या वह ।
ये नो राधांस्यश्व्या गव्या भजन्त सूरयः सुजाते अश्वसूनृतो३म्
उत नो गोमतीरिष आ वहा दुहितर्दिवः ।
साकं सूर्यस्य रश्मिभिः शुक्रैः शोचद्भिरर्चिभिः सुजाते अश्वसूनृतो३ं
व्युच्छा दुहितर्दिवो मा चिरं तनुथा अपः ।
नेत् त्वा स्तेनं यथा रिपुं तपाति सूरो अर्चिषा सुजाते अश्वसूनृतो३म्
एतावद् वेदुषस्त्वं भूयो वा दातुमर्हसि ।
या स्तोतृभ्यो विभावर्युच्छन्ती न प्रमीयसे सुजाते अश्वसूनृतो३ं [५ ।७९ ।१–१०] [१७२]

## आश्विनः ऋतुः

गायत्रम्

एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहो३ं

या दस्रा सिन्धुमातरा मनोतरा रयीणाम् । धिया देवा वसुविदो३ं

वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि । यद् वां रथो विभिष्पतो३ं

हविषा जारो अपां पिपर्ति पपुरिर्नरा । पिता कुटस्य चर्षणो३म्

आदारो वा मतीनां नासत्या मतवचसा । पातं सोमस्य धृष्णुयो३ं

य नः पीपरदश्विना ज्योतिष्मती तमस्तिरः । तामस्मे रासाथामिषो३म्

आ नो नावा मतीनां यातं पाराय गन्तवे । युञ्जाथामश्विना रथो३म्

अरित्रं वां दिवस्पृथु तीर्थे सिन्धूनां रथः । धिया युयुज्र इन्दवो३ं

दिवस्कण्वास इन्दवो वसु सिन्धूनां पदे । स्वं वव्रिं कुह धित्सथो३म्

अभूदु भा उ अंशवे हिरण्यं प्रति सूर्यः । व्यख्यज्जिह्वयासितो३म्

अभूदु पारमेतवे पन्था ऋतस्य साधुया । अदर्शि वि स्रुतिर्दिवो३ं

तत्तदिदश्विनोरवो जरिता प्रति भूषति । मदे सोमस्य पिप्रतो३ं

वावसाना विवस्वति सोमस्य पीत्वा गिरा । मनुष्वच्छम्भू आ गतो३ं

युवोरुषा अनु श्रियं परिज्मनोरुपाचरत् । ऋता वनथो अक्तुभो३म्

उभा पिबतमश्विनोभा नः शर्म यच्छतम् । अविद्रियाभिरूतिभो३ं [१ ।४६ ।१–१५] [१८७]

प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् । अस्य सोमस्य पीतये ॥ (१–२२–१)

या सुरथा रथीतमोभा देवा दिविस्पृशा । अश्विना ता हवामहे ॥ (१–२२–२)

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ॥ (१–२२–३)

नहि वामस्ति दूरके यत्रा रथेन गच्छथः । अश्विना सोमिनो गृहम् ॥ (१–२२–४)

अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती । पुरुभुजा चनस्यतम् ॥ (१–३–१)

अश्विना पुरुदंससा नरा शवीरया धिया । धिष्ण्या वनतं गिरः ॥ (१–३–२)

दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः । आ यातं रुद्रवर्तनी ॥ (१–३–३)

आश्विनावश्वावत्येषा यातखवीरया । गोमद्दस्रा हिरण्यवत् ॥ (१–३०–१७)

समानयोजनो हि वां रथो दस्रावमर्त्यः । समुद्रे अश्विनेयते ॥ (१–३०–१८)

न्यघ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः । परि द्यामन्यदीयते ॥ (१–३०–१९)

गोमदू षु नासत्याश्वावद्यातमश्विना । वर्ती रुद्रा नृपाय्यम् ॥ (२–४१–७)

न यत्परो नान्तर आदधर्षद्वृषण्वसू । दुः शंसो मर्त्यो रिपुः ॥ (२–४१–८)

ता न आ वोळ्हमश्विना रयिं पिशङ्गसंदृशम् । धिष्ण्या वरिवोविदम् ॥ (२–४१–९)

दूरादिहेव यत्सत्यरुणप्सुरशिश्वितत् । वि भानुं विश्वधातनत् ॥ (८–५–१)

नृवद्दस्रा मनोयुजा रथेन पृथुपाजसा । सचेथे अश्विनोषसम् ॥ (८–५–२)

युवाभ्यां वाजिनीवसू प्रति स्तोमा अदृक्षत । वाचं दूतो यथोहिषे ॥ (८–५–३)

पुरुप्रिया ण ऊतये पुरुमन्द्रा पुरूवसू । स्तुषे कण्वासो अश्विना ॥ (८–५–४)

मंहिष्ठा वाजसातमेषयन्ता शुभस्पती । गन्तारा दाशुषो गृहम् ॥ (८–५–५)

ता सुदेवाय दाशुषे सुमेधामवितारिणीम् । घृतैर्गव्यूतिमुक्षतम् ॥ (८–५–६)

आ न स्तोममुप द्रवत्तूयं श्येनेभिराशुभिः । यातमश्वेभिरश्विना ॥ (८–५–७)

येभिस्तिस्रः परावतो दिवो विश्वानि रोचना । त्रीँरक्तून्परिदीयथः ॥ (८–५–८)

उत नो गोमतीरिष उत सातीरहर्विदा । वि पथः सातये सितम् ॥ (८–५–९)

आ नो गोमन्तमश्विना सुवीरं सुरथं रयिम् । वोळ्हमश्वावतीरिषः ॥ (८–५–१०)

वावृधाना शुभस्पती दस्रा हिरण्यवर्तनी । पिबतं सोम्यं मधु ॥ (८–५–११)

अस्मभ्यं वाजिनीवसू मघवद्भ्यश्च सप्रथः । च्छर्दिर्यन्तमदाभ्यम् ॥ (८–५–१२)

नि षु ब्रह्म जनानां याविष्टं तूयमा गतम् । मो ष्वन्याँ उपारतम् ॥ (८–५–१३)

अस्य पिबतमश्विना युवं मदस्य चारुणः । मध्वो रातस्य धिष्ण्या ॥ (८–५–१४)

अस्मे आ वहतं रयिं शतवन्तं सहस्रिणम् । पुरुक्षुं विश्वधायसम् ॥ (८–५–१५)

पुरुत्रा चिद्धि वां नरा विह्वयन्ते मनीषिणः । वाघद्भिरश्विना गतम् ॥ (८–५–१६)

जनासो वृक्तबर्हिषो हविष्मन्तो अरंकृतः । युवां हवन्ते अश्विना ॥ (८–५–१७)

अस्माकमद्य वामयं स्तोमो वाहिष्ठो अन्तमः । युवाभ्यां भूत्वश्विना ॥ (८–५–१८)

यो ह वां मधुनो दृतिराहितो रथचर्षणे । ततः पिबतमश्विना ॥ (८–५–१९)

तेन नो वाजिनीवसू पश्वे तोकाय शं गवे । वहतं पीवरीरिषः ॥ (८–५–२०)

उत नो दिव्या इष उत सिन्धूँरहर्विदा । अप द्वारेव वर्षथः ॥ (८–५–२१)

कदा वां तौग्र्यो विधत्समुद्रे जहितो नरा । यद्वां रथो विभिष्पतात् ॥ (८–५–२२)

युवं कण्वाय नासत्या ऋपिरिप्ताय हर्म्ये । शश्वदूतीर्दशस्यथः ॥ (८–५–२३)

ताभिरा यातमूतिभिर्नव्यसीभिः सुशस्तिभिः । यद्वां वृषण्वसू हुवे ॥ (८–५–२४)

यथा चित्कण्वमावतं प्रियमेधमुपस्तुतम् । अत्रिं शिञ्जारमश्विना ॥ (८–५–२५)

यथोत कृत्व्ये धनेंऽशुं गोष्वगस्त्यम् । यथा वाजेषु सोभरिम् ॥ (८–५–२६)

एतावद्वां वृषण्वसू अतो वा भूयो अश्विना । गृणन्तः सुम्नमीमहे ॥ (८–५–२७)

रथं हिरण्यवन्धुरं हिरण्याभीशुमश्विना । आ हि स्थाथो दिविस्पृशम् ॥ (८–५–२८)

हिरण्ययी वां रभिरीषा अक्षो हिरण्ययः । उभा चक्रा हिरण्यया ॥ (८–५–२९)

तेन नो वाजिनीवसू परावतश्चिदा गतम् । उपेमां सुष्टुतिं मम ॥ (८–५–३०)

आ वहेथे पराकात्पूर्वीरश्नन्तावश्विना । इषो दासीरमर्त्या ॥ (८–५–३१)

आ नो द्युम्नैरा श्रवोभिरा राया यातमश्विना । पुरुश्चन्द्रा नासत्या ॥ (८–५–३२)

एह वां प्रुषितप्सवो वयो वहन्तु पर्णिनः । अच्छा स्वध्वरं जनम् ॥ (८–५–३३)

रथं वामनुगायसं य इषा वर्तते सह । न चक्रमभि बाधते ॥ (८–५–३४)

हिरण्ययेन रथेन द्रवत्पाणिभिरश्वैः । धीजवना नासत्या ॥ (८–५–३५)

युवं मृगाागृवांसं स्वदथो वा वृषण्वसू । ता नः पृङ्क्तमिषा रयिम् ॥ (८–५–३६)

वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा । युवाभ्यां भूत्वश्विना ॥ (८–२६–१६)

यददो दिवो अर्णव इषो वा मदथो गृहे । श्रुतमिन्मे अमर्त्या ॥ (८–२६–१७)

उत स्या श्वेतयावरी वाहिष्ठा वां नदीनाम् । सिन्धुर्हिरण्यवर्तनिः ॥ (८–२६–१८)

स्मद्येतया सुकीर्त्याश्विना श्वेतया धिया । वहेथे शुभ्रयावाना ॥ (८–२६–१९)

उदीराथामृतायते युञ्जाथामश्विना रथम् । अन्ति षद्भूतु वामवः ॥ (८–७३–१)

निमिषश्चिज्जवीयसा रथेना यातमश्विना । अन्ति षद्भूतु वामवः ॥ (८–७३–२)

उप स्तृणीतमत्रये हिमेन घर्ममश्विना । अन्ति षद्भूतु वामवः ॥ (८–७३–३)

कुह स्थः कुह जग्मथुः कुह श्येनेव पेतथुः । अन्ति षद्भूतु वामवः ॥ (८–७३–४)

यदद्य कर्हि कर्हि चिच्छुश्रूयातमिमं हवम् । अन्ति षद्भूतु वामवः ॥ (८–७३–५)

अश्विना यामहूतमा नेदिष्ठं याम्याप्यम् । अन्ति षद्भूतु वामवः ॥ (८–७३–६)

अवन्तमत्रये गृहं कृणुतं युवमश्विना । अन्ति षद्भूतु वामवः ॥ (८–७३–७)

वरेथे अग्निमातपो वदते वल्ग्वत्रये । अन्ति षद्भूतु वामवः ॥ (८–७३–८)

प्र सप्तवध्रिराशसा धारामग्नेरशायत । अन्ति षद्भूतु वामवः ॥ (८–७३–९)

इहा गतं वृषण्वसू शृणुतं म इमं हवम् । अन्ति षद्भूतु वामवः ॥ (८–७३–१०)

किमिदं वां पुराणवज्जरतोरिव शस्यते । अन्ति षद्भूतु वामवः ॥ (८–७३–११)

समानं वां सजात्यं समानो बन्धुरश्विना । अन्ति षद्भूतु वामवः ॥ (८–७३–१२)

यो वां रजांस्यश्विना रथो वियाति रोदसी । अन्ति षद्भूतु वामवः ॥ (८–७३–१३)

आ नो गव्येभिरश्व्यैः सहस्रैरुप गच्छतम् । अन्ति षद्भूतु वामवः ॥ (८–७३–१४)

मा नो गव्येभिरश्व्यैः सहस्रेभिरति ख्यतम् । अन्ति षद्भूतु वामवः ॥ (८–७३–१५)

अरुणप्सुरुषा अभूदकर् ज्योतिर्ऋतावरी । अन्ति षद्भूतु वामवः ॥ (८–७३–१६)

अश्विना सु विचाकशद्वृक्षं परशुमाँ इव । अन्ति षद्भूतु वामवः ॥ (८–७३–१७)

पुरं न धृष्णवा रुज कृष्णया बाधितो विशा । अन्ति षद्भूतु वामवः ॥ (८–७३–१८)

आ मे हवं नासत्याश्विना गच्छतं युवम् । मध्वः सोमस्य पीतये ॥ (८–८५–१)

इमं मे स्तोममश्विनेमं मे शृणुतं हवम् । मध्वः सोमस्य पीतये ॥ (८–८५–२)

अयं वां कृष्णो अश्विना हवते वाजिनीवसू । मध्वः सोमस्य पीतये ॥ (८–८५–३)
शृणुतं जरितुर्हवं कृष्णस्य स्तुवतो नरा । मध्वः सोमस्य पीतये ॥ (८–८५–४)
च्छर्दिर्यन्तमदाभ्यं विप्राय स्तुवते नरा । मध्वः सोमस्य पीतये ॥ (८–८५–५)
गच्छतं दाशुषो गृहमित्था स्तुवतो अश्विना । मध्वः सोमस्य पीतये ॥ (८–८५–६)
युञ्जाथां रासभं रथे वीड्वङ्गे वृषण्वसू । मध्वः सोमस्य पीतये ॥ (८–८५–७)
त्रिवन्धुरेण त्रिवृता रथेना यातमश्विना । मध्वः सोमस्य पीतये ॥ (८–८५–८)
नू मे गिरो नासत्याश्विना प्रावतं युवम् । मध्वः सोमस्य पीतये ॥ (८–८५–९)

आनुष्टुभम्
यदद्य स्थः परावति यदर्वावत्यश्विना । यद् वा पुरू पुरुभुजा यदन्तरिक्ष आ गतो३म्
इह त्या पुरुभूतमा पुरू दंसांसि बिभ्रता । वरस्या याम्यध्रिगू हुवे तुविष्टमा भुजो३म्
ईर्मान्यद् वपुषे वपुश्चक्रं रथस्य येमथुः । पर्यन्या नाहुषा युगा मह्ना रजांसि दीयथो३ं
तदू षु वामेना कृतं विश्वा यद् वामनु ष्टवे । नाना जातावरेपसा समस्मे बन्धुमेयथो३म्
आ यद् वां सूर्या रथं तिष्ठद् रघुष्यदं सदा । परि वामरुषा वयो घृणा वरन्त आतपो३ं
युवोरत्रिश्चिकेतति नरा सुम्नेन चेतसा । घर्मं यद् वामरेपसं नासत्यास्ना भुरण्यतो३म्
उग्रो वां ककुहोययिः शृण्वे यामेषु संतनिः । यद् वां दंसोभिरश्विनात्रिर्नराववर्तता३ं
मध्व ऊ षु मधूयुवा रुद्रा सिषक्ति पिप्युषी । यत् समुद्राति पर्षथः पक्वाः पृक्षो भरन्त वो३ं
सत्यमिद् वा उ अश्विना युवामाहुर्मयोभुवा । ता यामन् यामहूतमा यामन्ना मृळयत्तमो३म्
इमा ब्रह्माणि वर्धनाश्विभ्यां सन्तु शन्तमा । या तक्षाम रथाँ इवावोचाम बृहन्नमो३म् [५ ।७३ ।१–१०] [१९७]
कूष्ठो देवावश्विनाद्या दिवो मनावसू ।
तच्छ्रवथो वृषण्वसू अत्रिर्वामा विवासति ॥ (५–७४–१)
कुह त्या कुह नु श्रुता दिवि देवा नासत्या ।
कस्मिन्न आ यतथो जने को वां नदीनां सचा ॥ (५–७४–२)
कं याथः कं ह गच्छथः कमच्छा युञ्जाथे रथम् ।
कस्य ब्रह्माणि रण्यथो वयं वामुश्मसीष्टये ॥ (५–७४–३)
पौरं चिद् ध्युदप्रुतं पौर पौराय जिन्वथः ।
यदीं गृभीततातये सिंहमिव द्रुहस्पदे ॥ (५–७४–४)
प्र च्यवानाज्जुजुरुषो वव्रिमत्कं न मुञ्चथः ।
युवा यदी कृथः पुनरा काममृण्वे वध्वः ॥ (५–७४–५)

अस्ति हि वामिह स्तोता स्मसि वां संदृशि श्रिये ।
नू श्रुतं म आ गतमवोभिर्वाजिनीवसू ॥ (५–७४–६)
को वामद्य पुरूणामा वव्ने मर्त्यानाम् ।
को विप्रो विप्रवाहसा को यज्ञैर्वाजिनीवसू ॥ (५–७४–७)
आ वां रथो रथानां येष्ठो यात्वश्विना ।
पुरू चिदस्मयुस्तिर आङ्गूषो मर्त्येष्वा ॥ (५–७४–८)
शमू षु वां मधूयुवास्माकमस्तु चर्कृतिः ।
अर्वाचीना विचेतसा विभिः श्येनेव दीयतम् ॥ (५–७४–९)
अश्विना यद्ध कर्हि चिच्छुश्रूयातमिमं हवम् ।
वस्वीरू षु वां भुजः पृञ्चन्ति सु वां पृचः ॥ (५–७४–१०)
आ नो विश्वाभिरूतिभिरश्विना गच्छतं युवम् ।
दस्रा हिरण्यवर्तनी पिबतं सोम्यं मधु ॥ (८–८–१)
आ नून्यातमश्विना रथेन सूर्यत्वचा ।
भुजी हिरण्यपेशसा कवी गम्भीरचेतसा ॥ (८–८–२)
आ यातं नहुषस्पर्यान्तरिक्षात्सुवृक्तिभिः ।
पिबाथो अश्विना मधु कण्वानां सवने सुतम् ॥ (८–८–३)
आ नो यातं दिवस्पर्यान्तरिक्षादधप्रिया ।
पुत्रः कण्वस्य वामिह सुषाव सोम्यं मधु ॥ (८–८–४)
आ नो यातमुपश्रुत्यश्विना सोमपीतये ।
स्वाहा स्तोमस्य वर्धना प्र कवी धीतिभिर्नरा ॥ (८–८–५)
यच्चिद्धि वां पुर ऋषयो जुहूरेऽवसे नरा ।
आ यातमश्विना गतमुपेमां सुष्टुतिं मम ॥ (८–८–६)
दिवश्चिद्रोचनादध्या नो गन्तंस्वर्विदा ।
धीभिर्वत्सप्रचेतसा स्तोमेभिर्हवनश्रुता ॥ (८–८–७)
किमन्ये पर्यासतेऽस्मत्स्तोमेभिरश्विना ।
पुत्रः कण्वस्य वामृषिर्गीर्भिर्वत्सो अवीवृधत् ॥ (८–८–८)
आ वां विप्र इहावसेऽह्वत्स्तोमेभिरश्विना ।
अरिप्रा वृत्रहन्तमा ता नो भूतं मयोभुवा ॥ (८–८–९)
आ यद्वां योषणा रथमतिष्ठद्वाजिनीवसू ।

विश्वान्यश्विना युवं प्र धीतान्यगच्छतम् ॥ (८–८–१०)

अतः सहस्रनिर्णिजा रथेना यातमश्विना ।

वत्सो वां मधुमद्वचोऽशंसीत्काव्यः कविः ॥ (८–८–११)

पुरुमन्द्रा पुरूवसू मनोतरा रयीणाम् ।

स्तोमं मे अश्विनाविममभि वह्नी अनूषाताम् ॥ (८–८–१२)

आ नो विश्वान्यश्विना धत्तं राधांस्यह्रया ।

कृतं न ऋत्वियावतो मा नो रीरधतं निदे ॥ (८–८–१३)

यन्नासत्या परावति यद्वा स्थो अध्यम्बरे ।

अतः सहस्रनिर्णिजा रथेना यातमश्विना ॥ (८–८–१४)

यो वां नासत्यावृषिर्गीर्भिर्वत्सो अवीवृधत् ।

तस्मै सहस्रनिर्णिजमिषं धत्तं घृतश्चुतम् ॥ (८–८–१५)

प्रास्मा ऊर्जं घृतश्चुतमश्विना यच्छतं युवम् ।

यो वां सुम्नाय तुष्टवद्वसूयाद्दानुनस्पती ॥ (८–८–१६)

आ नो गन्तं रिशादसेमं स्तोमं पुरुभुजा ।

कृतं नः सुश्रियो नरेमा दातमभिष्टये ॥ (८–८–१७)

आ वां विश्वाभिरूतिभिः प्रियमेधा अहूषत ।

राजन्तावध्वराणामश्विना यामहूतिषु ॥ (८–८–१८)

आ नो गन्तं मयोभुवा ऋश्विना शम्भुवा युवम् ।

यो वां विपन्यू धीतिभिर्गीर्भिर्वत्सो अवीवृधत् ॥ (८–८–१९)

याभिः कण्वं मेधातिथिं याभिर्वशं दशव्रजम् ।

याभिर्गोशर्यमावतं ताभिर्नोऽवतं नरा ॥ (८–८–२०)

याभिर्नरा त्रसदस्युमावतं कृत्व्ये धने ।

ताभिः ष्वस्माँ अश्विना प्रावतं वाजसातये ॥ (८–८–२१)

प्र वां स्तोमाः सुवृक्तयो गिरो वर्धन्त्वश्विना ।

पुरुत्रा वृत्रहन्तमा ता नो भूतं पुरुस्पृहा ॥ (८–८–२२)

त्रीणि पदान्यश्विनोराविः सान्ति गुहा परः ।

कवी ऋतस्य पत्मभिरर्वाग्जीवेभ्यस्परि ॥ (८–८–२३)

त्यं चिदत्रिमृतजुरमर्थमश्वं न यातवे । कक्षीवन्तं यदी पुना रथं न कृणुथो नवम् ॥ (१०–१४३–१)

त्यं चिदश्वं न वाजिनमरेणवो यमत्नत । दृळ्हं ग्रन्थिं न वि ष्यतमत्रिं यविष्ठमा रजः ॥ (१०–१४३–२)

नरा दंसिष्ठवत्रये शुभ्रा सिषासतं धियः । अथा हि वां दिवो नरा पुन स्तोमो न विशसे ॥ (१०–१४३–३)

चिते तद्वां सुराधसा रातिः सुमतिरश्विना । आ यन्नः सदने पृथौ समने पर्षथो नरा ॥ (१०–१४३–४)

युवं भुज्युं समुद्र आ रजसः पार ईङ्खितम् । यातमच्छा पतत्रिभिर्नासत्या सातये कृतम् ॥ (१०–१४३–५)

आ वां सुम्नैः शंयू इव मंहिष्ठा विश्ववेदसा । समस्मे भूषतं नरोत्सं न पिप्युषीरिषः ॥ (१०–१४३–६)

त्रैष्टुभम्

आ भात्यग्निरुषसामनीकमुद् विप्राणां देवया वाचो अस्थुः ।

अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छोइं

न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।

दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शम्भविष्ठोइम्

उता यातं सङ्गवे प्रातरह्नो मध्यन्दिन उदिता सूर्यस्य ।

दिवा नक्तमवसा शन्तमेन नेदानीं पीतिरश्विना ततानोइम् ॥

इदं हि वां प्रदिवि स्थानमोक इमे गृहा अश्विनेदं दुरोणम् ।

आ नो दिवो बृहतः पर्वतादाद्भ्यो यातमिषमूर्जं वहन्तोइं

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।

आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानोइम् [५ ।७६ ।१–५] [२०२]

प्रातर्यावाणा प्रथमा यजध्वं पुरा गृध्रादररुषः पिबातः ।

प्रातर्हि यज्ञमश्विना दधाते प्र शंसन्ति कवयः पूर्वभाजः ॥ (५–७७–१)

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् ।

उतान्यो अस्मद्यजते वि चावः पूर्वः पूर्वो यजमानो वनीयान् ॥ (५–७७–२)

हिरण्यत्वङ् मधुवर्णो घृतस्नुः पृक्षो वहन्न आ रथो वर्तते वाम् ।

मनोजवा अश्विना वातरंहा येनातियाथो दुरितानि विश्वा ॥ (५–७७–३)

यो भूयिष्ठं नासत्याभ्यां विवेष चनिष्ठं पित्वो ररते विभागे ।

स तोकमस्य पीपरच्छमीभिरनूर्ध्वभासः सदमित्तुतुर्यात् ॥ (५–७७–४)

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।

आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ (५–७७–५)

ग्रावाणेव तदिदर्थं जरेथे गृध्रेव वृक्षं निधिमन्तमच्छ

ब्रह्माणेव विदथ उक्थशासा दूतेव हव्या जन्या पुरुत्रोइम् ॥

प्रात्र्यावाणा रथ्येव वीराऽजेव यमा वरमा सवेथे

मेने इव तन्वा शुम्भमाने दम्पतीव क्रतुविदा जनेषो३म् ॥

शृङ्गेव नः प्रथमा गन्तमर्वाक् छफाविव जर्भुराणा तरोभि–

श्चक्रवाकेव प्रति वस्तोरुस्राऽर्वाञ्चा यातं रथ्येव शक्रो३म् ॥

नावेव नः पारयतं युगेव नभ्येव न उपधीव प्रधीव

श्वानेव नो अरिषण्या तनूनां खृगलेव विस्रसः पातमस्मो३म् ॥

वातेवाजुर्या नद्येव रीतिरक्षी इव चक्षुषा यातमर्वा–

ग्घस्ताविव तन्वे शम्भविष्ठा पादेव नो नयतं वस्यो अच्छो३म् ॥

ओष्ठाविव मध्वास्ने वदन्ता स्तनाविव पिप्यतं जीवसे नो

नासेव नस्तन्वो रक्षितारा कर्णाविव सुश्रुता भूतमस्मो३म् ॥

हस्तेव शक्तिमभि सन्ददी नः क्षामेव नः समजतं रजांसी–

मा गिरो अश्विना युष्मयन्तीः क्ष्णोत्रेणैव स्वधितिं सं शिशीतो३म् ॥

एतानि वामश्विना वर्धनानि ब्रह्म स्तोमं गृत्समदो अक्रँस्तानि

नरा जुजुषाणोप यातं बृहद् वदेम विदथे सुवीरो३म् ॥

नासत्याभ्यां बर्हिरिव प्र वृञ्जे स्तोमाँ इयर्म्यभ्रियेव वातः ।

यावर्भगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन ॥ (१–११६–१)

वीळुपत्मभिराशुहेमभिर्वा देवानां वा जूतिभिः शाशदाना ।

तद्रासभो नासत्या सहस्रमाजा यमस्य प्रधने जिगाय ॥ (१–११६–२)

तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः ।

तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः ॥ (१–११६–३)

तिस्रः क्षपस्त्रिरहातिव्रजद्भिर्नासत्या भुज्युमूहथुः पतङ्गैः ।

समुद्रस्य धन्वन्नार्द्रस्य पारे त्रिभी रथैः शतपद्भिः षळश्वैः ॥ (१–११६–४)

अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे ।

यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसम् ॥ (१–११६–५)

यमश्विना ददथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति ।

तद्वां दात्रं महि कीर्तेन्यं भूत्पैद्वो वाजी सदमिद्धव्यो अर्यः ॥ (१–११६–६)

युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंधिम् ।

कारोतराच्छफादश्वस्य वृष्णः शतं कुम्भाँ असिञ्चतं सुरायाः ॥ (१–११६–७)

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् ।

ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥ (१–११६–८)

परावतं नासत्यानुदेथामुच्चाबुध्नं चक्रथुर्जिह्मबारम् ।
क्षरन्न आपो न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥ (१–११६–९)
जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात् ।
प्रातिरतं जहितस्यायुर्दस्रादित्पतिमकृणुतं कनीनाम् ॥ (१–११६–१०)
तद्वां नरा शंस्यं राध्यं चाभिष्टिमन्नासत्या वरूथम् ।
यद्विद्वांसा निधिमिवापगूळ्हमुद्दर्शतादूपथुर्वन्दनाय ॥ (१–११६–११)
तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् ।
दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच ॥ (१–११६–१२)
अजोहवीन्नासत्या करा वां महे यामन्पुरुभुजा पुरंधिः ।
श्रुतं तच्छासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तम् ॥ (१–११६–१३)
आस्नो वृकस्य वर्तिकामभीके युवं नरा नासत्यामुमुक्तम् ।
उतो कविं पुरुभुजा युवं ह कृपमाणमकृणुतं विचक्षे ॥ (१–११६–१४)
चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायाम् ।
सद्यो जङ्घामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तम् ॥ (१–११६–१५)
शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार ।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ॥ (१–११६–१६)
आ वां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठदर्वता जयन्ती ।
विश्वे देवा अन्वमन्यन्त ह्द्भिः समु श्रिया नासत्या सचेथे ॥ (१–११६–१७)
यदयातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयन्ता ।
रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता ॥ (१–११६–१८)
रयिं सुक्षत्रं स्वपत्यमायुः सुवीर्यंासत्या वहन्ता ।
आ जह्नावीं समनसोप वाजैस्त्रिरह्नो भागं दधतीमयातम् ॥ (१–११६–१९)
परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू रजोभिः ।
विभिन्दुना नासत्या रथेन वि पर्वताँ अजरयू अयातम् ॥ (१–११६–२०)
एकस्या वस्तोरावतं रणाय वशमश्विना सनये सहस्रा ।
निरहतं दुच्छुना इन्द्रवन्ता पृथुश्रवसो वृषणावरातीः ॥ (१–११६–२१)
शरस्य चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः ।
शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् ॥ (१–११६–२२)
अवस्यते स्तुवते कृष्णियाय ऋजूयते नासत्या शचीभिः ।

पशुं न नष्टमिव दर्शनाय विष्णाप्वं ददथुर्विश्वकाय ॥ (१–११६–२३)

दश रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्वन्तः ।

विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण ॥ (१–११६–२४)

प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः ।

उत पश्यन्न अश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम् ॥ (१–११६–२५)

मध्वः सोमस्याश्विना मदाय प्रत्नो होता विवासते वाम् ।

बर्हिष्मती रातिर्विश्रिता गीरिषा यातं नासत्योप वाजैः ॥ (१–११७–१)

यो वामश्विना मनसो जवीयान्रथः स्वश्वो विश आजिगाति ।

येन गच्छथः सुकृतो दुरोणं तेन नरा वर्तिरस्मभ्यं यातम् ॥ (१–११७–२)

ऋषिं नरावंहसः पाञ्चजन्यमृबीसादत्रिं मुञ्चथो गणेन ।

मिनन्ता दस्योरशिवस्य माया अनुपूर्वं वृषणा चोदयन्ता ॥ (१–११७–३)

अश्वं न गूळ्हमश्विना दुरेवैर्ऋषिं नरा वृषणा रेभमप्सु ।

सं तं रिणीथो विप्रुतं दंसोभिर्न वां जूर्यन्ति पूर्व्या कृतानि ॥ (१–११७–४)

सुषुप्वांसं न निरृतेरुपस्थे सूर्यो दस्रा तमसि क्षियन्तम् ।

शुभे रुक्मं न दर्शतं निखातमुदूपथुरश्विना वन्दनाय ॥ (१–११७–५)

तद्वां नरा शंस्यं पज्रियेण कक्षीवता नासत्या परिज्मन् ।

शफादश्वस्य वाजिनो जनाय शतं कुम्भाँ असिञ्चतं मधूनाम् ॥ (१–११७–६)

युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय ।

घोषायै चित्पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम् ॥ (१–११७–७)

युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय ।

प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम् ॥ (१–११७–८)

पुरू वर्पांस्यश्विना दधाना नि पेदव ऊहथुराशुमश्वम् ।

सहस्रसां वाजिनमप्रतीतमहिहनं श्रवस्यं तरुत्रम् ॥ (१–११७–९)

एतानि वां श्रवस्या सुदानू ब्रह्माङ्गूषं सदनं रोदस्योः ।

यद्वां पज्रासो अश्विना हवन्ते यातमिषा च विदुषे च वाजम् ॥ (१–११७–१०)

सूनोर्मानेनाश्विना गृणाना वाजं विप्राय भुरणा रदन्ता ।

अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्यारिणीतम् ॥ (१–११७–११)

कुह यान्ता सुष्टुतिं काव्यस्य दिवो नपाता वृषणा शयुत्रा ।

हिरण्यस्येव कलशं निखातमुदूपथुर्दशमे अश्विनाहन् ॥ (१–११७–१२)

युवं च्यवानमश्विना जरन्तं पुनर्युवानं चक्रथुः शचीभिः ।
युवो रथं दुहिता सूर्यस्य सह श्रिया नासत्यावृणीत ॥ (१–११७–१३)
युवं तुग्राय पूर्व्येभिरेवैः पुनर्मन्यावभवतं युवाना ।
युवं भुज्युमर्णसो निः समुद्राद्विभिरूहथुर्ऋज्रेभिरश्वैः ॥ (१–११७–१४)
अजोहवीदश्विना तौग्र्यो वां प्रोळ्हः समुद्रमव्यथिर्जगन्वान् ।
निष्टमूहथुः सुयुजा रथेन मनोजवसा वृषणा स्वस्ति ॥ (१–११७–१५)
अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य ।
वि जयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण ॥ (१–११७–१६)
शतं मेषान्वृक्ये मामहानं तमः प्रणीतमशिवेन पित्रा ।
आक्षी ऋज्राश्वे अश्विनावधत्तं ज्योतिरन्धाय चक्रथुर्विचक्षे ॥ (१–११७–१७)
शुनमन्धाय भरमह्वयत्सा वृकीरश्विना वृषणा नरेति ।
जारः कनीन इव चक्षदान ऋज्राश्वः शतमेकं च मेषान् ॥ (१–११७–१८)
मही वामूतिरश्विना मयोभूरुत स्रामं धिष्ण्या सं रिणीथः ।
अथा युवामिदह्वयत्पुरंधिरागच्छतं सीं वृषणाववोभिः ॥ (१–११७–१९)
अधेनुं दस्रा स्तर्यं विषक्तामपिन्वतं शयवे अश्विना गाम् ।
युवं शचीभिर्विमदाय जायां न्यूहथुः पुरुमित्रस्य योषाम् ॥ (१–११७–२०)
यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा ।
अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ॥ (१–११७–२१)
आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम् ।
स वां मधु प्र वोचदृतायन्त्वाष्ट्रं यद्दस्रावपिकक्ष्यं वाम् ॥ (१–११७–२२)
सदा कवी सुमतिमा चके वां विश्वा धियो अश्विना प्रावतं मे ।
अस्मे रयिंनासत्या बृहन्तमपत्यसाचं श्रुत्यं रराथाम् ॥ (१–११७–२३)
हिरण्यहस्तमश्विना रराणा पुत्रं नरा वध्रिमत्या अदत्तम् ।
त्रिधा ह श्यावमश्विना विकस्तमुज्जीवस ऐरयतं सुदानू ॥ (१–११७–२४)
एतानि वामश्विना वीर्याणि प्र पूर्व्याण्यायवोऽवोचन् ।
ब्रह्म कृण्वन्तो वृषणा युवभ्यां सुवीरासो विदथमा वदेम ॥ (१–११७–२५)
आ वां रथो अश्विना श्येनपत्वा सुमृळीकः स्ववाँ यात्वर्वाङ् ।
यो मर्त्यस्य मनसो जवीयान्त्रिवन्धुरो वृषणा वातरंहाः ॥ (१–११८–१)
त्रिवन्धुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक् ।

पिन्वतं गा जिन्वतमर्वतो नो वर्धयतमश्विना वीरमस्मे ॥ (१–११८–२)

प्रवद्यामना सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः ।

किमङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥ (१–११८–३)

आ वां श्येनासो अश्विना वहन्तु रथे युक्तास आशवः पतङ्गाः ।

ये अप्तुरो दिव्यासो न गृध्रा अभि प्रयो नासत्या वहन्ति ॥ (१–११८–४)

आ वां रथं युवतिस्तिष्ठदत्र जुष्ट्वी नरा दुहिता सूर्यस्य ।

परि वामश्वा वपुषः पतङ्गा वयो वहन्त्वरुषा अभीके ॥ (१–११८–५)

उद्वन्दनमैरतं दंसनाभिरुद्रेभं दस्रा वृषणा शचीभिः ।

निष्टौग्र्यं पारयथः समुद्रात्पुनश् च्यवानं चक्रथुर्युवानम् ॥ (१–११८–६)

युवमत्रयेऽवनीताय तप्तमूर्जमोमानमश्विनावधत्तम् ।

युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा ॥ (१–११८–७)

युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय ।

अमुञ्चतं वर्तिकामंहसो निः प्रति जङ्घां विश्पलाया अधत्तम् ॥ (१–११८–८)

युवं श्वेतं पेदव इन्द्रजूतमहिहनमश्विनादत्तमश्वम् ।

जोहूत्रमर्यो अभिभूतिमुग्रं सहस्रसां वृषणं वीड्वङ्गम् ॥ (१–११८–९)

ता वां नरा स्ववसे सुजाता हवामहे अश्विना नाधमानाः ।

आ न उप वसुमता रथेन गिरो जुषाणा सुविताय यातम् ॥ (१–११८–१०)

आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः ।

हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ ॥ (१–११८–११)

धेनुः प्रत्नस्य काम्यं दुहानान्तः पुत्रश्चरति दक्षिणायाः ।

आ द्योतनिं वहति शुभ्रयामोषस स्तोमो अश्विनावजीगः ॥ (३–५८–१)

सुयुग् वहन्ति प्रति वामृतेनोर्ध्वा भवन्ति पितरेव मेधाः ।

जरेथामस्मद्वि पणेर्मनीषां युवोरवश्चकृमा यातमर्वाक् ॥ (३–५८–२)

सुयुग्भिरश्वैः सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः ।

किमङ्ग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥ (३–५८–३)

आ मन्येथामा गतं कच्चिद्वेवैर्विश्वे जनासो अश्विना हवन्ते ।

इमा हि वां गोऋजीका मधूनि प्र मित्रासो न ददुरुस्रो अग्रे ॥ (३–५८–४)

तिरः पुरू चिदश्विना रजांस्याङ्गूषो वां मघवाना जनेषु ।

एह यातं पथिभिर्देवयानैर्दस्राविमे वां निधयो मधूनाम् ॥ (३–५८–५)

पुराणमोकः सख्यं शिवं वां युवोर्नरा द्रविणं जह्नाव्याम् ।
पुनः कृण्वानाः सख्या शिवानि मध्वा मदेम सह नू समानाः ॥ (३–५८–६)
अश्विना वायुना युवं सुदक्षा नियुद्भिष् च सजोषसा युवाना ।
नासत्या तिरोअह्न्युाषाणा सोमं पिबतमस्रिधा सुदानू ॥ (३–५८–७)
अश्विना परि वामिषः पुरूचीरीयुर्गीर्भिर्यतमाना अमृध्राः ।
रथो ह वामृतजा अद्रिजूतः परि द्यावापृथिवी याति सद्यः ॥ (३–५८–८)
अश्विना मधुषुत्तमो युवाकुः सोमस्तं पातमा गतं दुरोणे ।
रथो ह वां भूरि वर्पः करिक्रत्सुतावतो निष्कृतमागमिष्ठः ॥ (३–५८–९)
क उ श्रवत्कतमो यज्ञियानां वन्दारु देवः कतमो जुषाते ।
कस्येमां देवीममृतेषु प्रेष्ठां [illegible]दि श्रेषाम सुष्टुतिं सुहव्याम् ॥ (४–४३–१)
को मृळाति कतम आगमिष्ठो देवानामु कतमः शम्भविष्ठः ।
रथं कमाहुर्द्रवदश्वमाशुं यं सूर्यस्य दुहितावृणीत ॥ (४–४३–२)
मक्षू हि ष्मा गच्छथ ईवतो द्यूनिन्द्रो न शक्तिं परितक्म्यायाम् ।
दिव आजाता दिव्या सुपर्णा कया शचीनां भवथः शचिष्ठा ॥ (४–४३–३)
का वां भूदुपमातिः कया न आश्विना गमथो हूयमाना ।
को वां महश्चित् त्यजसो अभीक उरुष्यतं माध्वी दस्रा न ऊती ॥ (४–४३–४)
उरु वां रथः परि नक्षति द्यामा यत्समुद्रादभि वर्तते वाम् ।
मध्वा माध्वी मधु वां प्रुषायन्यत्सीं वां पृक्षो भुरजन्त पक्वाः ॥ (४–४३–५)
सिन्धुर्ह वां रसया सिञ्चदश्वान् घृणा वयोऽरुषासः परि ग्मन् ।
तदू षु वामजिरं चेति यान्येन पती भवथः सूर्यायाः ॥ (४–४३–६)
इहेह यद्वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।
उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥ (४–४३–७)
तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना सङ्गतिं गोः ।
यः सूर्यां वहति वन्धुरायुर् गिर्वाहसं पुरुतमं वसूयुम् ॥ (४–४४–१)
युवं श्रियमश्विना देवता तां दिवो नपाता वनथः शचीभिः ।
युवोर्वपुरभि पृक्षः सचन्ते वहन्ति यत्ककुहासो रथे वाम् ॥ (४–४४–२)
को वामद्या करते रातहव्य ऊतये वा सुतपेयाय वार्कैः ।
ऋतस्य वा वनुषे पूर्व्याय नमो येमानो अश्विना ववर्तत् ॥ (४–४४–३)
हिरण्ययेन पुरुभू रथेनेमं यज्ञं नासत्योप यातम् ।

पिबाथ इन्मधुनः सोम्यस्य दधथो रत्नं विधते जनाय ॥ (४–४४–४)
आ नो यातं दिवो अच्छा पृथिव्या हिरण्ययेन सुवृता रथेन ।
मा वामन्ये नि यमन्देवयन्तः सं यद्ददे नाभिः पूर्व्या वाम् ॥ (४–४४–५)
नू नो रयिं पुरुवीर्ंबृहन्तं दस्रा मिमाथामुभयेष्वस्मे ।
नरो यद्वामश्विना स्तोममावन्सधस्तुतिमाजमीळ्हासो अग्मन् ॥ (४–४४–६)
इहेह यद्वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।
उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥ (४–४४–७)
स्तुषे नरा दिवो अस्य प्रसन्ताश्विना हुवे जरमाणो अर्कैः ।
या सद्य उस्रा व्युषि ज्मो अन्तान्युयूषतः पर्युरू वरांसि ॥ (६–६२–१)
ता यज्ञमा शुचिभिश्चक्रमाणा रथस्य भानुं रुरुचू रजोभिः ।
पुरू वरांस्यमिता मिमानापो धन्वान्यति याथो अज्रान् ॥ (६–६२–२)
ता ह त्यद्वर्तिर्यदरध्रमुग्रेत्था धिय ऊहथुः शश्वदश्वैः ।
मनोजवेभिरिषिरैः शयध्यै परि व्यथिर्दाशुषो मर्त्यस्य ॥ (६–६२–३)
ता नव्यसो जरमाणस्य मन्मोप भूषतो युयुजानसप्ती ।
शुभं पृक्षमिषमूर्जं वहन्ता होता यक्षत्प्रत्नो अध्रुग्युवाना ॥ (६–६२–४)
ता वल्गू दस्रा पुरुशाकतमा प्रत्ना नव्यसा वचसा विवासे ।
या शंसते स्तुवते शम्भविष्ठा बभूवतुर्गृणते चित्रराती ॥ (६–६२–५)
ता भुज्युं विभिरद्भ्यः समुद्रात्तुग्रस्य सूनुमूहथू रजोभिः ।
अरेणुभिर्योजनेभिर्भुजन्ता पतत्रिभिरर्णसो निरुपस्थात् ॥ (६–६२–६)
वि जयुषा रथ्या यातमद्रिं श्रुतं हवं वृषणा वध्रिमत्याः ।
दशस्यन्ता शयवे पिप्यथुर्गामिति च्यवाना सुमतिं भुरण्यू ॥ (६–६२–७)
यद्रोदसी प्रदिवो अस्ति भूमा हेळो देवानामुत मर्त्यत्रा ।
तदादित्या वसवो रुद्रियासो रक्षोयुजे तपुरघं दधात ॥ (६–६२–८)
य ईं राजानावृतुथा विदधद्रजसो मित्रो वरुणश्चिकेतत् ।
गम्भीराय रक्षसे हेतिमस्य द्रोघाय चिद्वचस आनवाय ॥ (६–६२–९)
अन्तरैश्चक्रैस्तनयाय वर्तिर्द्युमता यातं नृवता रथेन ।
सनुत्येन त्यजसा मर्त्यस्य वनुष्यतामपि शीर्षा ववृक्तम् ॥ (६–६२–१०)
आ परमाभिरुत मध्यमाभिर्नियुद्भिर्यातमवमाभिरर्वाक् ।
दृळ्हस्य चिद्गोमतो वि व्रजस्य दुरो वर्तं गृणते चित्रराती ॥ (६–६२–११)

क्व त्या वल्गू पुरुहूताद्य दूतो न स्तोमोऽविदन्नमस्वान् ।
आ यो अर्वाङ् नासत्या ववर्त प्रेष्ठा ह्यसथो अस्य मन्मन् ॥ (६-६३-१)
अरं मे गन्तं हवनायास्मै गृणाना यथा पिबाथो अन्धः ।
परि ह त्यद्वर्तिर्याथो रिषो न यत्परो नान्तरस्तुतुर्यात् ॥ (६-६३-२)
अकारि वामन्धसो वरीमन्न अस्तारि बर्हिः सुप्रायणतमम् ।
उत्तानहस्तो युवयुर्ववन्दा वां नक्षन्तो अद्रय आञ्जन् ॥ (६-६३-३)
ऊर्ध्वो वामग्निरध्वरेष्वस्थात्प्र रातिरेति जूर्णिनी घृताची ।
प्र होता गूर्तमना उराणोऽयुक्त यो नासत्या हवीमन् ॥ (६-६३-४)
अधि श्रिये दुहिता सूर्यस्य रथं तस्थौ पुरुभुजा शतोतिम् ।
प्र मायाभिर्मायिना भूतमत्र नरा नृतू जनिमन्यज्ञियानाम् ॥ (६-६३-५)
युवं श्रीभिर्दर्शताभिराभिः शुभे पुष्टिमूहथुः सूर्यायाः ।
प्र वां वयो वपुषेऽनु पप्तन्नक्षद्वाणी सुष्टुता धिष्ण्या वाम् ॥ (६-६३-६)
आ वां वयोऽश्वासो वहिष्ठा अभि प्रयो नासत्या वहन्तु ।
प्र वां रथो मनोजवा असर्जीषः पृक्ष इषिधो अनु पूर्वीः ॥ (६-६३-७)
पुरु हि वां पुरुभुजा देष्णं धेनुं न इषं पिन्वतमसक्राम् ।
स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन् ॥ (६-६३-८)
उत म ऋज्रे पुरयस्य रघ्वी सुमीळ्हे शतं पेरुके च पक्वा ।
शाण्डो दाद्धिरणिनः स्मद्दिष्टीन्दश वशासो अभिषाच ऋष्वान् ॥ (६-६३-९)
सं वां शता नासत्या सहस्राश्वानां पुरुपन्था गिरे दात् ।
भरद्वाजाय वीर नू गिरे दाद्धता रक्षांसि पुरुदंससा स्युः ॥ (६-६३-१०)
आ वां सुम्ने वरिमन्सूरिभिः ष्याम् ॥ (६-६३-११)
युवो रजांसि सुयमासो अश्वा रथो यद्वां पर्यर्णांसि दीयत् ।
हिरण्यया वां पवयः प्रुषायन्मध्वः पिबन्ता उषसः सचेथे ॥ (१-१८०-१)
युवमत्यस्याव नक्षथो यद्विपत्मनो नर्यस्य प्रयज्योः ।
स्वसा यद्वां विश्वगूर्ती भराति वाजाये॑ मधुपाविषे च ॥ (१-१८०-२)
युवं पय उस्रियायामधत्तं पक्वमामायामव पूर्व्यं गोः ।
अन्तर्यद्वनिनो वामृतप्सू ह्वारो न शुचिर्यजते हविष्मान् ॥ (१-१८०-३)
युवं ह घर्मं मधुमन्तमत्रयेऽपो न क्षोदोऽवृणीतमेषे ।
तद्वां नरावश्विना पश्व इष्टी रथ्येव चक्रा प्रति यन्ति मध्वः ॥ (१-१८०-४)

आ वां दानाय ववृतीय दस्रा गोरोहेण तौग्र्यो न जिव्रिः ।
अपः क्षोणी सचते माहिना वां जूर्णो वामक्षुरंहसो यजत्रा ॥ (१–१८०–५)
नि यद्युवेथे नियुतः सुदानू उप स्वधाभिः सृजथः पुरंधिम् ।
प्रेषद्वेषद्वातो न सूरिरा महे ददे सुव्रतो न वाजम् ॥ (१–१८०–६)
वयं चिद्धि वां जरितारः सत्या विपन्यामहे वि पणिर्हितावान् ।
अधा चिद्धि ष्माश्विनावनिन्द्या पाथो हि ष्मा वृषणावन्तिदेवम् ॥ (१–१८०–७)
युवां चिद्धि ष्माश्विनावनु द्यून्विरुद्रस्य प्रस्रवणस्य सातौ ।
अगस्त्यो नरां नृषु प्रशस्तः काराधुनीव चितयत्सहस्रैः ॥ (१–१८०–८)
प्र यद्वहेथे महिना रथस्य प्र स्यन्द्रा याथो मनुषो न होता ।
धत्तं सूरिभ्य उत वा स्वश्व्योासत्या रयिषाचः स्याम ॥ (१–१८०–९)
तं वां रथं वयमद्या हुवेम स्तोमैरश्विना सुविताय नव्यम् ।
अरिष्टनेमिं परि द्यामियानं विद्यामेषं वृजनुीरदानुम् ॥ (१–१८०–१०)
कदु प्रेष्टाविषां रयीणामध्वर्यन्ता यदुन्निनीथो अपाम् ।
अयं वां यज्ञो अकृत प्रशस्तिं वसुधिती अवितारा जनानाम् ॥ (१–१८१–१)
आ वामश्वासः शुचयः पयस्पा वातरंहसो दिव्यासो अत्याः ।
मनोजुवो वृषणो वीतपृष्ठा एह स्वराजो अश्विना वहन्तु ॥ (१–१८१–२)
आ वां रथोऽवनिर्न प्रवत्वान्सृप्रवन्धुरः सुविताय गम्याः ।
वृष्ण स्थातारा मनसो जवीयानहम्पूर्वो यजतो धिष्ण्या यः ॥ (१–१८१–३)
इहेह जाता समवावशीतामरेपसा तन्वा नामभिः स्वैः ।
जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे ॥ (१–१८१–४)
प्र वां निचेरुः ककुहो वशाँ अनु पिशङ्गरूपः सदनानि गम्याः ।
हरी अन्यस्य पीपयन्त वाजैर्मथ्रा रजांस्यश्विना वि घोषैः ॥ (१–१८१–५)
प्र वां शरद्वान्वृषभो न निष्षाट् पूर्वीरिषश्चरति मध्व इष्णन् ।
एवैरन्यस्य पीपयन्त वाजैर्वेषन्तीरूर्ध्वा नद्यो न आगुः ॥ (१–१८१–६)
असर्जि वां स्थविरा वेधसा गीर्बाळ्हे अश्विना त्रेधा क्षरन्ती ।
उपस्तुतावव‍तं नाधमान्यामन्न अयामञ् च्छृणुतं हवं मे ॥ (१–१८१–७)
उत स्या वां रुशतो वप्ससो गीस्त्रिबर्हिषि सदसि पिन्वते नॄन् ।
वृषा वां मेघो वृषणा पीपाय गोर्न सेके मनुषो दशस्यन् ॥ (१–१८१–८)
युवां पूषेवाश्विना पुरंधिरग्निमुषां न जरते हविष्मान् ।

हुवे यद्वां वरिवस्या गृणानो विद्यामेषं वृजनुं जीरदानुम् ॥ (१–१८१–९)
तं युञ्जाथां मनसो यो जवीयान्त्रिवन्धुरो वृषणा यस्त्रिचक्रः ।
येनोपयाथः सुकृतो दुरोणं त्रिधातुना पतथो विर्न पर्णैः ॥ (१–१८३–१)
सुवृद्रथो वर्तते यन्न अभि क्षां यत्तिष्ठथः क्रतुमन्तानु पृक्षे ।
वपुर्वपुष्या सचतामियं गीर्दिवो दुहित्रोषसा सचेथे ॥ (१–१८३–२)
आ तिष्ठतं सुवृतं यो रथो वामनु व्रतानि वर्तते हविष्मान् ।
येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च ॥ (१–१८३–३)
मा वां वृको मा वृकीरा दधर्षीन्मा परि वर्क्तमुत माति धक्तम् ।
अयं वां भागो निहित इयं गीर्दस्राविमे वां निधयो मधूनाम् ॥ (१–१८३–४)
युवां गोतमः पुरुमीळ्हो अत्रिर्दस्रा हवतेऽवसे हविष्मान् ।
दिशं न दिष्टामृजूयेव यन्ता मे हवं नासत्योप यातम् ॥ (१–१८३–५)
अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि ।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनुं जीरदानुम् ॥ (१–१८३–६)
ता वामद्य तावपरं हुवेमोच्छन्त्यामुषसि वह्निरुक्थैः ।
नासत्या कुह चित्सन्तावर्यो दिवो नपाता सुदास्तराय ॥ (१–१८४–१)
अस्मे ऊ षु वृषणा मादयेथामुत्पणीँर्हतमूर्म्या मदन्ता ।
श्रुतं मे अच्छोक्तिभिर्मतीनामेष्टा नरा निचेतारा च कर्णैः ॥ (१–१८४–२)
श्रिये पूषन्निषुकृतेव देवा नासत्या वहतुं सूर्यायाः ।
वच्यन्ते वां ककुहा अप्सु जाता युगा जूर्णेव वरुणस्य भूरेः ॥ (१–१८४–३)
अस्मे सा वां माध्वी रातिरस्तु स्तोमं हिनोतं मान्यस्य कारोः ।
अनु यद्वां श्रवस्या सुदानू सुवीर्याय चर्षणयो मदन्ति ॥ (१–१८४–४)
एष वां स्तोमो अश्विनावकारि मानेभिर्मघवाना सुवृक्ति ।
यातं वर्तिस्तनयाय त्मने चागस्त्ये नासत्या मदन्ता ॥ (१–१८४–५)
अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि ।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनुं जीरदानुम् ॥ (१–१८४–६)
प्रति वां रथं नृपती जरध्यै हविष्मता मनसा यज्ञियेन ।
यो वां दूतो न धिष्ण्यावजीगरच्छा सूनुर्न पितरा विवक्मि ॥ (७–६७–१)
अशोच्यग्निः समिधानो अस्मे उपो अदृश्रन्तमसश्चिदन्ताः ।
अचेति केतुरुषसः पुरस्ताच् छ्रिये दिवो दुहितुर्जायमानः ॥ (७–६७–२)

अभि वां नूनमश्विना सुहोता स्तोमैः सिषक्ति नासत्या विवक्वान् ।
पूर्वीभिर्यातं पथ्याभिरर्वाक् स्वर्विदा वसुमता रथेन ॥ (७–६७–३)
अवोर्वां नूनमश्विना युवाकुर् हुवे यद्वां सुते माध्वी वसूयुः ।
आ वां वहन्तु स्थविरासो अश्वाः पिबाथो अस्मे सुषुता मधूनि ॥ (७–६७–४)
प्राचीमु देवाश्विना धियं मेऽमृध्रां सातये कृतं वसूयुम् ।
विश्वा अविष्टं वाज आ पुरंधीस्ता नः शक्तं शचीपती शचीभिः ॥ (७–६७–५)
अविष्टं धीष्वश्विना न आसु प्रजावद्रेतो अह्रयेाो अस्तु ।
आ वां तोके तनये तूतुजानाः सुरत्नासो देववीतिं गमेम ॥ (७–६७–६)
एष स्य वां पूर्वगत्वेव सख्ये निधिर्हितो माध्वी रातो अस्मे ।
अहेळता मनसा यातमर्वागश्नन्ता हव्यं मानुषीषु विक्षु ॥ (७–६७–७)
एकस्मिन्योगे भुरणा समाने परि वां सप्त स्रवतो रथो गात् ।
न वायन्ति सुभ्वो देवयुक्ता ये वां धूर्षु तरणयो वहन्ति ॥ (७–६७–८)
असश्चता मघवद्भ्यो हि भूतं ये राया मघदेयुानन्ति ।
प्र ये बन्धुं सूनृताभिस्तिरन्ते गव्या पृञ्चन्तो अश्व्या मघानि ॥ (७–६७–९)
नू मे हवमा शृणुतं युवाना यासिष्टं वर्तिरश्विनाविरावत् ।
धत्तं रत्नानि जरतं च सूरीन्यूयं पात स्वस्तिभिः सदा नः ॥ (७–६७–१०)
आ वां रथो रोदसी बद्बधानो हिरण्ययो वृषभिर्यात्वश्वैः ।
घृतवर्तनिः पविभी रुचान इषां वोळ्हा नृपतिर्वाजिनीवान् ॥ (७–६९–१)
स पप्रथानो अभि पञ्च भूमा त्रिवन्धुरो मनसा यातु युक्तः ।
विशो येन गच्छथो देवयन्तीः कुत्रा चिद्याममश्विना दधाना ॥ (७–६९–२)
स्वश्वा यशसा यातमर्वाग् दस्रा निधिं मधुमन्तं पिबाथः ।
वि वां रथो वध्वा यादमानोऽन्तान् दिवो बाधते वर्तनिभ्याम् ॥ (७–६९–३)
युवोः श्रियं परि योषावृणीत सूरो दुहिता परितक्म्यायाम् ।
यद्देवयन्तमवथः शचीभिः परि घ्रंसमोमना वां वयो गात् ॥ (७–६९–४)
यो ह स्य वां रथिरा वस्त उस्रा रथो युजानः परियाति वर्तिः ।
तेन नः शं योरुषसो व्युष्टौ न्यश्विना वहतं यज्ञे अस्मिन् ॥ (७–६९–५)
नरा गौरेव विद्युतं तृषाणास्माकमद्य सवनोप यातम् ।
पुरुत्रा हि वां मतिभिर्हवन्ते मा वामन्ये नि यमन्देवयन्तः ॥ (७–६९–६)
युवं भुज्युमवविद्धं समुद्र उदूहथुरर्णसो अस्रिधानैः ।

पतत्रिभिरश्रमैरव्यथिभिर्दंसनाभिरश्विना पारयन्ता ॥ (७–६९–७)
नू मे हवमा शृणुतं युवाना यासिष्टं वर्तिरश्विनाविरावत् ।
धत्तं रत्नानि जरतं च सूरीन्यूयं पात स्वस्तिभिः सदा नः ॥ (७–६९–८)
आ विश्ववाराश्विना गतं नः प्र तत् स्थानमवाचि वां पृथिव्याम् ।
अश्वो न वाजी शुनपृष्ठो अस्थादा यत्सेदथुर्ध्रुवसे न योनिम् ॥ (७–७०–१)
सिषक्ति सा वां सुमतिश्चनिष्ठातापि घर्मो मनुषो दुरोणे ।
यो वां समुद्रान्सरितः पिपर्त्येतग्वा चिन्न सुयुजा युजानः ॥ (७–७०–२)
यानि स्थानान्यश्विना दधाथे दिवो यह्वीष्वोषधीषु विक्षु ।
नि पर्वतस्य मूर्धनि सदन्तेषं जनाय दाशुषे वहन्ता ॥ (७–७०–३)
चनिष्टं देवा ओषधीष्वप्सु यद्योग्या अश्नवैथे ऋषीणाम् ।
पुरूणि रत्ना दधतौ न्यस्मे अनु पूर्वाणि चख्यथुर्युगानि ॥ (७–७०–४)
शुश्रुवांसा चिदश्विना पुरूण्यभि ब्रह्माणि चक्षाथे ऋषीणाम् ।
प्रति प्र यातं वरमा जनायास्मे वामस्तु सुमतिश्चनिष्ठा ॥ (७–७०–५)
यो वां यज्ञो नासत्या हविष्मान्कृतब्रह्मा समर्यो भवाति ।
उप प्र यातं वरमा वसिष्ठमिमा ब्रह्माण्य् ऋच्यन्ते युवभ्याम् ॥ (७–७०–६)
इयं मनीषा इयमश्विना गीरिमां सुवृक्तिं वृषणा जुषेथाम् ।
इमा ब्रह्माणि युवयून्यग्मन्यूयं पात स्वस्तिभिः सदा नः ॥ (७–७०–७)
अप स्वसुरुषसो नग् जिहीते रिणक्ति कृष्णीररुषाय पन्थाम् ।
अश्वामघा गोमघा वां हुवेम दिवा नक्तं शरुमस्मद्युयोतम् ॥ (७–७१–१)
उपायातं दाशुषे मर्त्याय रथेन वाममश्विना वहन्ता ।
युयुतमस्मदनिराममीवां दिवा नक्तं माध्वी त्रासीथां नः ॥ (७–७१–२)
आ वां रथमवमस्यां व्युष्टौ सुम्नायवो वृषणो वर्तयन्तु ।
स्यूमगभस्तिमृतयुग्भिरश्वैराश्विना वसुमन्तं वहेथाम् ॥ (७–७१–३)
यो वां रथो नृपती अस्ति वोळ्हा त्रिवन्धुरो वसुमाँ उस्रयामा ।
आ न एना नासत्योप यातमभि यद्वां विश्वप्स्न्यो जिगाति ॥ (७–७१–४)
युवं च्यवानुारसोऽमुमुक्तं नि पेदव ऊहथुराशुमश्वम् ।
निरंहसस्तमस स्पर्तमत्रिं नि जाहुषं शिथिरे धातमन्तः ॥ (७–७१–५)
इयं मनीषा इयमश्विना गीरिमां सुवृक्तिं वृषणा जुषेथाम् ।
इमा ब्रह्माणि युवयून्यग्मन्यूयं पात स्वस्तिभिः सदा नः ॥ (७–७१–६)

आ गोमता नासत्या रथेनाश्वावता पुरुश्चन्द्रेण यातम् ।
अभि वां विश्वा नियुतः सचन्ते स्पार्हया श्रिया तन्वा शुभाना ॥ (७–७२–१)
आ नो देवेभिरुप यातमर्वाक्सजोषसा नासत्या रथेन ।
युवोर्हि नः सख्या पित्र्याणि समानो बन्धुरुत तस्य वित्तम् ॥ (७–७२–२)
उदु स्तोमासो अश्विनोरबुध्रञ्जामि ब्रह्माण्युषसश्च देवीः ।
आविवासन्रोदसी धिष्ण्येमे अच्छा विप्रो नासत्या विवक्ति ॥ (७–७२–३)
वि चेदुच्छन्त्यश्विना उषासः प्र वां ब्रह्माणि कारवो भरन्ते ।
ऊर्ध्वं भानुं सविता देवो अश्रेद्बृहदग्नयः समिधा जरन्ते ॥ (७–७२–४)
आ पश्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात् ।
आ विश्वतः पाञ्चजन्येन राया यूयं पात स्वस्तिभिः सदा नः ॥ (७–७२–५)
अतारिष्म तमसस्पारमस्य प्रति स्तोमं देवयन्तो दधानाः ।
पुरुदंसा पुरुतमा पुराजामर्त्या हवते अश्विना गो३ं
न्यु प्रियो मनुषः सादि होता नासत्या यो यजते वन्दते च ।
अश्नीतं मध्वो अश्विना उपाक आ वां वोचे विदथेषु प्रयस्वो३म्
अहेम यज्ञं पथामुराणा इमां सुवृक्तिं वृषणा जुषेथाम् ।
श्रुष्टीवेव प्रेषितो वामबोधि प्रति स्तोमैर्जरमाणो वसिष्ठो३म्
उप त्या वह्नी गमतो विशं नो रक्षोहणा संभृता वीळुपाणी ।
समन्धांस्यग्मग मत्सराणि मा नो मर्धिष्टमो गतं शिवेनो३म्
आ पश्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात् ।
आ विश्वतः पाञ्चजन्येन राया यूयं पात स्वस्तिभिः सदा नो३म् [७ ।७३ ।१–५] [२०७]
बार्हतम्
इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना । अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथो३ं
युवं चित्रं ददथुर्जनं नरा चोदेथां सूनृतावते ।
अर्वाग्रथं समनसा नि यच्छतं पिबतं सोम्यं मधो३म्
आ यातमुप भूषतं मध्वः पिबतमश्विना । दुग्धं पयो वृषणा जेन्यावसू मा नो मर्धिष्टमा गतो३म्
अश्वासो ये वामुप दाशुषो गृहं युवां दीयन्ति बिभ्रतः
मक्षूयुभिर्नरा हयेभिरश्विना देवा यातमस्मयो३म्
अधा ह यन्तो अश्विना पृक्षः सचन्त सूरयः । ता यंसतो मघवद्भ्यो ध्रुवं यशश्छर्दिरस्मभ्यं नासत्यो३ं
प्र ये ययुरवृकासो रथा इव नृपातारो जनानाम् ।

उत स्वेन शवसा शूशुवुर्नर उत क्षियन्ति सुक्षितो३म् [७ ।७४ ।१–६] [२१३]

अयं वां मधुमत्तमः सुतः सोम ऋतावृधा ।

तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ॥ (१–४७–१)

त्रिवन्धुरेण त्रिवृता सुपेशसा रथेना यातमश्विना ।

कण्वासो वां ब्रह्म कृण्वन्त्यध्वरे तेषां सु शृणुतं हवम् ॥ (१–४७–२)

अश्विना मधुमत्तमं पातं सोममृतावृधा ।

अथाद्य दस्रा वसु बिभ्रता रथे दाश्वांसमुप गच्छतम् ॥ (१–४७–३)

त्रिषधस्थे बर्हिषि विश्ववेदसा मध्वा यज्ञं मिमिक्षतम् ।

कण्वासो वां सुतसोमा अभिद्यवो युवां हवन्ते अश्विना ॥ (१–४७–४)

याभिः कण्वमभिष्टिभिः प्रावतं युवमश्विना ।

ताभिः ष्वस्माँ अवतखुभस्पती पातं सोममृतावृधा ॥ (१–४७–५)

सुदासे दस्रा वसु बिभ्रता रथे पृक्षो वहतमश्विना ।

रयिं समुद्रादुत वा दिवस्पर्यस्मे धत्तं पुरुस्पृहम् ॥ (१–४७–६)

यन्नासत्या परावति यद्वा स्थो अधि तुर्वशे ।

अतो रथेन सुवृता न आ गतं साकं सूर्यस्य रश्मिभिः ॥ (१–४७–७)

अर्वाञ्चा वां सप्तयोऽध्वरश्रियो वहन्तु सवनेदुप ।

इष्पृञ्चन्ता सुकृते सुदानव आ बर्हिः सीदतं नरा ॥ (१–४७–८)

तेन नासत्या गतं रथेन सूर्यत्वचा ।

येन शश्वदूहथुर्दाशुषे वसु मध्वः सोमस्य पीतये ॥ (१–४७–९)

उक्थेभिरर्वागवसे पुरूवसू अर्कैश्च नि ह्वयामहे ।

शश्वत्कण्वानां सदसि प्रिये हि कं सोमं पपथुरश्विना ॥ (१–४७–१०)

ओ त्यमह्व आ रथमद्या दंसिष्ठमूतये ।

यमश्विना सुहवा रुद्रवर्तनी आ सूर्यायै तस्थथुः ॥ (८–२२–१)

पूर्वायुषं सुहवं पुरुस्पृहं भुज्युं वाजेषु पूर्व्यम् ।

सचनावन्तं सुमतिभिः सोभरे विद्वेषसमनेहसम् ॥ (८–२२–२)

इह त्या पुरुभूतमा देवा नमोभिरश्विना ।

अर्वाचीना स्ववसे करामहे गन्तारा दाशुषो गृहम् ॥ (८–२२–३)

युवो रथस्य परि चक्रमीयत ईर्मान्यद्वामिषण्यति ।

अस्माँ अच्छा सुमतिर्वां शुभस्पती आ धेनुरिव धावतु ॥ (८–२२–४)

रथो यो वां त्रिवन्धुरो हिरण्याभीशुरश्विना ।
परि द्यावापृथिवी भूषति श्रुतस्तेन नासत्या गतम् ॥ (८–२२–५)
दशस्यन्ता मनवे पूर्व्यं दिवि यवं वृकेण कर्षथः ।
ता वामद्य सुमतिभिः शुभस्पती अश्विना प्र स्तुवीमहि ॥ (८–२२–६)
उप नो वाजिनीवसू यातमृतस्य पथिभिः ।
येभिस्तृक्षिं वृषणा त्रासदस्यवं महे क्षत्राय जिन्वथः ॥ (८–२२–७)
द्युम्नी वां स्तोमो अश्विना क्रिविर्न सेक आ गतम् ।
मध्वः सुतस्य स दिवि प्रियो नरा पातं गौराविवेरिणे ॥ (८–८७–१)
पिबतं घर्मं मधुमन्तमश्विना बर्हिः सीदतं नरा ।
ता मन्दसाना मनुषो दुरोण आ नि पातं वेदसा वयः ॥ (८–८७–२)
आ वां विश्वाभिरूतिभिः प्रियमेधा अहूषत ।
ता वर्तिर्यातमुप वृक्तबर्हिषो जुष्टं यज्ञं दिविष्टिषु ॥ (८–८७–३)
पिबतं सोमं मधुमन्तमश्विना बर्हिः सीदतं सुमत् ।
ता वावृधाना उप सुष्टुतिं दिवो गन्तं गौराविवेरिणम् ॥ (८–८७–४)
आ नूनं यातमश्विनाश्वेभिः प्रुषितप्सुभिः ।
दस्रा हिरण्यवर्तनी शुभस्पती पातं सोममृतावृधा ॥ (८–८७–५)
वयं हि वां हवामहे विपन्यवो विप्रासो वाजसातये ।
ता वल्गू दस्रा पुरुदंससा धियाश्विना श्रुष्ट्या गतम् ॥ (८–८७–६)
यत् स्थो दीर्घप्रसद्मनि यद्वादो रोचने दिवः ।
यद्वा समुद्रे अध्याकृते गृहेऽत आ यातमश्विना ॥ (८–१०–१)
यद्वा यज्ञं मनवे सम्मिमिक्षथुरेवेत्काण्वस्य बोधतम् ।
बृहस्पतिं विश्वान्देवाँ अहं हुव इन्द्राविष्णू अश्विनावाशुहेषसा ॥ (८–१०–२)
त्या न्वश्विना हुवे सुदंससा गृभे कृता ।
ययोरस्ति प्र णः सख्यं देवेष्वध्याप्यम् ॥ (८–१०–३)
ययोरधि प्र यज्ञा असूरे सन्ति सूरयः ।
ता यज्ञस्याध्वरस्य प्रचेतसा स्वधाभिर्या पिबतः सोम्यं मधु ॥ (८–१०–४)
यदद्याश्विनावपाग्यत्प्राक् स्थो वाजिनीवसू ।
यद्द्रुह्यव्यनवि तुर्वशे यदौ हुवे वामथ मा गतम् ॥ (८–१०–५)
यदन्तरिक्षे पतथः पुरुभुजा यद्वेमे रोदसी अनु ।

यद्वा स्वधाभिरधितिष्ठथो रथमत आ यातमश्विना ॥ (८–१०–६)

औष्णिहम्

अश्विना वर्तिरस्मदा गोमद् दस्रा हिरण्यवत् । अर्वाग्रथं समनसा नि यच्छतो३ं

यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः । आ न ऊर्जं वहतमश्विना युवो३म्

एह देवा मयोभुवा दस्रा हिरण्यवर्तनी । उषर्बुधो वहन्तु सोमपीतयो३म् [१ ।९२ ।१६–१८] [२१६]

अश्विनावेह गच्छतं नासत्या मा वि वेनतम् । हंसाविव पततमा सुताँ उप ॥ (५–७८–१)

अश्विना हरिणाविव गौराविवानु यवसम् । हंसाविव पततमा सुताँ उप ॥ (५–७८–२)

अश्विना वाजिनीवसू जुषेथां यज्ञमिष्टये । हंसाविव पततमा सुताँ उप ॥ (५–७८–३)

युवोरु षू रथं हुवे सधस्तुत्याय सूरिषु । अतूर्तदक्षा वृषणा वृषण्वसू ॥ (८–२६–१)

युवं वरो सुषाम्णे महे तने नासत्या । अवोभिर्याथो वृषणा वृषण्वसू ॥ (८–२६–२)

ता वामद्य हवामहे हव्येभिर्वाजिनीवसू । पूर्वीरिष इषयन्तावति क्षपः ॥ (८–२६–३)

आ वां वाहिष्ठो अश्विना रथो यातु श्रुतो नरा । उप स्तोमान्तुरस्य दर्शथः श्रिये ॥ (८–२६–४)

जुहुराणा चिदश्विना मन्येथां वृषण्वसू । युवं हि रुद्रा पर्षथो अति द्विषः ॥ (८–२६–५)

दस्रा हि विश्वमानुषङ् मक्षूभिः परिदीयथः । धियंजिन्वा मधुवर्णा शुभस्पती ॥ (८–२६–६)

उप नो यातमश्विना राया विश्वपुषा सह । मघवाना सुवीरावनपच्युता ॥ (८–२६–७)

आ मे अस्य प्रतीव्यमिन्द्रनासत्या गतम् । देवा देवेभिरद्य सचनस्तमा ॥ (८–२६–८)

वयं हि वां हवामह उक्षण्यन्तो व्यश्ववत् । सुमतिभिरुप विप्राविहा गतम् ॥ (८–२६–९)

अश्विना स्वृषे स्तुहि कुवित्ते श्रवतो हवम् । नेदीयसः कूळयातः पणीँरुत ॥ (८–२६–१०)

वैयश्वस्य श्रुतं नरोतो मे अस्य वेदथः । सजोषसा वरुणो मित्रो अर्यमा ॥ (८–२६–११)

युवादत्तस्य धिष्ण्या युवानीतस्य सूरिभिः । अहरहर्वृषण मह्यं शिक्षतम् ॥ (८–२६–१२)

यो वां यज्ञेभिरावृतोऽधिवस्त्रा वधूरिव । सपर्यन्ता शुभे चक्राते अश्विना ॥ (८–२६–१३)

यो वामुरुव्यचस्तमं चिकेतति नृपाय्यम् । वर्तिरश्विना परि यातमस्मयू ॥ (८–२६–१४)

अस्मभ्यं सु वृषण्वसू यातं वर्तिर्नृपाय्यम् । विषुद्रुहेव यज्ञमूहथुर् गिरा ॥ (८–२६–१५)

जागतम्

अबोध्यग्निर्ज्म उदेति सूर्यो व्यु१षाश्चन्द्रा मह्यावो अर्चिषा ।

आयुक्षातामश्विना यातवे रथं प्रासावीद् देवः सविता जगत् पृथो३ं

यद् युञ्जाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम् ।

अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहो३म्
अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः ।
त्रिवन्धुरो मघवा विष्वसौभगः शं न आ वक्षद् द्विपदे चतुष्पदो३म्
आ न ऊर्जं वहतमश्विना युवं मधुमत्या नः कशया मिमिक्षतम् ।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवो३ं
युवं ह गर्भं जगतीषु धत्थो युवं विश्वेषु भुवनेष्वन्तः ।
युवमग्निं च वृषणावपश्च वनस्पतीँरश्विनावैरयेथो३ं
युवं ह स्थो भिषजा भेषजेभिरथो ह स्थो रथ्या३ राथ्येभिः ।
अथो ह क्षत्रमधि धत्थ उग्रा यो वां हविष्मान् मनसा ददाशो३म् [१ ।१५७ ।१–६] [२२२]
एष स्य भानुरुदियर्ति युज्यते रथः परिज्मा दिवो अस्य सानवि ।
पृक्षासो अस्मिन् मिथुना अधि त्रयो दृतिस्तुरीयो मधुनो वि रप्शते ॥ (४–४५–१)
उद्वां पृक्षासो मधुमन्त ईरते रथा अश्वास उषसो व्युष्टिषु ।
अपोर्णुवन्तस्तम आ परीवृत्स्वर्ण शुक्रं तन्वन्त आ रजः ॥ (४–४५–२)
मध्वः पिबतं मधुपेभिरासभिरुत प्रियं मधुने युञ्जाथां रथम् ।
आ वर्तनिं मधुना जिन्वथस्पथो दृतिं वहेथे मधुमन्तमश्विना ॥ (४–४५–३)
हंसासो ये वां मधुमन्तो अस्रिधो हिरण्यपर्णा उहुव उषर्बुधः ।
उदप्रुतो मन्दिनो मन्दिनिस्पृशो मध्वो न मक्षः सवनानि गच्छथः ॥ (४–४५–४)
स्वध्वरासो मधुमन्तो अग्नय उस्रा जरन्ते प्रति वस्तोरश्विना ।
यन्निक्तहस्तस्तरणिर्विचक्षणः सोमं सुषाव मधुमन्तमद्रिभिः ॥ (४–४५–५)
आकेनिपासो अहभिर्दविध्वतः स्वर्ण शुक्रं तन्वन्त आ रजः ।
सूरश्चिदश्वान्युयुजान ईयते विश्वाँ अनु स्वधया चेतथस्पथः ॥ (४–४५–६)
प्र वामवोचमश्विना धियंधा रथः स्वश्वो अजरो यो अस्ति ।
येन सद्यः परि रजांसि याथो हविष्मन्तं तरणिं भोजमच्छ ॥ (४–४५–७)
आ वां रथं पुरुमायं मनोजुवं जीराश्वं यज्ञियुीवसे हुवे ।
सहस्रकेतुं वनिनं शतद्वसुं श्रुष्टीवानं वरिवोधामभि प्रयः ॥ (१–११९–१)
ऊर्ध्वा धीतिः प्रत्यस्य प्रयामन्यधायि शस्मन्समयन्त आ दिशः ।
स्वदामि घर्मं प्रति यन्त्यूतय आ वामूर्जानी रथमश्विनारुहत् ॥ (१–११९–२)
सं यन् मिथः पस्पृधानासो अग्मत शुभे मखा अमिता जायवो रणे ।
युवोरह प्रवणे चेकिते रथो यदश्विना वहथः सूरिमा वरम् ॥ (१–११९–३)

युवं भुज्युं भुरमाणं विभिर्गतस्वयुक्तिभिर्निवहन्ता पितृभ्य आ ।
यासिष्टं वर्तिर्वृषणा विजेन्यं दिवोदासाय महि चेति वामवः ॥ (१–११९–४)
युवोरश्विना वपुषे युवायुजं रथं वाणी येमतुरस्य शर्ध्यम् ।
आ वां पतित्वं सख्याय जग्मुषी योषावृणीत जेन्या युवां पती ॥ (१–११९–५)
युवं रेभं परिषूतेरुरुष्यथो हिमेन घर्मं परितप्तमत्रये ।
युवं शयोरवसं पिप्यथुर्गवि प्र दीर्घेण वन्दनस्तार्यायुषा ॥ (१–११९–६)
युवं वन्दन्निरृतं जरण्यया रथं न दस्रा करणा समिन्वथः ।
क्षेत्रादा विप्रं जनथो विपन्यया प्र वामत्र विधते दंसना भुवत् ॥ (१–११९–७)
अगच्छतं कृपमाणं परावति पितुः स्वस्य त्यजसा निबाधितम् ।
स्वर्वतीरित ऊतीर्युवोरह चित्रा अभीके अभवन्न अभिष्टयः ॥ (१–११९–८)
उत स्या वां मधुमन्मक्षिकारपन्मदे सोमस्यौशिजो हुवन्यति ।
युवं दधीचो मन आ विवासथोऽथा शिरः प्रति वामश्व्यं वदत् ॥ (१–११९–९)
युवं पेदवे पुरुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः ।
शर्यैरभिद्युं पृतनासु दुष्टरं चर्कृत्यमिन्द्रमिव चर्षणीसहम् ॥ (१–११९–१०)
अभूदिदं वयुनमो षु भूषता रथो वृषण्वान्मदता मनीषिणः ।
धियंजिन्वा धिष्ण्या विश्पलावसू दिवो नपाता सुकृते शुचिव्रता ॥ (१–१८२–१)
इन्द्रतमा हि धिष्ण्या मरुत्तमा दस्रा दंसिष्ठा रथ्या रथीतमा ।
पूर्णं रथं वहेथे मध्व आचितं तेन दाश्वांसमुप याथो अश्विना ॥ (१–१८२–२)
किमत्र दस्रा कृणुथः किमासाथे जनो यः कश्चिदहविर्महीयते ।
अति क्रमिष्टं जुरतं पणेरसुं ज्योतिर्विप्राय कृणुतं वचस्यवे ॥ (१–१८२–३)
जम्भयतमभितो रायतः शुनो हतं मृधो विदथुस्तान्यश्विना ।
वाचं वाचं जरितू रत्निनीं कृतमुभा शंसं नासत्यावतं मम ॥ (१–१८२–४)
युवमेतं चक्रथुः सिन्धुषु प्लवमात्मन्वन्तं पक्षिणं तौग्र्याय कम् ।
येन देवत्रा मनसा निरूहथुः सुपप्तनी पेतथुः क्षोदसो महः ॥ (१–१८२–५)
अवविद्धं तौग्र्यमप्स्वन्तरनारम्भणे तमसि प्रविद्धम् ।
चतस्रो नावो जठलस्य जुष्टा उदश्विभ्यामिषिताः पारयन्ति ॥ (१–१८२–६)
कः स्विद्वृक्षो निष्ठितो मध्ये अर्णसो यं तौग्र्यो नाधितः पर्यषस्वजत् ।
पर्णा मृगस्य पतरोरिवारभ उदश्विना ऊहथुः श्रोमताय कम् ॥ (१–१८२–७)
तद्वां नरा नासत्यावनु ष्याद्यद्वां मानास उचथमवोचन् ।

अस्मादद्य सदसः सोम्यादा विद्यामेषं वृजनुीरदानुम् ॥ (१–१८२–८)

यो वां परिज्मा सुवृदश्विना रथो दोषामुषासो हव्यो हविष्मता ।

शश्वत्तमासस्तमु वामिदं वयं पितुर्न नाम सुहवं हवामहे ॥ (१०–३९–१)

चोदयतं सूनृताः पिन्वतं धिय उत्पुरंधीरीरयतं तदुश्मसि ।

यशसं भागं कृणुतं नो अश्विना सोमं न चारुं मघवत्सु नस्कृतम् ॥ (१०–३९–२)

अमाजुरश्चिद्भवथो युवं भगोऽनाशोश्चिदवितारापमस्य चित् ।

अन्धस्य चिन्नासत्या कृशस्य चिद्युवामिदाहुर् भिषजा रुतस्य चित् ॥ (१०–३९–३)

युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः ।

निष्टौग्र्यमूहथुरद्भ्यस्परि विश्वेत्ता वां सवनेषु प्रवाच्या ॥ (१०–३९–४)

पुराणा वां वीर्या प्र ब्रवा जनेऽथो हासथुर् भिषजा मयोभुवा ।

ता वां नु नव्याववसे करामहेऽयंनासत्या श्रदरिर्यथा दधत् ॥ (१०–३९–५)

इयं वामह्वे शृणुतं मे अश्विना पुत्रायेव पितरा मह्यं शिक्षतम् ।

अनापिरज्ञा असजात्यामतिः पुरा तस्या अभिशस्तेरव स्पृतम् ॥ (१०–३९–६)

युवं रथेन विमदाय शुन्ध्युवं न्यूहथुः पुरुमित्रस्य योषणाम् ।

युवं हवं वध्रिमत्या अगच्छतं युवं सुषुतिं चक्रथुः पुरंधये ॥ (१०–३९–७)

युवं विप्रस्य जरणामुपेयुषः पुनः कलेरकृणुतं युवद्वयः ।

युवं वन्दनमृश्यदादुदूपथुर्युवं सद्यो विश्पलामेतवे कृथः ॥ (१०–३९–८)

युवं ह रेभं वृषणा गुहा हितमुदैरयतं ममृवांसमश्विना ।

युवमृबीसमुत तप्तमत्रय ओमन्वन्तं चक्रथुः सप्तवध्रये ॥ (१०–३९–९)

युवं श्वेतं पेदवेऽश्विनाश्वं नवभिर्वाजैर्नवती च वाजिनम् ।

चर्कृत्यं ददथुर्द्रावयत्सखं भगं न नृभ्यो हव्यं मयोभुवम् ॥ (१०–३९–१०)

न तं राजानावदिते कुतश्चन नांहो अश्नोति दुरितं नकिर्भयम् ।

यमश्विना सुहवा रुद्रवर्तनी पुरोरथं कृणुथः पत्न्या सह ॥ (१०–३९–११)

आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना ।

यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः ॥ (१०–३९–१२)

ता वर्तिर्यातं जयुषा वि पर्वतमपिन्वतं शयवे धेनुमश्विना ।

वृकस्य चिद्वर्तिकामन्तरास्याद्युवं शचीभिर्ग्रसिताममुञ्चतम् ॥ (१०–३९–१३)

एतं वां स्तोममश्विनावकर्मातक्षाम भृगवो न रथम् ।

न्यमृक्षाम योषणां न मर्ये नित्यं न सूनुं तनयं दधानाः ॥ (१०–३९–१४)

रथं यान्तं कुह को ह वां नरा प्रति द्युमन्तं सुविताय भूषति ।
प्रातर्यावाणं विभ्वं विशे विशे वस्तोर्वस्तोर्वहमानं धिया शमि ॥ (१०–४०–१)
कुह स्विद्दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः ।
को वां शयुत्रा विधवेव देवरं मर्यो योषा कृणुते सधस्थ आ ॥ (१०–४०–२)
प्रातर्जरेथे जरणेव कापया वस्तोर्वस्तोर्यजता गच्छथो गृहम् ।
कस्य ध्वस्रा भवथः कस्य वा नरा राजपुत्रेव सवनाव गच्छथः ॥ (१०–४०–३)
युवां मृगेव वारणा मृगण्यवो दोषा वस्तोर्हविषा नि ह्वयामहे ।
युवं होत्रामृतुथा जुह्वते नरेषं जनाय वहथः शुभस्पती ॥ (१०–४०–४)
युवां ह घोषा पर्यश्विना यती राज्ञ ऊचे दुहिता पृच्छे वां नरा ।
भूतं मे अह्न उत भूतमक्तवेऽश्वावते रथिने शक्तमर्वते ॥ (१०–४०–५)
युवं कवी ष्ठः पर्यश्विना रथं विशो न कुत्सो जरितुर्नशायथः ।
युवोर्ह मक्षा पर्यश्विना मध्वासा भरत निष्कृतं न योषणा ॥ (१०–४०–६)
युवं ह भुज्युं युवमश्विना वशं युवं शिञ्जारमुशनामुपारथुः ।
युवो ररावा परि सख्यमासते युवोरहमवसा सुम्नमा चके ॥ (१०–४०–७)
युवं ह कृशं युवमश्विना शयुं युवं विधन्तं विधवामुरुष्यथः ।
युवं सनिभ्य स्तनयन्तमश्विनाप व्रजमूर्णुथः सप्तास्यम् ॥ (१०–४०–८)
जनिष्ट योषा पतयत्कनीनको वि चारुहन्वीरुधो दंसना अनु ।
आस्मै रीयन्ते निवनेव सिन्धवोऽस्मा अह्ने भवति तत्पतित्वनम् ॥ (१०–४०–९)
जीवं रुदन्ति वि मयन्ते अध्वरे दीर्घामनु प्रसितिं दीधियुर्नरः ।
वामं पितृभ्यो य इदं समेरिरे मयः पतिभ्यो जनयः परिष्वजे ॥ (१०–४०–१०)
न तस्य विद्म तदु षु प्र वोचत युवा ह यद्युवत्याः क्षेति योनिषु ।
प्रियोस्रियस्य वृषभस्य रेतिनो गृहं गमेमाश्विना तदुश्मसि ॥ (१०–४०–११)
आ वामगन्सुमतिर्वाजिनीवसू न्यश्विना ह्रत्सु कामा अयंसत ।
अभूतं गोपा मिथुना शुभस्पती प्रिया अर्यम्णो दुर्याँ अशीमहि ॥ (१०–४०–१२)
ता मन्दसाना मनुषो दुरोण आ धत्तं रयिं सहवीरं वचस्यवे ।
कृतं तीर्थं सुप्रपाणं शुभस्पती स्थाणुं पथेष्ठामप दुर्मतिं हतम् ॥ (१०–४०–१३)
क्व स्विदद्य कतमास्वश्विना विक्षु दस्रा मादयेते शुभस्पती ।
क ईं नि येमे कतमस्य जग्मतुर्विप्रस्य वा यजमानस्य वा गृहम् ॥ (१०–४०–१४)
समानमु त्यं पुरुहूतमुक्थ्यं रथं त्रिचक्रं सवना गनिग्मतम् ।

परिज्मानं विदथ्यं सुवृक्तिभिर्वयं व्युष्टा उषसो हवामहे ॥ (१०–४१–१)

प्रातर्युजं नासत्याधि तिष्ठथः प्रातर्यावाणं मधुवाहनं रथम् ।

विशो येन गच्छथो यज्वरीर्नरा कीरेश्चिद्यज्ञं होतृमन्तमश्विना ॥ (१०–४१–२)

अध्वर्युं वा मधुपाणिं सुहस्त्यमग्निधं वा धृतदक्षं दमूनसम् ।

विप्रस्य वा यत्सवनानि गच्छथोऽत आ यातं मधुपेयमश्विना ॥ (१०–४१–३)

त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना ।

युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः ॥ (१–३४–१)

त्रयः पवयो मधुवाहने रथे सोमस्य वेनामनु विश्व इद्विदुः ।

त्रय स्कम्भास स्कभितास आरभे त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा ॥ (१–३४–२)

समाने अहन्त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतम् ।

त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतम् ॥ (१–३४–३)

त्रिर्वर्तिर्यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतम् ।

त्रिर्नान्द्यं वहतमश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् ॥ (१–३४–४)

त्रिनी रयिं वहतमश्विना युवं त्रिर्देवताता त्रिरुतावतं धियः ।

त्रिः सौभगत्वं त्रिरुत श्रवांसि नस्त्रिष्ठं वां सूरे दुहिता रुहद्रथम् ॥ (१–३४–५)

त्रिनी अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु दत्तमद्भ्यः ।

ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्म वहत्खुभस्पती ॥ (१–३४–६)

त्रिनी अश्विना यजता दिवे दिवे परि त्रिधातु पृथिवीमशायतम् ।

तिस्रो नासत्या रथ्या परावत आत्मेव वातः स्वसराणि गच्छतम् ॥ (१–३४–७)

त्रिरश्विना सिन्धुभिः सप्तमातृभिस्त्रय आहावास्त्रेधा हविष्कृतम् ।

तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे द्युभिरक्तुभिर्हितम् ॥ (१–३४–८)

क्व त्री चक्रा त्रिवृतो रथस्य क्व त्रयो वन्धुरो ये सनीळाः ।

कदा योगो वाजिनो रासभस्य येन यज्ञं नासत्योपयाथः ॥ (१–३४–९)

आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं मधुपेभिरासभिः ।

युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवन्तमिष्यति ॥ (१–३४–१०)

आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।

प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥ (१–३४–११)

आ नो अश्विना त्रिवृता रथेनार्वाञ्चं रयिं वहतं सुवीरम् ।

७शृण्वन्ता वामवसे जोहवीमि वृधे च नो भवतं वाजसातौ ॥ (१–३४–१२)

ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये ।
याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतो३ं
युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे ।
याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विना गतो३ं
युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना ।
याभिर्धेनुमस्वं पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति ।
याभिस्त्रिमन्तुरभवद् विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतो३ं
याभी रेभं निवृतं सितमद्भ्य उद् वन्दनमैरयतं स्वर्दृशे ।
याभिः कण्वं प्र सिषासन्तमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिरन्तकं जसमानमारणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुः ।
याभिः कर्कन्धुं वय्यं च जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः शुचन्तिं धनसां सुषंसदं तप्तं घर्ममोम्यावन्तमत्रये ।
याभिः पृश्निगुं पुरुकुत्समावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथः ।
याभिर्वर्तिकां ग्रसिताममुञ्चतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतम् ।
याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिर्विश्पलां धनसामथर्व्यं सहस्रमीहळ्  आजावजिन्वतम् ।
याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत् ।
कक्षीवन्तं स्तोतारं याभिरावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे ।
याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतम् ।
याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम् ।
याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः ।

याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः ।
याभिः शारीराजतं स्यूमरश्मये ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना ।
याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिरङ्गिरो मनसा निरण्यतोऽग्रं गच्छतो विवरे गो अर्णसः ।
याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षितम् ।
याभिः सुदास ऊहथुः सुदेव्यं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः शन्ताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम् ।
ओम्यावतीं सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतम् ।
मधु प्रियं भरथो यत् सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः ।
याभी रथाँ अवथो याभिरर्वतस्ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम् ।
याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरू षु ऊतिभिरश्विना गतो३म्
अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् ।
अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातो३ं
द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यो३ं
पाङ्क्तम्
प्रति प्रियतमं रथं वृषणं वसुवाहनम् ।
स्तोता वामश्विनावृषिः स्तोमेन प्रति भूषति माध्वी मम श्रुतं हवो३म्
अत्यायातमश्विना तिरो विश्वा अहं सना ।
दस्रा हिरण्यवर्तनी सुषुम्ना सिन्धुवाहसा माध्वी मम श्रुतं हवो३म्
आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम् ।
रुद्रा हिरण्यवर्तनी जुषाणा वाजीनीवसू माध्वी मम श्रुतं हवो३ं
सुष्टुभो वां वृषण्वसू रथे वाणीच्याहिता ।

उत वां ककुहो मृगः पृक्षः कृणोति वापुषो माध्वी मम श्रुतं हवो३ं
बोधिन्मनसा रथ्येषिरा हवनश्रुता ।
विभिश्च्यवानमश्विना नि याथो अद्वयाविनं माध्वी मम श्रुतं हवो३म्
आ वाम् नरा मनोयुजोऽश्वासः प्रुषितप्सवः ।
वयो वहन्तु पीतये सह सुम्नेभिरश्विना माध्वी मम श्रुतं हवो३म्
अश्विनावेह गच्छतं नासत्या मा वि वेनतम् ।
तिरश्चिदर्यया परि वर्तिर्यातमदाभ्या माध्वी मम श्रुतं हवो३म्
अस्मिन् यज्ञे अदाभ्या जरितारं शुभस्पती ।
अवस्युमश्विना युवं गृणन्तमुप भूषथो माध्वी मम श्रुतं हवो३म्
अभूदुषा रुशत्पशुराग्निरधाय्यृत्वियः ।
अयोजि वां वृषण्वसू रथो दस्रावमर्त्यो माध्वी मम श्रुतं हवो३म् [५ ।७५ ।१–९]
सूर्यो नो दिवस्पातु वातो अन्तरिक्षात् । अग्निर्नः पार्थिवेभ्यो३ं
जोषा सवितर्यस्य ते हरः शतं सवाँ अर्हति । पाहि नो दिद्युतः पतन्त्यो३ं
चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः । चक्षुर्धाता दधातु नो३ं
चक्षुर्नो धेहि चक्षुषे चक्षुर्विख्यै तनूभ्यः । सं चेदं वि च पश्येमो३ं
सुसंदृशं त्वा वयं प्रति पश्येम सूर्य । वि पश्येम नृचक्षसो३म् (१०।१५८।१–५)
उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यो३म्
अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसो३म्
अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु । भ्राजन्तो अग्नयो यथो३ं
तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनो३म्
प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ् विश्वं स्वर्दृशो३ं
येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसो३ं
वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः । पश्यञ्जन्मानि सूर्यो३ं
सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षणो३म्
अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः । ताभिर्याति स्वयुक्तिभो३ं (१।५०।१–९)
चित्रं देवानामुदगादनीकम् । चक्षुर्मित्रस्य वरुणस्याग्नो३म्
आप्रा द्यावापृथिवी अन्तरिक्षम् । सूर्य आत्मा जगतस्तस्थुषश्चो३ं
सूर्यो देवीमुषसं रोचमानाम् । मर्यो न योषामभ्येति पश्चो३ं
यत्रा नरो देवयन्तो युगानि । वितन्वते प्रति भद्राय भद्रो३म्

भद्रा अश्वा हरितः सूर्यस्य । चित्रा एतग्वा अनुमाद्यासोॆ३ं
नमस्यन्तो दिव आ पृष्ठमस्थुः । परि द्यावापृथिवी यन्ति सद्योॆ३ं
तत्सूर्यस्य देवत्वं तन्महित्वम् । मध्या कर्तोर्विततं सं जभारोॆ३ं
यदेदयुक्त हरितः सधस्थात् । आद्रात्री वासस्तनुते सिमस्मोॆ३ं
तनमित्रस्य वरुणस्याभिचक्षे । सूर्यो रूपं कृणुते द्योरुपस्थोॆ३म्
अनन्तमन्यद् रुशदस्य पाजः । कृष्णमन्यद्धरितः सं भरन्तोॆ३म्
अद्या देवा उदिता सूर्यस्य । निरंहसः पिपृता निरवद्योॆ३ं
तन्नो मित्रो वरुणो मामहन्ताम् । अदितिः सिन्धुः पृथिवी उत द्योॆ३ं (१।११५।१–६)
नमो मित्रस्य वरुणस्य चक्षसे । महो देवाय तदृतं सपर्यतोॆ३ं
दूरेदृशे देवजाताय केतवे । दिवस्पुत्राय सूर्याय शंसतोॆ३ं
सा मा सत्योक्तिः परि पातु विश्वतः । द्यावा च यत्र ततनन्नहानि चोॆ३ं
विश्वमन्यन्नि विशते यदेजति । विश्वाहापो विश्वाहोदेति सूर्योॆ३ं
न ते अदेवः प्रदिवो नि वासते । यदेतशेभिः पतरै रथर्यसोॆ३म्
प्राचीनमन्यदनु वर्तते रजः । उदन्येन ज्योतिषा यासि सूर्योॆ३ं
येन सूर्य ज्योतिषा बाधसे तमः । जगच्च विश्वमुदियर्षि भानुनोॆ३ं
तेनास्मद्विश्वामनिरामनाहुतिम् । अपामीवामप दुष्वप्न्यं सुवोॆ३ं
विश्वस्य हि प्रेषितो रक्षसि व्रतम् । अहेळयन्नुच्चरसि स्वधा अनोॆ३ं
यदद्य त्वा सूर्योपब्रवामहै । तं नो देवा अनु मंसीरत क्रतोॆ३ं
तं नो द्यावापृथिवी तन्न आपः । इन्द्रः शृण्वन्तु मरुतो हवं वचोॆ३म्
मा शूने भूम सूर्यस्य संदृशि । भद्रं जीवन्तो जरणामशीमहोॆ३ं
विश्वाहा त्वा सुमनसः सुचक्षसः । प्रजावन्तो अनमीवा अनागसोॆ३म्
उद्यन्तं त्वा मित्रमहो दिवे दिवे । ज्योग्जीवाः प्रति पश्येम सूर्योॆ३म्
महि ज्योतिर्बिभ्रतं त्वा विचक्षण । भास्वन्तं चक्षुषे चक्षुषे मयोॆ३म्
आरोहन्तं बृहतः पाजसस्परि । वयं जीवाः प्रति पश्येम सूर्योॆ३ं
यस्य ते विश्वा भुवनानि केतुना । प्र चेरते नि च विशन्ते अक्तुभोॆ३म्
अनागास्त्वेन हरिकेश सूर्य । अह्नाह्ना नो वस्यसा वस्यसोदिहोॆ३ं
शं नो भव चक्षसा शं नो अह्ना । शं भानुना शं हिमा शं घृणेनोॆ३ं
यथा शमध्वञ्छमसद्दुरोणे । तत्सूर्य द्रविणं धेहि चित्रोॆ३म्
अस्माकं देवा उभयाय जन्मने । शर्म यच्छत द्विपदे चतुष्पदोॆ३म्

अदत्पिबदूर्जयमानमाशितम् । तदस्मे शं योररपो दधातनो३ं

यद्वो देवाश्चकृम जिह्वया गुरु । मनसो वा प्रयुती देवहेळनो३म्

अरावा यो नो अभि दुच्छुनायते । तस्मिन्तदेनो वसवो नि धेतनो३म् (१०।३७।१–१२)

इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।

शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहो३म्

मा नो अज्ञाता वृजना दुराध्यो माशिवासो अव क्रमुः ।

त्वया वयं प्रवतः शश्वतीरपोऽति शूर तरामसो३म् (७।३२।२६–२७)

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।

ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषो३ं

न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।

अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहो३म् (७।३२।२२–२३)

बहवः सूरचक्षसोऽग्निजिह्वा ऋतावृधः ।

त्रीणि ये येमुर्विदथानि धीतिभिर्विश्वानि परिभूतिभो३ं

वि ये दधुः शरदं मासमादहर्यज्ञमक्तुं चादृचम् ।

अनाप्यं वरुणो मित्रो अर्यमा क्षत्रं राजान आशतो३म् (७।६६।१०–११)

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभो३ं [१।२२।१३]

ते हि द्यावापृथिवी विश्वशम्भुवा । ऋतावरी रजसो धारयत्कवो३ं

सुजन्मनी धिषणे अन्तरीयते । देवो देवी धर्मणा सूर्यः शुचो३ं (१।१६०।१)

विश्वस्य देवी मृचयस्य जन्मनः । न या रोषाति न ग्रभो३ं (आ.श्रौ.६।५।१८)

शो३ंसावो३म् बृहस्पते अति यदर्यो अर्षद् । द्युमद्विभाति क्रतुमज्जनेषो३ं

यद्दीदयच्छवस ऋतप्रजात । तदस्मासु द्रविणं धेहि चित्रो३म् ॥ (२।२३।१५) इति त्रिः परिदध्यात् ।

उक्थं वाचि इति शस्त्वा जपेत् ।

अत्राश्विनग्रहान्ते तिरोअह्नसंज्ञकः पुरोडाशः ।

प्रशास्ता– इमे सोमासस्तिरो अह्न्यासस्तीव्रास्तिष्ठन्ति पीतये युवभ्याम् ।

हविष्मता नासत्या रथेनायातमुपभूषतं पिबध्यो३म् ॥ (आ.श्रौ.६।५।२४)

होता यक्षदश्विना सोमानां तिरो अह्न्यानां त्रिर्वर्तिर्यातं त्रिरिह मादयेथामुतो तुरीयं नासत्या वाजिनाय धेनुः सजूरग्नी रोहिदश्वो घृतस्नुः सजूरुषा अरुणीभिः सजूः सूर्य एतशेन सजोषावश्विना दंसोभिः करत एवाश्विना जुषेतां मदेतां वीतां पिबतां सोमं होतर्यज ॥

होता– ये३ यजामहे प्र वामन्धांसि मद्यान्यस्थुररं गन्तं हविषो वीतये मे ।

**तिरो अर्यो हवनानि श्रुतं नो** (७।६८।२) **भा पिबतमश्विनोभा नः शर्म यच्छतम् ।**

**अविद्रियाभिरूतिभी३ र्वौ३षट् ॥** (१।४६।१५)

यद्येतस्य पुरोडाशस्य स्विष्टकृता चरेयुस्तदा–

**पुरोळा अग्ने पचतस्तुभ्यं वा घा परिष्कृतः । तं जुषस्व यविष्ठ्यो३म् ॥** (३।२८।२)

**अग्ने वृधान आहुतिं पुरोळाशं जातवेदः । जुषस्व तिरोअह्न्या३ं वौ३षट् ॥** (३।२८।६) इति संयाज्ये । नात्रादेशः । ततो मृगतीर्थसर्पणमनूयाजादिकम् । सूक्तवाकप्रैषे–

**अग्निमद्य होयारमवृणीतायं सुन्वन् यजमानः पचन् पक्तीः पचन् पुरोळाशान् गृह्णन्नग्नय आज्यं गृह्णन्त्सोमायाज्यं बध्नन्नग्नय इन्द्राग्नोभ्यां छागौ बध्नन्निन्द्राय सरस्वत्यै मेषौ सुन्वन्निन्द्राय सोमं भृञ्जन् हरिभ्यां धानाः सूपस्था अद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनाग्नय इन्द्राग्निभ्यां छागाभ्यामिन्द्राय सरस्वत्यै मेषाभ्यामिन्द्राय सोमेन हरिभ्यां धानाभिरद्यतं मेदस्तः प्रतिपचताग्रभीषुरवीवृधन्त पुरोळाशैरपादिन्द्रः सोमं गवाशिरं यवाशिरं तीव्रान्तं बहुदमध्यमुपोत्थामदाश्रौद्विमदाँ आनळवीवृधतां गूषैस्त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं सुन्वन् यजमानो बहुभ्य आसङ्गतेभ्यः । एष मे देवेषु वसुवार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रू३हि ॥**

होता– **इदं द्यावापृथिवी** इत्यदि **अग्निरिदं..., सोम इदं..., अग्निरिदं..., इन्द्राग्नी इदं..., इन्द्र इदं..., सरस्वतीदं..., वनस्पतिरिदं..., इन्द्रो वसुमानिदं..., इन्द्रो रुद्रवानिदं..., इन्द्र आदित्यवानृभुमान् विभुमान् बृहस्पतिवान् विश्वदेव्यावानिदं..., देवा आज्यपा** इत्यादि । शंयुवाकादि यज्ञपुच्छं समानमान्तम् ।

सन्तिष्ठतेऽतिरात्रः ॥

## अप्तोर्यामः ।

प्रागाज्यशस्त्रादतिरात्रवत् ।

**अथाज्यशस्त्रम् ।**

**सुमत्पद्वग्दे पिता मातरिश्वाच्छिद्रापदाधादच्छिद्रोक्था कवयः शंसन् । सोमो विश्वविन्नीथा निनेषद् बृहस्पतिरुक्थामदानि शंसिषद् वागायुर्विश्वायुर्विश्वमायुः क इदं शंसिष्यति स इदं शंसिष्यति** इति जपित्वानभिहिंकृत्य शोंसावोमित्युच्चैराहूय तूष्णीं शंसं शंसेदुपांशु सप्रणवमसन्तन्वन् । **शो३ंसावो३ं भूरग्निर्ज्योतिर्ज्योतिरग्नो३म् । इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रो३म् । सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यो३म् ।** इति त्रिपदस्तूष्णीं शंसः । यद्यु वै षट्पदः पूर्वैर्ज्योतिःशब्दैरग्रेऽवस्येत् ।

**अग्निर्देवेद्धः । अग्निर्मन्विद्धः । अग्निः सुषमित् । होता देववृतः । होता मनुवृतः । प्रणीर्यज्ञानाम् । रथीरध्वराणाम् । अतूर्तो होता । तूर्णिर्हव्यवाट् । आ देवो देवान् वक्षत् । यक्षदग्निर्देवो देवान् । सो अध्वरा करति जातवेदो३म्**

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् । दूरेदृशं गृहपतिमथर्यो३ं
तमग्निमस्ते वसवो न्यृण्वन्त्सुप्रतिचक्षमवसे कुतश्चित् । दक्षाय्यो यो दम आस नित्यो३म्
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ । त्वां शश्वन्त उप यन्ति वाजो३म्
प्र ते अग्नयोऽग्निभ्यो वरं निः सुवीरासः शोशुचन्त द्युमन्तः । यत्रा नरः समासते सुजातो३ं
दा नो अग्ने धिया रयिं सुवीरं स्वपत्यं सहस्य प्रशस्तम् । न यं यावा तरति यातुमावो३म्
उप यमेति युवतिः सुदक्षं दोषा वस्तोर्हविष्मती घृताची । उप स्वैनमरमतिर्वसूयो३ं
विश्वा अग्नेऽप दहारातीर्येभिस्तपोभिरदहो जरूथम् । प्र निस्वरं चातयस्वामीवो३म्
आ यस्ते अग्न इधते अनीकं वसिष्ठ शुक्र दीदिवः पावक । उतो न एभि स्तवथैरिह स्यो३ं
वि ये ते अग्ने भेजिरे अनीकं मर्ता नरः पित्र्यासः पुरुत्रा । उतो न एभिः सुमना इह स्यो३म्
इमे नरो वृत्रहत्येषु शूरा विश्वा अदेवीरभि सन्तु मायाः । ये मे धियं पनयन्त प्रशस्तो३म्
मा शूने अग्ने नि षदाम नृणां माशेषसोऽवीरता परि त्वा । प्रजावतीषु दुर्यासु दुर्यो३ं
यमश्वी नित्यमुपयाति यज्ञं प्रजावन्तं स्वपत्यं क्षयं नः । स्वजन्मना शेषसा वावृधानो३म्
पाहि नो अग्ने रक्षसो अजुष्टात्पाहि धूर्तेरररुषो अघायोः । त्वा युजा पृतनायूँरभि ष्यो३म्
सेदग्निरग्नीँरत्यस्त्वन्यान् यत्र वाजी तनयो वीळुपाणिः । सहस्रपाथा अक्षरा समेतो३ं
सेदग्निर्यो वनुष्यतो निपाति समेद्धारमंहस उरुष्यात् । सुजातासः परि चरन्ति वीरो३म्
अयं सो अग्निराहुतः पुरुत्रा यमीशानः समिदिन्धे हविष्मान् । परि यमेत्यध्वरेषु होतो३ं
त्वे अग्न आहवनानि भूरीशानास आ जुहुयाम नित्या । उभा कृण्वन्तो वहतू मियेधो३म्
इमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ । प्रति न ईं सुरभीणि व्यन्तो३म्
मा नो अग्नेऽवीरते परा दा दुर्वाससेऽमतये मा नो अस्यै ।
मा नः क्षुधे मा रक्षस ऋतावो मा नो दमे मा वन आ जुहूर्थो३ं
नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।
रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नो३ं
त्वमग्ने सुहवो रण्वसंदृक् सुदीती सूनो सहसो दिदीहि ।
मा त्वे सचा तनये नित्य आ धङ् मा वीरो अस्मन्नर्यो वि दासो३म्
मा नो अग्ने दुर्भृतये सचैषु देवेद्धेष्वग्निषु प्र वोचः ।
मा ते अस्मान्दुर्मतयो भृमाच्चिद्देवस्य सूनो सहसो नशन्तो३ं
स मर्तो अग्ने स्वनीक रेवानमर्त्ये य आजुहोति हव्यम् ।
स देवता वसुवनिं दधाति यं सूरिरर्थी पृच्छमान एतो३म्
महो नो अग्ने सुवितस्य विद्वान् रयिं सूरिभ्य आ वहा बृहन्तम् ।

**येन वयं सहसावन् मदेमाविक्षितास आयुषा सुवीरो३ं**

**शो३ंसावो३ं नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।**

**रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नो३म्** ॥ (७।१।१–२५) इति त्रिः परिदधाति ।

**उक्थं वाचि घोषाय त्वा** इति शस्त्वा जपेत् ।

**ये३ यजामह अग्न इन्द्रश्च दाशुषो दुरोणे सुतावतो यज्ञमिहोपयातममर्धन्ता सोमपेयाय देवा३ वौ३षट्** ॥

[३ ।२५ ।४] **सोमस्याग्ने वीही३ वौ३षट्** ॥ द्विर्वागोजः । समो भक्षविधिः ।

प्राकृतं प्रउगम् । होत्रकाणां शस्त्राणि । तत्र च्छन्दोगा गर्भाकारं स्तुवन्ति चेत् तदा स्तोत्रियानुरूपावपि गर्भाकारेण शंस्तव्यम् । महावालभिदं चेच्छंसेदूर्ध्वमनुरूपेभ्य आरम्भणीयाभ्यो वा नाभाकांस्तृचानावपेरन् गायत्रीकारम् । तदभावे अनुरूपानन्तरं षडहस्तोत्रियादि समानम् ।

**अथ मैत्रावरुणशस्त्रम् ।**

प्रस्तोत्रा **एष** इति प्रोक्त उद्गातुर्हिङ्कारे **हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**

स्तोत्रियः–

**आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजांसि सुक्रतो३म्** (इति त्रिः)

**उरुशंसा नमोवृधा मह्ना दक्षस्य राजथः । द्राघिष्ठाभिः शुचिव्रतो३ं**

**गृणाना जमदग्निना योनावृतस्य सीदतम् । पातं सोममृतावृधो३ं** [३।६२।१६–१८]

**ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य । महि वां क्षत्रं देवेषो३म्**

**ऋतमृतेन सपन्तेषिरं दक्षमाशाते । अद्रुहा देवौ वर्धेतो३ं**

**वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः । बृहन्तं गर्तमाशातो३म्** [५।६८।३–६]

**आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजांसि सुक्रतो३म्**

**उरुशंसा नमोवृधा मह्ना दक्षस्य राजथः । द्राघिष्ठाभिः शुचिव्रतो३ं**

**गृणाना जमदग्निना योनावृतस्य सीदतम् । पातं सोममृतावृधो३ं** [३।६२।१६–१८]

अनुरूपः–

**शो३ंसावो३म् आ नो गन्तं रिशादसा वरुण मित्र बर्हणा । उपेमं चारुमध्वरो३ं**

**विश्वस्य हि प्रचेतसा वरुण मित्र राजथः । ईशाना पिप्यतं धियो३म्**

**उप नः सुतमा गतं वरुण मित्र दाशुषः । अस्य सोमस्य पीतायो३ं** [५।७१।१–३]

**ता नः स्तिपा तनूपा वरुण जरितृणाम् । मित्र साशयतं धियो३ं**

**यदद्य सूर उदितेऽनागा मित्रो अर्यमा । सुवाति सविता भगो३ं**

**सुप्रावीरस्तु स क्षयः प्र नु यमन्त्सुदानवः । ये नो अंहोति पिप्रतो३म्** [७।६६।३–६]

**आ नो गन्तं रिशादसा वरुण मित्र बर्हणा । उपेमं चारुमध्वरो३ं**

विश्वस्य हि प्रचेतसा वरुण मित्र राजथः । ईशाना पिप्यतं धियो३म्

उप नः सुतमा गतं वरुण मित्र दाशुषः । अस्य सोमस्य पीतायो३ं [५।७१।१–३]

नाभाकस्तृचो गायत्रीकारशस्यः–

शो३ंसावो३ं स क्षपः परि षस्वजे न्युस्रो मायया दधे । स विश्वं परि दर्शतो३ं

तस्य वेनीरनु व्रतमुषस्तिस्रो अवर्धयन् । नभन्तामन्यके समो३ं

यः ककुभो निधारयः पृथिव्यामधि दर्शतः । स माता पूर्व्यं पदो३ं

तद्वरुणस्य सप्त्यं स हि गोपा इवेर्यः । नभन्तामन्यके समो३ं

यो धर्ता भुवनानां य उस्राणामपीच्या । वेद नामानि गुह्यो३ं

स कविः काव्या पुरु रूपं द्यौरिव पुष्यति । नभन्तामन्यके समो३म् (८।४१।३–५)

[ यः ककुभो निधारयः पृथिव्यामधि दर्शतः । स माता पूर्व्यं पदो३ं

तद्वरुणस्य सप्त्यं स हि गोपा इवेर्यः । नभन्तामन्यके समो३ं

यो धर्ता भुवनानां य उस्राणामपीच्या । वेद नामानि गुह्यो३ं

स कविः काव्या पुरु रूपं द्यौरिव पुष्यति । नभन्तामन्यके समो३ं

यस्मिन्विश्वानि काव्या चक्रे नाभिरिव श्रिता । त्रितं जूती सपर्यतो३ं

व्रजे गावो न संयुजे युजे अश्वाँ अयुक्षत । नभन्तामन्यके समो३म् (८।४१।४–६) इति वा ]

षडहस्तोत्रियाः–

मित्रं वयं हवामहे वरुणं सोमपीतये । जज्ञाना पूतदक्षसो३म्

ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती । ता मित्रावरुणा हुवो३ं

वरुणः प्राविता भुवन् मित्रो विश्वाभिरूतिभिः । करतां नः सुराधसो३म् (१।२३।४–६)

मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीं साधन्तो३म्

ऋतेन मित्रावरुणावृतावृधावृतस्पृशा । क्रतुं बृहन्तमाशाथो३ं

कवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अपसो३म् (१।२।७–९)

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतं हवो३ं

राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे । सहस्रस्थूण आसातो३ं

ता सम्राजा घृतासुती आदित्या दानुनस्पती । सचेते अनवह्वरो३म् (२।४१।४–६)

पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण । मित्र वंसि वां सुमतो३ं

ता वां सम्यगद्रुह्वाणेषमश्याम धायसे । वयं ते रुद्रा स्यामो३म्

पातं नो रुद्रा पायुभिरुत त्रायेथां सुत्रात्रा । तुर्याम दस्यून्तनूभो३ं (५।७०।१–३)

काव्येभिरदाभ्या यातं वरुण द्युमत् । मित्रश्च सोमपीतयो३ं

**दिवो धामभिर्वरुण मित्रश्चा यातमद्रुहा । पिबतं सोममातुजो३म्**

**आ यातं मित्रावरुणा जुषाणावाहुतिं नरा । पातं सोममृतावृधो३म्** (७।६६।१७–१९)

**प्रति वां सूर उदिते मित्रं गृणीषे वरुणम् । अर्यमणं रिशादसो३ं**

**राया हिरण्यया मतिरियमवृकाय शवसे । इयं विप्रा मेधसातयो३ं**

**शो३ंसावो३ं ते स्याम देव वरुण ते मित्र सूरिभिः सह । इषं स्वश्च धीमहो३म्** [७।६६।१–९]

इति त्रिः परिदध्यात् । **उक्थं वाचि** इति शस्त्वा जपः ।

**ये३ यजामह आ यातं मित्रावरुणा जुषाणावाहुतिं नरा पातं सोममृतावृधा३ वौ३षट् ॥** [७।६६।१९]

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । चमसभक्षणम् ।

**अथ ब्राह्मणाच्छंसिशस्त्रम् ।**

प्रस्तोत्रा **एष** इति प्रोक्त उद्गातुर्हिङ्कारे **हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**

स्तोत्रियः–

**इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषतो३म्** इति त्रिः

**इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययो३म्**

**इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च । उग्र उग्राभिरूतिभो३ं** (१।७।१,२,४)

**युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवो३ं**

**युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसो३ं**

**केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथो३म्** (१।६।१–३)

**इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषतो३म्**

**इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययो३म्**

**इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च । उग्र उग्राभिरूतिभो३ं** (१।७।१,२,४)

अनुरूपः–

**शो३ंसावो३म् आ नो याहि सुतावतोऽस्माकं सुष्टुतीरुप । पिबा सु शिप्रिन्नन्धसो३म्**

**आ ते सिञ्चामि कुक्ष्योरनु गात्रा विधावतु । गृभाय जिह्वया मधो३ं**

**स्वादुष्टे अस्तु संसुदे मधुमान् तन्वे तव । सोमः शमस्तु ते हृदो३ं** [८।१७।४–६]

**आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः । वाजेभिरुप नो हवो३म्**

**अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् । यं ते पूर्वं पिता हुवो३ं**

**तं त्वा वयं विश्ववाराशास्महे पुरुहूत । सखे वसो जरितृभ्यो३म्** (१।३०।८–१०)

**आ नो याहि सुतावतोऽस्माकं सुष्टुतीरुप । पिबा सु शिप्रिन्नन्धसो३म्**

**आ ते सिञ्चामि कुक्ष्योरनु गात्रा विधावतु । गृभाय जिह्वया मधोइं**
**स्वादुष्टे अस्तु संसुदे मधुमान् तन्वे तव । सोमः शमस्तु ते हृदोइं** [८।१७।४–६]
नाभाकस्तृचो गायत्रीकारशस्यः–
**शोइंसावोइम् पूर्वीष्ट इन्द्रोपमातयः पूर्वीरुत प्रशस्तयः । सूनो हिन्वस्य हरिवोइं**
**वस्वो वीरस्यापृचो या नु साधन्त नो धियः । नभन्तामन्यके समोइं**
**तं शिशीता सुवृक्तिभिस्त्वेषं सत्वानमृग्मियम् । उतो नु चिद्य ओजसोइं**
**शुष्णस्याण्डानि भेदति जेषत्स्वर्वतीरपः । नभन्तामन्यके समोइं**
**तं शिशीता स्वध्वरं सत्यं सत्वानमृत्वियम् । उतो नु चिद्य ओहतोइम्**
**आण्डा शुष्णस्य भेदत्यजैः स्वर्वतीरपः । नभन्तामन्यके समोइम्** (८।४०।९–११)
षडहस्तोत्रियाः–
**आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो ममोइम्**
**आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना । उप ब्रह्माणि नः शृणोइं**
**ब्रह्माणस्त्वा वयं युजा सोमपामिन्द्र सोमिनः । सुतावन्तो हवामहोइम्** [८।१७।१–३]
**इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा । मन्दू समानवर्चसोइम्**
**आदह स्वधामनु पुनर्गर्भत्वमेरिरे । दधाना नाम यज्ञियोइं**
**वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः । अविन्द उस्रिया अनोइम्** (१।६।७,४,५)
**इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नवोइम्**
**इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् । तद्विदच्छर्यणावतोइम्**
**अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहोइम्** (१।८४।१३–१५)
**उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे अवेपयः । सोममिन्द्र चमू सुतोइम्**
**अनु त्वा रोदसी उभे क्रक्षमाणमकृपेताम् । इन्द्र यद्दस्युहाभवोइं**
**वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशम् । इन्द्रात्परि तन्वं ममोइम्** (८।७६।१०–१२)
**भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः । वसु स्पार्हं तदा भरोइं**
**यद्वीळाविन्द्र यत् स्थिरे यत्पर्शाने पराभृतम् । वसु स्पार्हं तदा भरोइं**
**यस्य ते विश्वमानुषो भूरेर्दत्तस्य वेदति । वसु स्पार्हं तदा भरोइम्** (८।४५।४०–४२)
**उद्वेदभि श्रुतामघं वृषभं नर्यापसम् । अस्तारमेषि सूर्योइं**
**नव यो नवतिं पुरो बिभेद बाह्वोजसा । अहिं च वृत्रहावधोइं**
**शोइंसावोइं स न इन्द्रः शिवः सखाश्वावद्गोमद्यवमत् । उरुधारेव दोहतोइम्** [८।९३।१–३]
इति त्रिः परिदध्यात् । **उक्थं वाचि** इति शस्त्वा जपः ।

**ये३ यजामह इन्द्र ऋतुविदं सुतं सोमं हर्य पुरुष्टुत पिबा वृषस्व तातृपी३ं वौ३षट् ॥** [३।४०।२]

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । चमसभक्षणम् ।

**अथाच्छावाकशस्त्रम् ।**

प्रस्तोत्रा **एष** इति प्रोक्त उद्गातुर्हिङ्कारे **हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**

स्तोत्रियः–

**इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषितो३म्** इति त्रिः

**इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः । अया पातमिमं सुतो३म्**

**इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे । ता सोमस्येह तृम्पतो३ं** [३।१२।१–३]

**तमीळिष्व यो अर्चिषा वना विश्वा परिष्वजत् । कृष्णा कृणोति जिह्वयो३ं**

**य इद्ध आविवासति सुम्नमिन्द्रस्य मर्त्यः । द्युम्नाय सुतरा अपो३ं**

**ता नो वाजवतीरिष आशून् पिपृतमर्वतः । इन्द्रमग्निं च वोह्ळवो३म्** (६।६०।१०–१२)

**इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषितो३म्**

**इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः । अया पातमिमं सुतो३म्**

**इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे । ता सोमस्येह तृम्पतो३ं** [३ ।१२ ।१–३]

अनुरूपः–

**शो३ंसावो३म् इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः । ऋतस्य पथ्या अनो३म्**

**इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च । युवोरप्तूर्यं हितो३म्**

**इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यो३ं** [३।१२।७–९]

**आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियम् । रसा दधीत वृषभो३म्**

**ते जानत स्वमोक्यं सं वत्सासो न मातृभिः । मिथो नसन्त जामिभो३म्**

**उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि । इन्द्रे अग्ना नमः स्वो३म्** (८।७२।१३–१५)

**इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः । ऋतस्य पथ्या अनो३म्**

**इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च । युवोरप्तूर्यं हितो३म्**

**इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यो३ं** [३।१२।७–९]

नाभाकस्तृचो गायत्रीकारशस्यः–

**ता हि मध्यं भराणामिन्द्राग्नी अधिक्षितः । ता उ कवित्वना कवो३म्**

**पृच्छयमाना सखीयते सं धीतमश्नुतं नरा । नभन्तामन्यके समो३म्**

**अभ्यर्च नभाकवदिन्द्राग्नी यजसा गिरा । ययोर्विश्वमिदं जगो३म्**

**इयं द्यौः पृथिवी मह्युपस्थे बिभृतो वसु । नभन्तामन्यके समो३म्**

**प्र ब्रह्माणि नभाकवदिन्द्राग्निभ्यामिरज्यत । या सप्तबुध्नमर्णवो३ं**

**जिह्मबारमपोर्णुत इन्द्र ईशान ओजसा । नभन्तामन्यके समो३म्** (८।४०।३–५)

षडहस्तोत्रियाः–

**इन्द्रे अग्ना नमो बृहत् सुवृक्तिमेरयामहे । धिया धेना अवस्यवो३ं**

**ता हि शश्वन्त ईळत इत्था विप्रास ऊतये । सबाधो वाजसातयो३ं**

**ता वां गीर्भिर्विपन्यवः प्रयस्वन्तो हवामहे । मेधसाता सनिष्यवो३म्**

**ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतम् । इन्द्राग्नी न मर्धतो३म्**

**उग्रा विघनिना मृध इन्द्राग्नी हवामहे । ता नो मृळात ईदृशो३ं**

**हतो वृत्राण्यार्या हतो दासानि सत्पती । हतो विश्वा अप द्विषो३म्** (६।६०।४–६)

**इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः । अभ्राद्वृष्टिरिवाजनो३ं**

**शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः । ईशाना पिप्यतं धियो३म्**

**मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये । मनो रीरधतं निदो३म्** [७।९४।१–३]

**इन्द्राग्नी युवामिमेऽभि स्तोमा अनूषत । पिबतं शम्भुवा सुतो३ं**

**या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा । इन्द्राग्नी ताभिरा गतो३ं**

**ताभिरा गच्छतं नरोपेदं सवनं सुतम् । इन्द्राग्नी सोमपीतयो३ं** (६।६०।७–९)

**यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्मसु । इन्द्राग्नी तस्य बोधतो३ं**

**तोशासा रथयावाना वृत्रहणापराजिता । इन्द्राग्नी तस्य बोधतो३म्**

**इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः । इन्द्राग्नी तस्य बोधतो३म्** (८।३८।१–३)

**इन्द्राग्नी अवसा गतमस्मभ्यं चर्षणीसहा । मा नो दुःशंस ईशतो३ं**

**मा कस्य नो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । इन्द्राग्नी शर्म यच्छतो३ं**

**शो३ंसावो३ं गोमद्धिरण्यवद्वसु यद्वामश्वावदीमहे । इन्द्राग्नी तद्वनेमहो३म्** [७।९४।७–९]

इति त्रिः परिदध्यात् । **उक्थं वाचि** इति शस्त्वा जपः ।

**ये३ यजामह इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यमस्य पातं धियेषिता३ वौ३षट् ॥** [३।१२।१]

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । चमसभक्षणम् ।

**अथ माध्यन्दिनं सवनम् ॥**

**मरुत्वतीयशस्त्रम् ।**

**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शो३ंसावो३म्**

स्तोत्रियानुरूपौ–

**आ त्वा रथं यथितये सुम्याय वर्तयामसि ।**

**तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पतो३ं** इति त्रिः

**तुविशुष्म तुविक्रतो शचीवो विश्वया मते । आ पप्राथ महित्वनो३ं**

**यस्य ते महिना महः परिज्मायन्तमीयतुः । हस्ता वज्रं हिरण्ययो३ं** [८।६८।१–३]

**शो३ंसावो३म् इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम् । अनाभयिन् ररिमा तो३ं**

**नृभिर्धूत्तः सुतो अश्नैरव्यो वारैः परिपूतः । अश्वो न निक्तो नदीषो३ं**

**तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणन्तः । इन्द्र त्वास्मिन् त्सदमादो३ं** [८।२।१–३]

इन्द्रनिहवः प्रगाथः–

**शो३ंसावो३म् इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।**

**आ शन्तम शन्तमाभिरभिष्टिभिरास्वापे स्वापिभो३म्**

**आ स्वापे स्वापिभिराजितुरं सत्पतिं विश्वचर्षणिम् । कृधि प्रजास्वाभगो३ं**

**कृधि प्रजास्वाभगं प्र सू तिरा शचीभिर्ये त उक्थिनः । क्रतुं पुनत आनुषो३ं** [८।५३।५–६]

ब्राह्मणस्पत्यः प्रगाथः, एषां सकृत्पृथग्वा आह्वानम्–

**शो३ंसावो३ं प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।**

**अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नो३ं**

**देवा यज्ञं नयन्तु नो यो वाघते ददाति सूनरं वसु । स धत्ते अक्षिति श्रवो३ं**

**स धत्ते अक्षिति श्रवस्तस्मा इळां सुवीरामा यजामहे । सुप्रतूर्तिमनेहसो३म्** (१।४०।३–४)

**शो३ंसावो३म् उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।**

**उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचो३म्**

**इन्द्र प्राशूर्भवा सचा त्वामिद्धि सहसस्पुत्र मर्त्यः । उपब्रूते धने हितो३म्**

**उपब्रूते धने हिते सुवीर्यं मरुत आ स्वश्व्यम् । दधीत यो व आचको३ं** (१–४०।१–२)

**शो३ंसावो३म् प्र नूनं ब्रह्मणस्पतिं मन्त्रं वदत्युक्थ्यम् ।**

**यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरो३ं**

**देवा ओकांसि चक्रिरे तमिद्वोचेमा विदथेषु शम्भुवम् । मन्त्रं देवा अनेहसो३ं**

**मन्त्रं देवा अनेहसमिमां च वाचं प्रतिहर्यथा नरः । विश्वेद् वामा वो अश्नवो३ं** [१।४०।५–६]

धाय्याः–

**शो३ंसावो३म् अग्निर्नेता भग इव क्षितीनाम् । दैवीनां देव ऋतुपा ऋतावो३ं**

**स वृत्रहा सनयो विश्ववेदाः । पर्षद्विश्वानि दुरिता गृणन्तो३ं** [३।२०।४]

शो३ंसावो३ं त्वं सोम क्रतुभिः सुक्रतूर्भूः । त्वं दक्षैः सुदक्षो विश्ववेदो३ं
त्वं वृषा वृषत्वेभिर्महित्वा । द्युम्नेभिर्द्युम्न्यभवो नृचक्षो३ं [१।९१।२]
शो३ंसावो३ं पिन्वन्त्यपो मरुतः सुदानवः । पयो घृतवद्विदथेष्वाभुवो३म्
अत्यं न मिहे विनयन्ति वाजिनम् । उत्सं दुहन्ति स्तनयन्तमक्षितो३ं [१।६४।६]
मरुत्वतीयः प्रगाथः, सकृत्पृथग्वाह्वानम्–
शो३ंसावो३ं प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत ।
वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणो३म्
अभि प्र भर धृषता धृषन्मनः श्रवश्चित्ते असद्बृहत् ।
अर्षन्त्वापो जवसा वि मातरो हनो वृत्रं जया स्वो३ं [८।८९।३–४]
शो३ंसावो३म् बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवो३म्
अपाधमदभिशस्तीरशस्तिहाथेन्द्रो द्युम्न्याभवत् ।
देवास्त इन्द्र सख्याय येमिरे बृहद्भानो मरुद्गणो३ं (८।८९।१–२)
शो३ंसावो३म् नकिः सुदासो रथं पर्यास न रीरमत् ।
इन्द्रो यस्याविता यस्य मरुतो गमत्स गोमति व्रजो३ं
गमद्वाजं वाजयन्निन्द्र मर्त्यो यस्य त्वमविता भुवः ।
अस्माकं बोध्यविता रथानामस्माकं शूर नृणो३ं (७।३२।१०–११)
शो३ंसावो३ं कया शुभा सवयसः सनीळाः । समान्या मरुतः सं मिमिक्षो३ं
कया मती कुत एतास एते । अर्चन्ति शुष्मं वृषणो वसूयो३ं
कस्य ब्रह्माणि जुजुषुर्युवानः । को अध्वरे मरुत आ ववर्तो३ं
श्येनाँ इव ध्रजतो अन्तरिक्षे । केन महा मनसा रीरमामो३ं
कुतस्त्वमिन्द्र माहिनः सन् । एको यासि सत्पते किं त इत्थो३ं
सं पृच्छसे समराणः शुभानैः । वोचेस्तन्नो हरिवो यत्ते अस्मो३म्
ब्रह्माणि मे मतयः शं सुतासः । शुष्म इयर्ति प्रभृतो मे अद्रो३म्
आ शासते प्रति हर्यन्त्युक्था । इमा हरी वहतस्ता नो अच्छो३म्
अतो वयमन्तमेभिर्युजानाः । स्वक्षत्रेभिस्तन्वः शुम्भमानो३म्
महोभिरेताँ उप युज्महे नु । इन्द्र स्वधामनु हि नो बभूथो३ं
क्व स्या वो मरुतः स्वधासीत् । यन्मामेकं समधत्ताहिहत्यो३म्
अहं ह्युग्रस्तविषस्तुविष्मान् । विश्वस्य शत्रोरनमं वधस्नो३म्

भूरि चकर्थ युज्येभिरस्मे । समानेभिर्वृषभ पौंस्येभो३म्

भूरीणि हि कृणवामा शविष्ठ । इन्द्र क्रत्वा मरुतो यद्वशामो३ं

वधीं वृत्रं मरुत इन्द्रियेण । स्वेन भामेन तविषो बभूवो३म्

अहमेता मनवे विश्वश्चन्द्राः । सुगा अपश्चकर वज्रबाहो३म्

अनुत्तमा ते मघवन्नकिर्नु । न त्वावाँ अस्ति देवता विदानो३ं

न जायमानो नशते न जातः । यानि करिष्या कृणुहि प्रवृद्धो३म्

एकस्य चिन्मे विभ्वस्त्वोजः । या नु दधृष्वान् कृणवै मनीषो३म्

अहं ह्युग्रो मरुतो विदानः । यानि च्यवमिन्द्र इदीश एषो३म्

अमन्दन्मा मरुत स्तोमो अत्र । यन्मे नरः श्रुत्यं ब्रह्म चक्रो३म्

इन्द्राय वृष्णे सुमखाय मह्यम् । सख्ये सखायस्तन्वे तनूभो३म्

एवदेते प्रति मा रोचमानाः । अनेद्यः श्रव एषो दधानो३ं

संचक्ष्या मरुतश्चन्द्रवर्णाः । अच्छान्त मे छदयाथा च नूनो३ं

को न्वत्र मरुतो मामहे वः । प्र यातन सखीँरच्छा सखायो३ं

मन्मानि चित्रा अपवातयन्तः । एषां भूत नवेदा म ऋतानो३म्

आ यद्दुवस्याद्दुवसे न कारुः । अस्माञ्चक्रे मान्यस्य मेधो३म्

ओ षु वर्त्त मरुतो विप्रमच्छा । इमा ब्रह्माणि जरिता वो अर्चो३म्

एष व स्तोमो मरुत इयं गीः । मान्दार्यस्य मान्यस्य कारो३म्

एषा यासीष्ट तन्वे वयाम् । विद्यामेषं वृजनं जीरदानो३ं (१।१६५।१–१५)

निविद्धानीयम्–

शो३ंसावो३ं जनिष्ठा उग्रः सहसे तुराय । मन्द्र ओजिष्ठो बहुलाभिमानो३म्

अवर्धन्निन्द्रं मरुतश्चिदत्र । माता यद्वीरं दधनद्धनिष्ठो३ं

द्रुहो निषत्ता पृशनी चिदेवैः । पुरूशंसेन वावृधुष्ट इन्द्रो३म्

अभीवृतेव ता महापदेन । ध्वान्तात् प्रपित्वादुदरन्त गर्भो३म्

ऋष्वा ते पादा प्र यज्जिगासि । अवर्धन् वाजा उत ये चिदन्नोप्३ं

त्वमिन्द्र सालावृकान् त्सहस्रम् । आसन् दधिषे अश्विना ववृत्यो३ं

समना तूर्णिरुप याहि यज्ञम् । आ नासत्या सख्याय वक्षो३ं

वसाव्यामिन्द्र धारयः सहस्रा । अश्विना शूर ददतुर्मघानो३ं

मन्दमान ऋतादधि प्रजायै । सखिभिरिन्द्र इषिरेभिरर्थो३म्

आभिर्हि माया उप दस्युमागात् । मिहः प्र तम्रा अवपत् तमांसो३ं

**सनामाना चिद्ध्वसयो न्यस्मै । अवाहन्निन्द्र उषसो यथा नो३म्**

**ऋष्वैरगच्छः सखिभिर्निकामैः । साकं प्रतिष्ठा हृद्या जघन्थो३ं**

**शो३ंसावो३म् इन्द्रो मरुत्वान् त्सोमस्य पिबतु । मरुत्स्तोत्रो मरुद्गणः । मरुत्सखा मरुद्वृधः । घ्नन् वृत्रा सृजदपः । मरुतामोजसा सह । य ईमेनं देवा अन्वमदन् । अप्तूर्ये वृत्रतूर्ये । शम्बरहत्ये गविष्टौ । अर्चन्तं गुह्या पदा । परमस्यां परावति । आर्दीं ब्रह्माणि वर्धयन् । अनाधृष्टान्योजसा । कृण्वन् देवेभ्यो दुवः । मरुद्भिः सखिभिः सह । इन्द्रो मरुत्वाँ इह श्रवदिह सोमस्य पिबतु । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमो३ं**

**त्वं जघन्थ नमुचिं मखस्युम् । दासं कृण्वान ऋषये विमायो३ं**

**त्वं चकर्थ मनवे स्योनान् । पयो देवत्राञ्जसेव यानो३ं**

**त्वमेतानि पप्रिषे वि नाम । ईशान इन्द्र दधिषे गभस्तो३म्**

**अनु त्वा देवाः शवसा मदन्ति । उपरिबुध्नान् वनिनश्चकर्थो३ं**

**चक्रं यदस्याप्स्वा निषत्तम् । उतो तदस्मै मध्विच्चच्छद्यो३ं**

**पृथिव्यामतिषितं यदूधः । पयो गोष्वदधा ओषधीषो३म्**

**अश्वादियायेति यद्वदन्ति । ओजसो जातमुत मन्य एनो३ं**

**मन्योरियाय हर्म्येषु तस्थौ । यतः प्र जज्ञ इन्द्रो अस्य वेदो३ं**

**शो३ंसावो३ं वयः सुपर्णा उप सेदुरिन्द्रम् । प्रियमेधा ऋषयो नाधमानो३म्**

**अप ध्वान्तमूर्णुहि पूर्धि चक्षुः । मुमुग्ध्यस्मान् निधयेव बद्धो३म्** [१० ।७३ ।१–११] इति अक्षिणी मृजानस्त्रिः परिदध्याद् ध्यायन्नेन आत्मनः । **उक्थं वाचीन्द्राय शृण्वते त्वा** इति शस्त्वा जपेत् ।

**ये३ यजामहे ये त्वाहिहत्ये मघवन्नवर्धन् ये शाम्बरे हरिवो ये गविष्टौ ।**

**ये त्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमं सगणो मरुद्भी३ वौँ३षट् ॥** [३।४७।४]

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । चमसभक्षणम् ॥

**अथ निष्केवल्यशस्त्रम् ।**

बृहद्वैराजबृहदित्येवं गर्भकारस्तोत्रम् एकविंशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शो३ंसावो३ं**

स्तोत्रियानुरूपौ–

**त्वामिद्धि हवामहे साता वाजस्य कारवः ।**

**त्वां वृत्रेषिन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतो३ं** इति त्रिः

**नरस्त्वां काष्ठास्वर्वतः स त्वं नश्चित्र वज्रहस्त धृष्णुया । महः स्तवानो अद्रिवो३ं**

महस्तवानो अद्रिवो गामश्वं रथ्यमिन्द्र सं किर । सत्रा वाजं न जिग्युषो३ं [६।४६।१–२]

पिबा सोममिन्द्र मन्दतु त्वा । यं तो३ओओओओओ३ओओओओओ३ओओओ सुषाव हर्यश्वाद्रिः ।

सोतुर्बाहुभ्यां सुयतो नार्वो३ं

यस्ते मदो युज्यश्चारुरस्ति । येनो३ओओओओओ३ओओओओओ३ओओओ वृत्राणि हर्यश्व हंसि ।

स त्वामिन्द्र प्रभूवसो ममत्तो३म्

बोधा सु मे मघवन्वाचमेमाम् । यां तो३ओओओओओ३ओओओओओ३ओओओ वसिष्ठो अर्चति प्रशस्तिम् । इमा ब्रह्म सधमादे जुषस्वो३ं (७।२२।१–३)

त्वामिद्धि हवामहे साता वाजस्य कारवः ।

त्वां वृत्रेषिन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतो३ं

नरस्त्वां काष्ठास्वर्वतः स त्वं नश्चित्र वज्रहस्त धृष्णुया । महः स्तवानो अद्रिवो३ं

महस्तवानो अद्रिवो गामश्वं रथ्यमिन्द्र सं किर । सत्रा वाजं न जिग्युषो३ं [६ ।४६ ।१–२]

शो३ंसावो३ं त्वं ह्येहि चेरवे विदा भगम् वसुत्तये ।

उद्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टयो३म्

उदिन्द्राश्वमिष्टये त्वं पुरू शहस्राणि शतानि च । यूथा दानाय मंहसो३ं

यूथा दानाय मंहस आ पुरन्दरं चकृम विप्रवचसः । इन्द्रं गायन्तोऽवसो३म् [८।६१।७–८]

श्रुधी हवं विपिपानस्याद्रेः । बोधो३ओओओओओ३ओओओओओ३ओओओ विप्रस्यार्चतो मनीषाम् ।

कृष्वा दुवांस्यन्तमा सचेमो३ं

न ते गिरो अपि मृष्ये तुरस्य । न सो३ओओओओओ३ओओओओओ३ओओओष्टुतिमसुर्यस्य विद्वान् ।

सदा ते नाम स्वयशो विवक्मो३म्

भूरि हि ते सवना मानुषेषु । भूरो३ओओओओओ३ओओओओओ३ओओओ मनीषी हवते त्वामित् ।

मारे अस्मन्मघवञ्ज्योक् को३ं (७।२२।४–६)

त्वं ह्येहि चेरवे विदा भगम् वसुत्तये ।

उद्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टयो३म्

उदिन्द्राश्वमिष्टये त्वं पुरू शहस्राणि शतानि च । यूथा दानाय मंहसो३ं

यूथा दानाय मंहस आ पुरन्दरं चकृम विप्रवचसः । इन्द्रं गायन्तोऽवसो३म् [८।६१।७–८]

धाय्या–

शो३ंसावो३ं यद्वावान पुरुतमं पुराषाट् । आ वृत्रहेन्द्रो नामान्यप्रो३म्

अचेति प्रासहस्पतिस्तुविष्मान् । यदीमु३मसि कर्तवे करत् तो३ं [१०।७४।६]

सामप्रगाथः सकृत्पृथग्वाह्वानम्–

शो३ंसावो३म् अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषो३ं
न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहो३म् [७।३२।२२–२३]
शो३ंसावो३म् उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः ।
सत्राच्या मघवा सोमपीतये धिया शविष्ठ आ गमो३ं
तं हि स्वराजं वृषभं तमोजसे धिषणे निष्टतक्षतुः ।
उतोपमानां प्रथमो निषीदसि सोमकामं हि ते मनो३म् । [८।६१।१–२]
शो३ंसावो३ं त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यतो३म्
अनु ते शुष्मं तुरयन्तमीयतुः क्षोणी शिशुं न मातरा ।
विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसो३ं (८।९९।५–६)
शो३ंसावो३ं तदिदास भुवनेषु ज्येष्ठम् । यतो जज्ञ उग्रस्त्वेषनृम्णो३ं
सद्यो जज्ञानो नि रिणाति शत्रून् । अनु यं विश्वे मदन्त्यूमो३ं
वावृधानः शवसा भूर्योजाः । शत्रुर्दासाय भियसं दधातो३म्
अव्यनच्च व्यनच्च सस्नि । सं ते नवन्त प्रभृता मदेषो३ं
त्वे क्रतुमपि वृञ्जन्ति विश्वे । द्विर्यदेते त्रिर्भवन्त्यूमो३ं
स्वादोः स्वादीयः स्वादुना सृजा सम् । अदः सु मधु मधुनाभि योधो३म्
इति चिद्धि त्वा धना जयन्तम् । मदे मदे अनुमदन्ति विप्रो३म्
ओजीयो धृष्णो स्थिरमा तनुष्व । मा त्वा दभन् यातुधाना दुरेवो३ं
त्वया वयं शाशद्महे रणेषु । प्रपश्यन्तो युधेन्यानि भूरो३ं
चोदयामि त आयुधा वचोभिः । सं ते शिशामि ब्रह्मणा वयांसो३ं
स्तुषेय्यं पुरुवर्पसमृभु । अमिनतममाप्त्यमाप्त्यानो३म्
आ दर्षते शवसा सप्त दानून् । प्र साक्षते प्रतिमानानि भूरो३ं
नि तद्दधिषेऽवरं परं च । यस्मिन्नाविथावसा दुरोणो३म्
आ मातरा स्थापयसे जिगत्नू । अत इनोषि कर्वरा पुरूणो३म्
इमा ब्रह्म बृहद्दिवो विवक्ति । इन्द्राय शूषमग्रियः स्वर्षो३म्
महो गोत्रस्य क्षयति स्वराजः । दुरश्च विश्वा अवृणोदप स्वो३म्
एवा महान् बृहद्दिवो अथर्वा । अवोचत्स्वां तन्वमिन्द्रमेवो३ं

स्वसारो मातरिभ्वरीररिप्राः । हिन्वन्ति च शवसा वर्धयन्ति चो३ं (१०।१२०।१–९)

शो३ंसावो३म् इन्द्रस्य नु वीर्याणि प्रवोचम् । यानि चकार प्रथमानि वज्रो३म्

अहन्नहिमन्वपस्ततर्द । प्र वक्षणा अभिनत् पर्वतानो३म्

अहन्नहिं पर्वते शिश्रियाणम् । त्वष्टास्मै वज्रं स्वर्यं ततक्षो३ं

वाश्रा इव धेनवः स्यन्दमानाः । अञ्जः समुद्रमव जग्मुरापो३ं

वृषायमाणोऽवृणीत सोमम् । त्रिकद्रुकेष्वपिबत् सुतस्यो३म्

आ सायकं मघवादत्त वज्रम् । अहन्नेनं प्रथमजामहीनो३ं

यदिन्द्राहन् प्रथमजा महीनाम् । आन्मायिनाममिनाः प्रोत मायो३म्

आत् सूर्यं जनयन् द्यामुषासम् । तादीत्ना शत्रुं न किला विवित्सो३म्

अहन् वृत्रं वृत्रतरं व्यंसम् । इन्द्रो वज्रेण महता वधेनो३ं

स्कन्धांसीव कुलिशेना विवृक्णा । अहिः शयत उपपृक् पृथिव्यो३म्

अयोद्धेव दुर्मद आ हि जुह्वे । महावीरं तुविबाधमृजीषो३ं

नातारीदस्य समृतिं वधानाम् । सं रुजानाः पिपिष इन्द्रशत्रो३म्

अपादहस्तो अपृतन्यदिन्द्रम् । आस्य वज्रमधि सानौ जघानो३ं

वृष्णो वध्रिः प्रतिमानं बुभूषन् । पुरुत्रा वृत्रो अशयद्व्यस्तो३ं

नदं न भिन्नममुया शयानम् । मनो रुहाणा अति यन्त्यापो३ं

याश्चिद्वृत्रो महिना पर्यतिष्ठत् । तासामहिः पत्सुतःशीर्बभूवो३ं

शो३ंसावो३म् इन्द्रो देवः सोमं पिबतु । एकजानां वीरतमः । भूरिजानां तवस्तमः । हर्योःस्थाता । पृश्नेः प्रेता । वज्रस्य भर्ता । पुरां भेत्ता । अपां स्रष्टा । अपां नेता । सत्वनां नेता । निजघ्निर्दूरेश्रवाः । उपमातिकृद्दंसनावान् । इहोशन् देवो बभूवान् । इन्द्रो देव इह श्रवदिह सोमस्य पिबतु । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमो३ं

नीचावया अभवद् वृत्रपुत्रा । इन्द्रो अस्या अव वधर्जभारो३म्

उत्तरा सूरधरः पुत्र आसीत् । दानुः शये सह वत्सा न धेनो३म्

अतिष्ठन्तीनामनिवेशनानाम् । काष्ठानां मध्ये निहितं शरीरो३ं

वृत्रस्य निण्यं विचरन्त्यापः । दीर्घं तम आशयदिन्द्रशत्रो३ं

दासपत्नीरहिगोपा अतिष्ठन् । निरुद्धा आपः पणिनेव गावो३म्

अपां बिलमपिहितं यदासीत् । वृत्रं जघन्वाँ अप तद्ववारो३म्

अश्व्यो वारो अभवस्तदिन्द्र । सृके यत् त्वा प्रत्यहन् देव एको३म्

अजयो गा अजयः शूर सोमम् । अवासृजः सर्तवे सप्त सिन्धो३ं

**नास्मै विद्युन्न तन्यतुः सिषेध । न यां मिहमकिरद्ध्रादुनिं चो३म्**

**इन्द्रश्च यद्युयुधाते अहिश्च । उतापरीभ्यो मघवा वि जिग्यो३म्**

**अहेर्यातारं कमपश्य इन्द्र । हृदि यत् तेजघ्नुषो भीरगच्छो३ं**

**नव च यन्नवतिं च स्रवन्तीः । श्येनो न भीतो अतरो रजांसो३ं**

**शो३ंसावो३म् इन्द्रो यातोऽवसितस्य राजा । शमस्य च शृङ्गिणो वज्रबाहो३ं**

**सेदु राजा क्षयति चर्षणीनाम् । अरान् न नेमिः परि ता बभूवो३म्** [३।३२।१–१५] इति त्रिः परिदध्यात् ।

**उक्थं वाचीन्द्रायोपशृण्वते त्वा** इति शस्त्वा जपेत् ।

**ये३ यजामहे पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ।**

**सोतुर्बाहुभ्यां सुयतो नार्वा३ वौ३षट् ॥** [७।२२।१]

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । चमसभक्षणम् ।

**मैत्रावरुणशस्त्रम् ।**

वामदेव्यशाक्वरगर्भकारस्तोत्रम् चतुर्विंशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शो३ंसावो३ं**

स्तोत्रियानुरूपौ–

**कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृतो३ं**

**कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृहळा चिदारुजे वसो३म्**

**अभी षु णः सखीनामविता जरितृणाम् । शतं भवास्यूतिभो३ं** (४।३१।१–३)

**विदा मघवन् विदा गातुमनु शंसिषो दिशः**

**शिक्षा शचीनां पते पूर्वीणां पुरूवस**

**आभिष्ट्वमभिष्टिभिः प्रचेतन प्रचेतय ।**

**इन्द्र द्युम्नाय न इष एवा हि शक्रो**

**राये वाजाय वज्रिवः शविष्ठ वज्रिन्नृञ्जसे**

**मंहिष्ठ वज्रिन्नृञ्जस आ याहि पिब मत्स्वो३ं**

**विदा राये सुवीर्यं भुवो वाजानां पतिर्वशाँ अनु**

**मंहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणां**

**यो मंहिष्ठो मघोनां चिकित्वाँ अभि नो नय ।**

**इन्द्रो विदे तमु स्तुषे वशी हि शक्रस्–**

**तमूतये हवामहे जेतारमपराजितं**

स नः पर्षदति द्विषः ऋतुश्छन्द ऋतं बृहो३म्
इन्द्रं धनस्य सातये हवामहे जेतारमपराजितं
स नः पर्षदति द्विषः स नः पर्षदति स्रिधः
पूर्वस्य यत्ते अद्रिवः सुम्न आधेहि नो वसो ।
पूर्तिः शविष्ठ शश्वत ईशे हि शक्रो
नूनं तं नव्यं मन्यसे प्रभो जनस्य वृत्रहन्
समन्येषु ब्रवावहै शूरो यो गोषु गच्छति सखा सुशेवो अद्वयो३म्
एवा ह्येवैवा ह्यग्ना३ इ । एवा ह्येवैवा हि विष्णा३ उ ।
एवा ह्येवैवा हीन्द्रा३ । एवा ह्येवैआ हि पूषा३न् । एवा ह्येवैवा हि देवा३ः ।
एवा हि शक्रो वशी हि शक्रो वशाँ अनु ।
आयो मन्याय मन्यव उपो मन्याय मन्यव उपेहि विश्वथ ।
विदा मघवन् विदो३ं [ऐ.आ.४]
कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृतो३ं
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृहळा चिदारुजे वसो३म्
अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभो३ं (४।३१।१–३)
शो३ंसावो३ं कया त्वं न ऊत्याभि प्र मन्दसे वृषन् । कया स्तोतृभ्य आ भरो३
कस्य वृषा सुते सचा नियुत्वान् वृषभो रणत् । वृत्रहा सोमपीतयो३म्
अभी षु णस्त्वं रयिं मन्दसानः सहस्रिणम् । प्रयन्ता बोधि दाशुषो३ं (८।९३।१९–२१)
स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यो
या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यं
ता अस्य पृशनायुवः सोमं श्रीणन्ति पृश्नयः ।
प्रिया इन्द्रस्य धेनवो वज्रं हिन्वन्ति सायकं वस्वीरनु स्वराज्यं
ता अस्य नमसा सहः सपर्यन्ति प्रचेतसो
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यो३म् (१।८४।१०–१२)
उप नो हरिभिः सुतं याहि मदानां पत उप नो हरिभिः सुतं
द्विता यो वृत्रहन्तमो विद इन्द्रः शतक्रतुः । उप नो हरिभिः सुतं
त्वं हि वृत्रहन्नेषां पाता सोमानामस्युप नो हरिभिः सुतो३म् (८।९३।३१–३३)
इन्द्रं विश्वा अवीवृधन्समुद्रव्यचसं गिरो रथीतमं रथीनां वाजानां सत्पतिं पतिं
सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते । त्वामभि प्र णोनुमो जेतारमपराजितो३म्

पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयो यदी वाजस्य गोमत स्तोतृभ्यो मंहते मघो३म् (१।११।१–३)

कया त्वं न ऊत्याभि प्र मन्दसे वृषन् । कया स्तोतृभ्य आ भरो३

कस्य वृषा सुते सचा नियुत्वान् वृषभो रणत् । वृत्रहा सोमपीतयो३म्

अभी षु णस्त्वं रयिं मन्दसानः सहस्रिणम् । प्रयन्ता बोधि दाशुषो३ं (८।९३।१९–२१)

ऐकाहिकः प्रगाथः–

शो३ंसावो३ं कस्तमिन्द्र त्वावसुमा मर्त्यो दधर्षति ।

श्रद्धा इत्ते मघवन् पार्ये दिवि वाजी वाजं सिषासतो३म्

मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु ।

तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरितो३म् (७।३२।१४–१५)

सामप्रगाथः–

मो षु त्वा वाघतश्चनारे अस्मन्निरीरमन् ।

आरात्ताच्चित्सधमादं न आ गहीह वा सन्नुप श्रुधो३म्

इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष आसते ।

इन्द्रे कामं जरितारो वसूयवो रथे न पादमा दधू

रायस्कामो वज्रहस्तं सुदक्षिणं पुत्रो न पितरं हुवो३ं (७।३२।१–३)

सामसूक्तम्–

शो३ंसावो३ं सत्रा मदासस्तव विश्वजन्याः । सत्रा रायोऽध ये पार्थिवासो३ं

सत्रा वाजानामभवो विभक्ता । यद्देवेषु धारयथा असुर्यो३म्

अनु प्र येजे जन ओजो अस्य । सत्रा दधिरे अनु वीर्यायो३ं

स्यूमगृभे दुधयेऽर्वते च । क्रतुं वृञ्जन्त्यपि वृत्रहत्यो३ं

तं सध्रीचीरूतयो वृष्ण्यानि । पौंस्यानि नियुतः सश्चुरिन्द्रो३ं

समुद्रं न सिन्धव उक्थशुष्माः । उरुव्यचसं गिर आ विशन्तो३ं

स रायस्खामुप सृजा गृणानः । पुरुश्चन्द्रस्य त्वमिन्द्र वस्वो३म्

पतिर्बभूथासमो जनानाम् । एको विश्वस्य भुवनस्य राजो३ं

स तु श्रुधि श्रुत्या यो दुवोयुः । द्यौर्न भूमाभि रायो अर्यो३म्

असो यथा नः शवसा चकानः । युगे युगे वयसा चेकितानो३म्

अहीनसूक्तम्–

आ सत्यो यातु मघवाँ ऋजीषी । द्रवन्त्वस्य हरय उप नो३ं

तस्मा इदन्धः सुषुमा सुदक्षम् । इहाभिपित्वं करते गृणानो३म्

अव स्य शूराध्वनो नान्ते । अस्मिन्नो अद्य सवने मन्दध्योꣳ
शंसात्युक्थमुशनेव वेधाः । चिकितुषे असुर्याय मन्मोꣳ
कविर्न निण्यं विदथानि साधन् । वृषा यत्सेकं विपिपानो अर्चोꣳ
दिव इत्था जीजनत्सप्त कारून् । अह्ना चिच्चक्रुर्वयुना गृणन्तोꣳ
स्वर्यद्वेदि सुदृशीकमर्कैः । महि ज्योती रुरुचुर्यद्ध वस्तो३म्
अन्धा तमांसि दुधिता विचक्षे । नृभ्यश्चकार नृतमो अभिष्टोꣳ
ववक्ष इन्द्रो अमितमृजीषी । उभे आ पप्रौ रोदसी महित्वो३म्
अतश्चिदस्य महिमा वि रेचि । अभि यो विश्वा भुवना बभूवोꣳ
विश्वानि शक्रो नर्याणि विद्वान् । अपो रिरेच सखिभिर्निकामो३म्
अश्मानं चिद्ये बिभिदुर्वचोभिः । व्रजं गोमन्तमुशिजो वि वव्रो३म्
अपो वृत्रं वव्रिवांसं पराहन् । प्रावत्ते वज्रं पृथिवी सचेतो३म्
प्रार्णांसि समुद्रियाण्यैनोः । पतिर्भवञ्छवसा शूर धृष्णो३म्
अपो यदद्रिं पुरुहूत दर्दः । आविर्भुवत्सरमा पूर्व्यं तोꣳ
स नो नेता वाजमा दर्षि भूरिम् । गोत्रा रुजन्नङ्गिरोभिर्गृणानो३म्
अच्छा कविं नृमणो गा अभिष्टौ । स्वर्षाता मघवन्नाधमानो३म्
ऊतिभिस्तमिषणो द्युम्नहूतौ । नि मायावानब्रह्मा दस्युरर्तो३म्
आ दस्युघ्ना मनसा याह्यस्तम् । भुवत्ते कुत्सः सख्ये निकामोꣳ
स्वे योनौ नि षदतं सरूपा । वि वां चिकित्सदृतचिद्ध नारोꣳ
यासि कुत्सेन सरथमवस्युः । तोदो वातस्य हर्योरीशानो३म्
ऋज्रा वाजं न गध्यं युयूषन् । कविर्यदहन् पार्याय भूषोꣳ
कुत्साय शुष्णमशुषं नि बर्हीः । प्रपित्वे अह्नः कुयवं सहस्रोꣳ
सद्यो दस्यून्प्र मृण कुत्स्येन । प्र सूरश्चक्रं वृहतादभीकोꣳ
त्वं पिप्रुं मृगयं शूशुवांसम् । ऋजिश्वने वैदथिनाय रन्धो३म्
पञ्चाशत्कृष्णा नि वपः सहस्रा । अत्कं न पुरो जरिमा वि दर्दोꣳ
सूर उपाके तन्वं दधानः । वि यत्ते चेत्यमृतस्य वर्पो३म्
मृगो न हस्ती तविषीमुषाणः । सिंहो न भीम आयुधानि बिभ्रो३म्
इन्द्रं कामा वसूयन्तो अग्मन् । स्वर्मीळ्हे न सवने चकानोꣳ
श्रवस्यवः शशमानास उक्थैः । ओको न रण्वा सुदृशीव पुष्टोꣳ
तमिद्व इन्द्रं सुहवं हुवेम । यस्ता चकार नर्या पुरूणोꣳ

यो मावते जरित्रे गध्यं चित् । मक्षू वाजं भरति स्पार्हराधो३ं
तिग्मा यदन्तरशनिः पताति । कस्मिञ्चिच्छूर मुहुके जनानो३ं
घोरा यदर्य समृतिर्भवाति । अध स्मा नस्तन्वो बोधि गोपो३म्
भुवोऽविता वामदेवस्य धीनाम् । भुवः सखावृको वाजसातो३ं
त्वामनु प्रमतिमा जगन्म । उरुशंसो जरित्रे विश्वध स्यो३म्
एभिर्नृभिरिन्द्र त्वायुभिष्ट्वा । मघवद्भिर्मघवन् विश्व आजो३ं
द्यावो न द्युम्नैरभि सन्तो अर्यः । क्षपो मदेम शरदश्च पूर्वो३म्
एवेदिन्द्राय वृषभाय वृष्णे । ब्रह्माकर्म भृगवो न रथो३ं
नू चिद्यथा नः सख्या वियोषत् । असन्न उग्रोऽविता तनूपो३ं
नू ष्टुत इन्द्र नू गृणानः । इषं जरित्रे नद्यो न पीपो३म्
अकारि ते हरिवो ब्रह्म नव्यं । धिया स्याम रथ्यः सदासो३म् (४।१६।१–२१)

ऐकाहिकसूक्तम्–

एवा त्वामिन्द्र वज्रिन्नत्र । विश्वे देवासः सुहवास ऊमो३ं
महामुभे रोदसी वृद्धमृष्वम् । निरेकमिद्वृणते वृत्रहत्यो३म्
अवासृजन्त जिव्रयो न देवाः । भुवः स्म्राळिन्द्र सत्ययोनो३म्
अहन्नहिं परिशयानमर्णः । प्र वर्तनीररदो विश्वधेनो३म्
अतृप्णुवन्तं वियतमबुध्यम् । अबुध्यमाणं सुषुपाणमिन्द्रो३ं
सप्त प्रति प्रवत आशयानम् । अहिं वज्रेण वि रिणा अपर्वो३म्
अक्षोदयच्छवसा क्षाम बुध्नम् । वार्ण वातस्तविषीभिरिन्द्रो३ं
दृह्ळान्यौभ्नादुशमान ओजः । अवाभिनत् ककुभः पर्वतानो३म्
अभि प्र दद्रुर्जनयो न गर्भम् । रथा इव प्र ययुः साकमद्रयो३म्
अतर्पयो विसृत उब्ज ऊर्मीन् । त्वं वृताँ अरिणा इन्द्र सिन्धो३ं
त्वं महीमवनिं विश्वधेनाम् । तुर्वीतये वय्याय क्षयन्तो३म्
अरमयो नमसैजदर्णः । सुतरणाँ अकृणोरिन्द्र सिन्धो३ं
प्राग्रुवो नभन्वो न वक्वाः । ध्वस्रा अपिन्वद् युवतीर्ऋतज्ञो३ं
धन्वान्यज्राँ अपृणक् तृषाणान् । अधोगिन्द्रः स्तर्यो दंसुपत्नो३ं
पूर्वीरुषसः शरदश्च गूर्ताः । वृत्रं जघन्वाँ असृजद्वि सिन्धो३ं
परिष्ठिता अतृणद्बद्बधानाः । सीरा इन्द्रः स्रवितवे पृथिव्यो३ं
वम्रीभिः पुत्रमग्रुवो अदानम् । निवेशनाद्धरिव आ जभर्थो३ं

**व्यन्थो अख्याहिमाददानः । निर्भूदुखच्छित् समरन्त पर्वो३ं**
**प्र ते पूर्वाणि करणानि विप्र । आविद्वाँ आह विदुषे करांसो३ं**
**यथायथा वृष्ण्यानि स्वगूर्ता । अपांसि राजन् नर्याविवेषो३ं**
**शो३ंसावो३ं नू ष्टुत इन्द्र नू गृणानः । इषं जरित्रे नद्यो न पीपो३म्**
**अकारि ते हरिवो ब्रह्म नव्यम् । धिया स्याम रथ्यः सदासो३म्** [४।१९।१–११] इति त्रिः परिदध्यात् ।
**उक्थं वाचीन्द्राय** इति शस्त्वा जपः ।
**ये३ यजामह उशन्नु षु णः सुमना उपाके सोमस्य नु सुषुतस्य स्वधावः ।**
**पा इन्द्रस्य प्रति भृतस्य मध्वः समन्धसा ममदः पृष्ठ्येना३ वौ३षट् ॥** [४।२०।४]
**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । चमसभक्षणम् ।

**ब्राह्मणाच्छंसिशस्त्रम् ।**
नौधसवैरूपपृष्ठे श्यैतवैरूपे वा पृष्ठे गर्भकारस्तोत्रम् चतुश्चत्वारिंशत्स्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–
**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शो३ंसावो३ं**
स्तोत्रियानुरूपौ–
**अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।**
**यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षतो३ं**
**सहस्रेणेव शिक्षति शतानीकेव प्र जिगाति धृष्णुया । हन्ति वृत्राणि दाशुषो३ं**
**हन्ति वृत्राणि दाशुषे गिरेरिव प्र रसा अस्य पिन्विरे । दत्राणि पुरुभोजसो३म्** (८।४९।१–२)
**यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।**
**न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसो३ं**
**न जातमष्ट रोदसी आ पप्राथ महिना वृष्ण्या वृषन् । विश्वा शविष्ठ शवसो३म्**
**विश्वा शविष्ठ शवसास्माँ अव मघवन् गोमति व्रजे । वज्रिञ्चित्राभिरूतिभो३म्** (८।७०।५–६)
**अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।**
**यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षतो३ं**
**सहस्रेणेव शिक्षति शतानीकेव प्र जिगाति धृष्णुया । हन्ति वृत्राणि दाशुषो३ं**
**हन्ति वृत्राणि दाशुषे गिरेरिव प्र रसा अस्य पिन्विरे । दत्राणि पुरुभोजसो३म्**
**शो३ंसावो३म् प्र सु श्रुतं सुराधसमर्चा शक्रमभिष्टये ।**
**यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहतो३ं**
**सहस्रेणेव मंहते शतानीका हेतयो अस्य दुष्टराः । इन्द्रस्य समिषो महो३म्**

इन्द्रस्य समिषो महीर्गिरिर्न भुज्मा मघवत्सु पिन्वते । यदीं सुता अमन्दिषो३ं (८।५०।१-२)

यदिन्द्र यावतस्त्वमेतावदहमीशीय ।

स्तोतारमिद्दिधिषेय रदावसो न पापत्वाय रासीयो३ं

न पापत्वाय रासीय शिक्षेयमिन्महयते दिवे दिवे । राय आ कुहचिद्विदो३ं

राय आ कुहचिद्विदे नहि त्वदन्यन्मघवन् न आप्यम् । वस्यो अस्ति पिता चनो३म् (७।३२।१८-१९)

प्र सु श्रुतं सुराधसमर्चा शक्रमभिष्टये ।

यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहतो३ं

सहस्रेणेव मंहते शतानीका हेतयो अस्य दुष्टराः । इन्द्रस्य समिषो महो३म्

इन्द्रस्य समिषो महीर्गिरिर्न भुज्मा मघवत्सु पिन्वते । यदीं सुता अमन्दिषो३ं (८।५०।१-२)

ऐकाहिकप्रगाथः-

शो३ंसावो३म् उदु त्ये मधुमत्तमा गिरः स्तोमास ईरते ।

सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इवो३ं

कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमानशुः ।

इन्द्रं स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरो३म् (८।३।१५-१६)

सामप्रगाथः-

इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तिमत् ।

च्छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यो३ं

ये गव्यता मनसा शत्रुमादभुरभिप्रघ्नन्ति धृष्णुया ।

अध स्मा नो मघवन्निन्द्र गिर्वणस्तनूपा अन्तमो भवो३ं (६।४६।९-१०)

सामसूक्तम्-

शो३ंसावो३ं यो जात एव प्रथमो मनस्वान् । देवो देवान् क्रतुना पर्यभूषो३ं

यस्य शुष्माद्रोदसी अभ्यसेताम् । नृम्णस्य मह्ना स जनास इन्द्रो३ं

यः पृथिवीं व्यथमानामदृंहत् । यः पर्वतान् प्रकुपिताँ अरम्णो३ं

यो अन्तरिक्षं विममे वरीयः । यो द्यामस्तभ्नात् स जनास इन्द्रो३ं

यो हत्वाहिमरिणात्सप्त सिन्धून् । यो गा उदाजदपधा वलस्यो३ं

यो अश्मनोरन्तरग्निं जजान । संवृक् समत्सु स जनास इन्द्रो३ं

येनेमा विश्वा च्यवना कृतानि । यो दासं वर्णमधरं गुहाको३ं

श्वघ्नीव यो जिगीवाँ लक्षमादत् । अर्यः पुष्टानि स जनास इन्द्रो३ं

यं स्मा पृच्छन्ति कुह सेति घोरम् । उतेमाहुर्नैषो अस्तीत्येनो३ं

सो अर्यः पुष्टीर्विज इवा मिनाति । श्रदस्मै धत्त स जनास इन्द्रो३ं
यो रध्रस्य चोदिता यः कृशस्य । यो ब्रह्मणो नाधमानस्य कीरो३ं
युक्तग्राव्णो योऽविता सुशिप्रः । सुतसोमस्य स जनास इन्द्रो३ं
यस्याश्वासः प्रदिशि यस्य गावः । यस्य ग्रामा यस्य विश्वे रथासो३ं
यः सूर्यं य उषसं जजान । यो अपां नेता स जनास इन्द्रो३ं
यं क्रन्दसी संयती विह्वयेते । परेऽवर उभया अमित्रो३ं
समानं चिद्रथमातस्थिवांसा । नाना हवेते स जनास इन्द्रो३ं
यस्मान्न ऋते विजयन्ते जनासः । यं युध्यमाना अवसे हवन्तो३ं
यो विश्वस्य प्रतिमानं बभूव । यो अच्युतच्युत् स जनास इन्द्रो३ं
यः शश्वतो मह्येनो दधानान् । अमन्यमानाञ्छर्वा जघानो३ं
यः शर्धते नानुददाति शृध्याम् । यो दस्योर्हन्ता स जनास इन्द्रो३ं
यः शम्बरं पर्वतेषु क्षियन्तम् । चत्वारिंश्यां शरद्यन्वविन्दो३म्
ओजायमानं यो अहिं जघान । दानुं शयानं स जनास इन्द्रो३ं
यः सप्तरश्मिर्वृषभस्तुविष्मान् । अवासृजत् सर्तवे सप्त सिन्धो३ं
यो रौहिणमस्फुरद् वज्रबाहुः । द्यामारोहन्तं स जनास इन्द्रो३ं
द्यावा चिदस्मै पृथिवी नमेते । शुष्माच्चिदस्य पर्वता भयन्तो३ं
यः सोमपा निचितो वज्रबाहुः । यो वज्रहस्तः स जनास इन्द्रो३ं
यः सुन्वन्तमवति यः पचन्तम् । यः शंसन्तं यः शशमानमूतो३ं
यस्य ब्रह्म वर्धनं यस्य सोमः । यस्येदं राधः स जनास इन्द्रो३ं
यः सुन्वते पचते दुध्र आ चित् । वाजं दर्दर्षि स किलासि सत्यो३ं
वयं त इन्द्र विश्वह प्रियासः । सुवीरासो विदथमा वदेमो३म् (२।१२।१–१५)

अहीनसूक्तम्–

अस्मा इदु प्र तवसे तुराय । प्रयो न हर्मि स्तोमं माहिनायो३म्
ऋचीषमायाध्रिगव ओहम् । इन्द्राय ब्रह्माणि राततमो३म्
अस्मा इदु प्रय इव प्र यंसि । भराम्याङ्गूषं बाधे सुवृक्तो३म्
इन्द्राय हृदा मनसा मनीषा । प्रत्नाय पत्ये धियो मर्जयन्तो३म्
अस्मा इदु त्यमुपमं स्वर्षाम् । भराम्याङ्गूषमास्येनो३म्
मंहिष्ठमच्छोक्तिभिर्मतीनाम् । सुवृक्तिभिः सूरिं वावृधध्यो३म्
अस्मा इदु स्तोमं सं हिनोमि । रथं न तष्टेव तत्सिनायो३ं

गिरश्च गिर्वाहसे सुवृक्ति । इन्द्राय विश्वमिन्वं मेधिरायो३म्
अस्मा इदु सप्तिमिव श्रवस्या । इन्द्रायार्कं जुह्वा समञ्जो३ं
वीरं दानौकसं वन्दध्यै । पुरां गूर्तश्रवसं दर्माणो३म्
अस्मा इदु त्वष्टा तक्षद्वज्रम् । स्वपस्तमं स्वर्यं रणायो३ं
वृत्रस्य चिद् विदद् येन मर्म । तुजन्नीशानस्तुजता कियेधो३म्
अस्येदु मातुः सवनेषु सद्यः । महः पितुं पपिवाञ्चार्वन्नो३म्
मुषायद्विष्णुः पचतं सहीयान् । विध्यद् वराहं तिरो अद्रिमस्तो३म्
अस्मा इदु ग्नाश्चिद् देवपत्नीः । इन्द्रायार्कमहिहत्य ऊवो३म्
परि द्यावापृथिवी जभ्र उर्वी । नास्य ते महिमान्परिष्टो३म्
अस्येदेव प्र रिरिचे महित्वम् । दिवस्पृथिव्याः पर्यन्तरिक्षो३ं
स्वराळिन्द्रो दम आ विश्वगूर्तः । स्वरिरमत्रो ववक्षे रणायो३म्
अस्येदेव शवसा शुषन्तम् । वि वृश्चद् वज्रेण वृत्रमिन्द्रो३ं
गा न व्राणा अवनीरमुञ्चत् । अभि श्रवो दावने सचेतो३म्
अस्येदु त्वेषसा रन्त सिन्धवः । परि यद्वज्रेण सीमयच्छो३म्
ईशानकृद् दाशुषे दशस्यन् । तुर्वीतये गाधं तुर्वणिः को३म्
अस्मा इदु प्र भरा तूतुजानः । वृत्राय वज्रमीशानः कियेधो३ं
गोर्न पर्व वि रदा तिरश्चा । इष्यन्नर्णांस्यपां चरध्यो३म्
अस्येदु प्र ब्रूहि पूर्व्याणि । तुरस्य कर्माणि नव्य उक्थो३ं
युधे यदिष्णान आयुधानि । ऋघायमाणो निरिणाति शत्रो३म्
अस्येदु भिया गिरयश्च दृळ्हा । द्यावा च भूमा जनुषस्तुजेतो३म्
उपो वेनस्य जोगुवान ओणिम् । सद्यो भुवद्वीर्याय नोधो३म्
अस्मा इदु त्यदनु दाय्येषाम् । एको यद् वव्ने भूरेरीशानो३म्
प्रैतशं सूर्ये पस्पृधानम् । सौवश्व्ये सुष्विमावदिन्द्रो३म्
एवा ते हारियोजना सुवृक्ति । इन्द्र ब्रह्माणि गोतमासो अक्रो३म्
ऐषु विश्वपेशसं धियं धाः । प्रातर्मक्षू धियावसुर्जगम्यो३म् (१–६१।१–१६)

ऐकाहिकसूक्तम्–

उदु ब्रह्माण्यैरत श्रवस्या । इन्द्रं समर्ये महया वसिष्ठो३म्
आ यो विश्वानि शवसा ततान । उपश्रोता म ईवतो वचांसो३म्
अयामि घोष इन्द्र देवजामिः । इरज्यन्त यच्छुरुधो विवोचो३ं

**न हि त्वमायुश्चिकिते जनेषु । तानीदंहांस्यति पर्ष्यस्मो३ं**

**युजे रथं गवेषणं हरिभ्याम् । उप ब्रह्माणि जुजुषाणमस्थो३ं**

**वि बाधिष्ट स्य रोदसी महित्वा । इन्द्रो वृत्राण्यप्रती जघन्वो३म्**

**आपश्चित् पिप्युः स्तर्यो न गावः । नक्षन्नृतं जरितारस्त इन्द्रो३ं**

**याहि वायुर्न नियुतो नो अच्छा । त्वं हि धीभिर्दयसे वि वाजो३ं**

**ते त्वा मद इन्द्र मादयन्तु । शुष्मिणं तुविराधसो जरित्रो३म्**

**एको देवत्रा दयसे हि मर्तान् । अस्मिञ्छूर सवने मादयस्वो३ं**

**शो३ंसावो३म् एवेदिन्द्रं वृषणं वज्रबाहुम् । वसिष्ठासो अभ्यर्चन्त्यर्को३ं**

**स नः स्तुतो वीरवद्धातु गोमत् । यूयं पात स्वस्तिभिः सदा नो३म्** ॥ [७ ।२३] इति त्रिः परिदध्यात् ।

**उक्थं वाचीन्द्राय** इति शस्त्वा जपः ।

**ये३ यजामह ऋजीषी वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा ।**

**युक्त्वा हरिभ्यामुप यासदर्वाङ् माध्यन्दिने सवने मत्सदिन्द्रा३ वौ३षट्** ॥ [५।४०।४]

**सोमस्याग्ने वीही३ वौ३षट्** ॥ द्विर्वागोजः । चमसभक्षणम् ।

**अच्छावाकशस्त्रम् ।**

कालेयरैवते पृष्ठे गर्भकारस्तोत्रम् अष्टाचत्वारिंशत्स्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शो३ंसावो३ं**

स्तोत्रियानुरूपौ–

**तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये ।**

**बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणो३ं** इति त्रिः

**हुवे भरं न कारिणं न यं दुध्रा वरन्ते न स्थिरा मुरः । मदे सुशिप्रमन्धसो३ं**

**मदे सुशिप्र मन्धसो य आदृत्या शशमानाय सुन्वते । दाता जरित्र उक्थ्यो३म्** [८।६६।१–२]

**रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेमो३म्**

**आ घ त्वावान् त्मनाप्तः स्तोतृभ्यो धृष्णवियानः । ऋणोरक्षं न चक्र्यो३म्**

**आ यद्दुवः शतक्रतवा कामं जरितॄणाम् । ऋणोरक्षं न शचीभो३ं** (१।३०।१३–१५)

**तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये ।**

**बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणो३ं**

**हुवे भरं न कारिणं न यं दुध्रा वरन्ते न स्थिरा मुरः । मदे सुशिप्रमन्धसो३ं**

**मदे सुशिप्र मन्धसो य आदृत्या शशमानाय सुन्वते । दाता जरित्र उक्थ्यो३म्** [८।६६।१–२]

शो३ंसावो३ं तरणिरित् सिषासति वाजं पुरन्ध्या युजा ।
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रवो३ं
नेमिं तष्टेव सुद्रवं न दुष्टुती मर्त्यो विन्दते वसु । न स्रेधन्तं रयिर्नशो३ं
न स्रेधन्तं रयिर्नशत् सुशक्तिरिन्मघवन् तुभ्यं मावते । देष्णं यत् पार्ये दिवो३ं [७।३२।२०–२१]
रेवाँ इद् रेवतः स्तोता स्यात् त्वावतो मघोनः । प्रेदु हरिवः श्रुतस्यो३म्
उक्थं चन शस्यमानमगोररिरा चिकेत । न गायत्रं गीयमानो३म्
मा न इन्द्र पीयत्नवे मा शर्धते परा दाः । शिक्षा शचीवः शचीभो३ं (८।२।१३–१५)
तरणिरित् सिषासति वाजं पुरन्ध्या युजा ।
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रवो३ं
नेमिं तष्टेव सुद्रवं न दुष्टुती मर्त्यो विन्दते वसु । न स्रेधन्तं रयिर्नशो३ं
न स्रेधन्तं रयिर्नशत् सुशक्तिरिन्मघवन् तुभ्यं मावते । देष्णं यत् पार्ये दिवो३ं [७।३२।२०–२१]
ऐकाहिकः प्रगाथः–
शो३ंसावो३म् उदिन्वस्य रिच्यतेंऽशो धनं न जिग्युषः ।
य इन्द्रो हरिवान् न दभन्ति तं रिपो दक्षं दधाति सोमिनो३ं
मन्त्रमखर्वं सुधितं सुपेशसं दधात यज्ञियेष्वा ।
पूर्वीश्चन प्रसितयस्तरन्ति तं य इन्द्रे कर्मणा भुवो३ं [७ ।३२ ।१२–१३]
सामप्रगाथः–
इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातयो३म्
इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत् ।
इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे सुवानास इन्दवो३ं (८।३।५–६)
सामसूक्तम्–
शो३ंसावो३म् अभूरेको रयिपते रयीणाम् । आ हस्तयोरधिथा इन्द्र कृष्टो३ं
वि तोके अप्सु तनये च सूरे । अवोचन्त चर्षणयो विवाचो३ं
त्वद् भियेन्द्र पार्थिवानि विश्वा । अच्युता चिच्च्यावयन्ते रजांसो३ं
द्यावाक्षामा पर्वतासो वनानि । विश्वं दृळ्हं भयते अज्मन्ना तो३ं
त्वं कुत्सेनाभि शुष्णमिन्द्र । अशुषं युध्य कुयवं गविष्टो३ं
दश प्रपित्वे अध सूर्यस्य । मुषायश्चक्रमविवे रपांसो३ं
त्वं शतान्यव शम्बरस्य । पुरो जघन्थाप्रतीनि दस्यो३म्

अशिक्षो यत्र शच्या शचीवः । दिवोदासाय सुन्वते सुतक्रे । भरद्वाजाय गृणते वसूनो३ं
स सत्यसत्वन् महते रणाय । रथमा तिष्ठ तुविनृम्ण भीमो३ं
याहि प्रपथिन्नवसोप मद्रिक् । प्र च श्रुत श्रावय चर्षणिभ्यो३ं (६।३१।१–५)

अहीनसूक्तम्–

शासद्वह्निर्दुहितुर्नप्त्यं गात् । विद्वाँ ऋतस्य दीधितिं सपर्यो३म्
पिता यत्र दुहितुः सेकमृञ्जन् । सं शग्म्येन मनसा दधन्वो३ं
न जामये तान्वो रिक्थमारैक् । चकार गर्भं सनितुर्निधानो३ं
यदी मातरो जनयन्त वह्निम् । अन्यः कर्ता सुकृतोरन्य ऋन्धो३म्
अग्निर्जज्ञे जुह्वा रेजमानः । महस्पुत्राँ अरुषस्य प्रयक्षो३म्
महान् गर्भो मह्या जातमेषाम् । मही प्रवृद्धर्यश्वस्य यज्ञो३म्
अभि जैत्रीरसचन्त स्पृधानम् । महि ज्योतिस्तमसो निरजानो३ं
तं जानतीः प्रत्युदायन्नुषासः । पतिर्गवामभवदेक इन्द्रो३ं
वीळौ सतीरभि धीरा अतृन्दन् । प्राचाहिन्वन् मनसा सप्त विप्रो३ं
विश्वामविन्दन् पथ्यामृतस्य । प्रजानन्नित्ता नमसा विवेशो३ं
विदद् यदी सरमा रुग्णमद्रेः । महि पाथः पूर्व्यं सध्र्यक्को३म्
अग्रं नयत्सुपद्यक्षराणाम् । अच्छा रवं प्रथमा जानती गो३म्
अगच्छदु विप्रतमः सखीयन् । असूदयत् सुकृते गर्भमद्रो३ं
ससान मर्यो युवभिर्मखस्यन् । अथाभवदङ्गिराः सद्यो अर्चो३ं
सतः सतः प्रतिमानं पुरोभूः । विश्वा वेद जनिमा हन्ति शुष्णो३म्
प्र णो दिवः पदवीर्गव्युरर्चन् । सखा सखीँरमुञ्चन्निरवद्यो३ं
नि गव्यता मनसा सेदुरर्कैः । कृण्वानासो अमृतत्वाय गातो३म्
इदं चिन्नु सदनं भूर्येषाम् । येन मासाँ असिषासन्नृतेनो३ं
सम्पश्यमाना अमदन्न अभि स्वम् । पयः प्रत्नस्य रेतसो दुघानो३ं
वि रोदसी अतपद् घोष एषाम् । जाते निष्ठामदधुर्गोषु वीरो३ं
स जातेभिर्वृत्रहा सेदु हव्यैः । उदुस्रिया असृजदिन्द्रो अर्को३म्
उरूच्यस्मै घृतवद् भरन्ती । मधु स्वाद्म दुदुहे जेन्या गो३म्
पित्रे चिच्चक्रुः सदनं समस्मै । महि त्विषीमत्सुकृतो वि हि ख्यो३ं
विष्कभ्नन्तः स्कम्भनेना जनित्री । आसीना ऊर्ध्वं रभसं वि मिन्वो३म्
मही यदि धिषणा शिश्नथे धात् । सद्योवृधं विभ्वं रोदस्यो३ं

गिरो यस्मिन्ननवद्याः समीचीः । विश्वा इन्द्राय तविषीरनुत्तो३म्
मह्या ते सख्यं वश्मि शक्तीः । आ वृत्रघ्ने नियुतो यन्ति पूर्वो३म्
महि स्तोत्रमव आगन्म सूरेः । अस्माकं सु मघवन् बोधि गोपो३म्
महि क्षेत्रं पुरु श्चन्द्रं विविद्वान् । आदित् सखिभ्यश्चरथं समैरो३म्
इन्द्रो नृभिरजनद् दीद्यानः । साकं सूर्यमुषसं गातुमग्नो३म्
अपश्चिदेष विभ्वो दमूनाः । प्र सध्रीचीरसृजद् विश्वश्चन्द्रो३म्
मध्वः पुनानाः कविभिः पवित्रैः । द्युभिर्हिन्वन्त्यक्तुभिर्धनुत्रो३म्
अनु कृष्णे वसुधिती जिहाते । उभे सूर्यस्य मंहना यजत्रो३म्
परि यत्ते महिमानं वृजध्यै । सखाय इन्द्र काम्या ऋजिप्यो३म्
पतिर्भव वृत्रहन्त्सूनृतानाम् । गिरां विश्वायुर्वृषभो वयोधो३म्
आ नो गहि सख्येभिः शिवेभिः । महान् महीभिरूतिभिः सरण्यो३ं
तमङ्गिरस्वन्नमसा सपर्यन् । नव्यं कृणोमि सन्यसे पुराजो३ं
द्रुहो वि याहि बहुला अदेवीः । स्वश्च नो मघवन्त्सातये धो३म्
मिहः पावकाः प्रतता अभूवन् । स्वस्ति नः पिपृहि पारमासो३म्
इन्द्र त्वं रथिरः पाहि नो रिषः । मक्षू मक्षू कृणुहि गोजितो नो३म्
अदेदिष्ट वृत्रहा गोपतिर्गाः । अन्तः कृष्णाँ अरुषैर्धामभिर्गो३म्
प्र सूनृता दिशमान ऋतेन । दुरश्च विश्वा अवृणोदप स्वो३ं
शुनं हुवेम मघवानमिन्द्रम्। अस्मिन् भरे नृतमं वाजसातो३ं
शृण्वन्तमुग्रमूतये समत्सु । घ्नन्तं वृत्राणि संजितं धनानो३म् (३।३१।१–२२)

ऐकाहिकसूक्तम्–

इमामू षु प्रभृतिं सातये धाः । शश्वच्छश्वदूतिभिर्यादमानो३ं
सुतेसुते वावृधे वर्धनेभिः । यः कर्मभिर्महद्भिः सुश्रुतो भो३म्
इन्द्राय सोमाः प्रदिवो विदानाः । ऋभुर्येभिर्वृषपर्वा विहायो३ं
प्रयम्यमानान् प्रति षू गृभाय । इन्द्र पिब वृषधूतस्य वृष्णो३ं
पिबा वर्धस्व तव घा सुतासः । इन्द्र सोमासः प्रथमा उतेमो३ं
यथापिबः पूर्व्याँ इन्द्र सोमान् । एवा पाहि पन्यो अद्या नवीयो३ं
महाँ अमत्रो वृजने विरप्शी । उग्रं शवः पत्यते धृष्ण्वोजो३ं
नाह विव्याच पृथिवी चनैनम् । यत् सोमासो हर्यश्व ममन्दो३ं
महाँ उग्रो वावृधे वीर्याय । समाचक्रे वृषभः काव्येनो३म्

**इन्द्रो भगो वाजदा अस्य गावः । प्रजायन्ते दक्षिणा अस्य पूर्वो३ं**
**प्र यत् सिन्धवः प्रसवं यथायन् । आपः समुद्रं रथ्येव जग्मो३म्**
**अतश्चिदिन्द्रः सदसो वरीयान् । यदीं सोमः पृणाति दुग्धो अंशो३ं**
**समुद्रेण सिन्धवो यादमानाः । इन्द्राय सोमं सुषुतं भरन्तो३म्**
**अंशुं दुहन्ति हस्तिनो भरित्रैः । मध्वः पुनन्ति धारया पवित्रो३ं**
**ह्रदाइव कुक्षयः सोमधानाः । समी विव्याच सवना पुरूणो३म्**
**अन्ना यदिन्द्रः पथमा व्याश । वृत्रं जघन्वाँ अवृणीत सोमो३म्**
**आ तू भर माकिरेतत् परिष्ठात् । विद्मा हि त्वा वसुपतिं वसूनो३म्**
**इन्द्र यत्ते माहिनं दत्रमस्ति । अस्मभ्यं तद्धर्यश्व प्र यन्धो३ं**
**शो३ंसावो३ं शुनं हुवेम मघवानमिन्द्रम् । अस्मिन् भरे नृतमं वाजसातो३ं**
**शृण्वन्तमुग्रमूतये समत्सु । घ्नन्तं वृत्राणि संजितं धनानो३म्** [३ ।३६] इति त्रिः परिदध्यात् ।
**उक्थं वाचीन्द्राय** इति शस्त्वा जपः ।
**ये३ यजामहे पिबा वर्धस्व तव घा सुतास इन्द्र सोमासः प्रथमा उतेमे ।**
**यथापिबः पूर्व्याँ इन्द्र सोमाँ एवा पाहि पन्यो अद्या नवीया३ न्वौ३षट् ॥** [३।३६।३]
**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । चमसभक्षणम् ।

**अथ तृतीयसवनम् ॥**

**वैश्वदेवशस्त्रम् ।**

आर्भवपवमानस्तोत्रं त्रिणवस्तोमम् ।होता सर्वादिशो ध्यायेच्छंसिष्यन् । यस्यां द्वेष्यो न ताम् ।
प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–
**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शोशो३ंसावो३ं**
स्तोत्रियानुरूपौ (प्रतिपदनुचरौ)–
**तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् ।**
**श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहो३म्** इति त्रिः
**अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियम् । न मिनन्ति स्वराज्यो३ं**
**स हि रत्नानि दाशुषे सुवाति सविता भगः । तं भागं चित्रमीमहे ॥** (५।८२।१–३)
**शो३ंसावो३म् अद्या नो देव सवितः प्रजावत्सावीः सौभगम् । परा दुष्वप्न्यं सुवो३ं**
**विश्वानि देव सवितर्दुरितानि परा सुव । यद्भद्रं तन्न आ सुवो३म्**
**अनागसो अदितये देवस्य सवितुः सवे । विश्वा वामानि धीमहो३ं** (५।८२।४–६)

सावित्रं निविद्धानम्–

शो३ंसावो३म् तद् देवस्य सवितुर्वार्यं महत् । वृणीमहे असुरस्य प्रचेतसो३ं

च्छर्दिर्येन दाशुषे यच्छति त्मना । तन्नो महाँ उदयान् देवो अक्तुभो३ं

दिवो धर्ता भुवनस्य प्रजापतिः । पिशङ्गं द्रापिं प्रति मुञ्चते कवो३ं

विचक्षणः प्रथयन्नापृणन्नुरु । अजीजनत् सविता सुम्नमुक्थ्यो३म्

आप्रा रजांसि दिव्यानि पार्थिवा । श्लोकं देवः कृणुते स्वाय धर्मणो३म्

प्र बाहू अस्राक् सविता सवीमनि । निवेशयन् प्रसुवन्नक्तुभिर्जगो३म्

अदाभ्यो भुवनानि प्रचाकशत् । व्रतानि देवः सविताभि रक्षतो३म्

प्रास्राग्बाहू भुवनस्य प्रजाभ्यः । धृतव्रतो महो अज्मस्य राजतो३ं

त्रिरन्तरिक्षं सविता महित्वना । त्री रजांसि परिभूस्त्रीणि रोचनो३ं

तिस्रो दिवः पृथिवीस्तिस्र इन्वति । त्रिभिर्व्रतैरभि नो रक्षति त्मनो३म्

बृहत्सुम्नः प्रसवीता निवेशनः । जगत स्थातुरुभयस्य यो वशो३ं

स नो देवः सविता शर्म यच्छतु । अस्मे क्षयाय त्रिवरूथमंहसो३ं

शो३ंसावो३ं सविता देवः सोमस्य पिबतु । हिरण्यपाणिः सुजिह्वः । सुबाहुः स्वङ्गुरिः । त्रिरहन्त् सत्यसवनः । यः प्रासुवद्वसुधिती । उभे जोष्ट्री सवीमनि । श्रेष्ठं सावित्रमासुवम् । दोग्ध्रीं धेनुम् । वोह्ळारमनड्वाहम् । आशुं सप्तिम् । पुरन्धिं योषाम् । जिष्णुं रथेष्ठाम् । सभेयम् युवानम् । परामीवांसाविषत् पराघशंसम् । सविता देव इह श्रवदिह सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमो३म्

आगन्देव ऋतुभिर्वर्धतु क्षयम् । दधातु नः सविता सुप्रजामिषो३ं

स नः क्षपाभिरहभिश्च जिन्वतु । प्रजावन्तं रयिमस्मे समिन्वतो३ं (४।५३।१–७)

धाय्या– शो३ंसावो३म् एकया च दशभिश्च स्वभूते । द्वाभ्यामिष्टये विंशत्या चो३ं

तिसृभिश्च वहसे त्रिंशता च । नियुद्भिर्वायविह ता विमिञ्चो३ं [आ.श्रौ.५।१८।५]

द्यावापृथिवीयं निविद्धानम्–

शो३ंसावो३ं कतरा पूर्वा कतरापरायोः । कथा जाते कवयः को वि वेदो३ं

विश्वं त्मना बिभृतो यद्ध नाम । वि वर्तेते अहनी चक्रियेवो३म्

भूरिं द्वे अचरन्ती चरन्तम् । पद्वन्तं गर्भमपदी दधातो३ं

नित्यं न सूनुं पित्रोरुपस्थे । द्यावा रक्षतं पृथिवी नो अभ्वो३म्

अनेहो दात्रमदितेरनर्वम् । हुवे स्वर्वदवधं नमस्वो३ं

तद्रोदसी जनयतं जरित्रे । द्यावा रक्षतं पृथिवी नो अभ्वो३म्

अतप्यमाने अवसावन्ती । अनु ष्याम रोदसी देवपुत्रो३म्

उभे देवानामुभयेभिरह्नाम् । द्यावा रक्षतं पृथिवी नो अभ्वो३ं

सङ्गच्छमाने युवती समन्ते । स्वसारा जामी पित्रोरुपस्थो३म्

अभिजिघ्रन्ती भुवनस्य नाभिम् । द्यावा रक्षतं पृथिवी नो अभ्वो३म्

उर्वी सद्मनी बृहती ऋतेन । हुवे देवानामवसा जनित्रो३ं

दधाते ये अमृतं सुप्रतीके । द्यावा रक्षतं पृथिवी नो अभ्वो३म्

उर्वी पृथ्वी बहुले दूरेअन्ते । उप ब्रुवे नमसा यज्ञे अस्मो३ं

दधाते ये सुभगे सुप्रतूर्ती । द्यावा रक्षतं पृथिवी नो अभ्वो३म्

देवान्वा यच्चकृमा कच्चिदागः । सखायं वा सदमिज्जास्पतिं वो३म्

इयं धीर्भूया अवयानमेषाम् । द्यावा रक्षतं पृथिवी नो अभ्वो३म्

उभा शंसा नर्या मामविष्टाम् । उभे मामूती अवसा सचेतो३म्

भूरि चिदर्यः सुदास्तराय । इषा मदन्त इषयेम देवो३म्

ऋतं दिवे तदवोचं पृथिव्याः । अभिश्रावाय प्रथमं सुमेधो३म्

पातामवद्याद् दुरितादभीके । पिता माता च रक्षतामवोभो३ं

शो३ंसावो३ं द्यावापृथिवी सोमस्य मत्सताम् । पिता च माता च । पुत्रश्च प्रजननं च । धेनुश्च वृषभश्च । धन्या च धिषणा च । सुरेताश्च सुदुघाश्च । शम्भूश्च मयोभूश्च । ऊर्जस्वती च पयस्वती च । रेतोधाश्च रेतोभृच्च । द्यावापृथिवी इह श्रुतामिह सोमस्य मत्सताम् । प्रेमां देवी देवहूतिमवतां देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवताम् । चित्रे चित्राभिरूतिभिः । श्रुतां ब्रह्माण्यावसा गमो३ं

तद्राधो अद्य सवितुर्वरेण्यम् । वयं देवस्य प्रसवे मनामहो३म्

इदं द्यावापृथिवी सत्यमस्तु । पितर्मातर्यदिहोपब्रुवे वो३म्

भूतं देवानामवमे अवोभिः । विद्यामेषं वृजनं जीरदानो३ं (१।१८५।१–११)

धाय्या– शो३ंसावो३ं सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यवि द्यवो३ं (१।४।१)

आर्भवं निविद्धानीयम्–

शो३ंसावो३म् अनश्वो जातो अनभीशुरुक्थ्यः । रथस्त्रिचक्रः परि वर्तते रजो३म्

महत् तद् वो देव्यस्य प्रवाचनम् । द्यामृभवः पृथिवीं यच्च पुष्यथो३ं

रथं ये चक्रुः सुवृतं सुचेतसः । अविह्वरन्तं मनसस्परि ध्ययो३ं

ताँ ऊ न्वस्य सवनस्य पीतये । आ वो वाजा ऋभवो वेदयामसो३ं

तद्वो वाजा ऋभवः सुप्रवाचनम् । देवेषु विभ्वो अभवन् महित्वनो३ं

जिव्री यत्सन्ता पितरा सनाजुरा । पुनर्युवाना चरथाय तक्षथो३म्

एकं वि चक्र चमसं चतुर्वयम् । निश्चर्मणो गामरिणीत धीतिभो३म्

अथा देवेष्वमृतत्वमानश । श्रुष्टी वाजा ऋभवस्तद्व उक्थ्यो३म्

ऋभुतो रयिः प्रथमश्रवस्तमः । वाजश्रुतासो यमजीजनन्नरो३ं

विभ्वतष्टो विदथेषु प्रवाच्यः । यं देवासोऽवथा स विचर्षणो३ं

स वाज्यर्वा स ऋषिर्वचस्यया । स शूरो अस्ता पृतनासु दुष्टरो३ं

स रायस्पोषं स सुवीर्यं दधे । यं वाजो विभ्वाँ ऋभवो यमाविषो३ं

श्रेष्ठं वः पेशो अधि धायि दर्शतम् । स्तोमो वाजा ऋभवस्तं जुजुष्टनो३ं

धीरासो हि ष्ठा कवयो विपश्चितः । तान् व एना ब्रह्मणा वेदयामसो३ं

यूयमस्मभ्यं धिषणाभ्यस्परि । विद्वांसो विश्वा नर्याणि भोजनो३ं

द्युमन्तं वाजं वृषशुष्ममुत्तमम् ।  आ नो रयिमृभवस्तक्षता वयो३ं

शो३ंसावो३म् ऋभवो देवा सोमस्य मत्सन् । विष्ट्वी स्वपसः । कर्मणा सुहस्ताः । धन्या धनिष्ठाः । शम्या शमिष्ठाः । ये धेनुं विश्वजुवं विश्वरूपामरक्षन् । अरक्षद्धेनुमभवद्विश्वरूपी । अयुञ्जत हरी अयुर्देवाँ उप । अबुध्नन्त्संकनीनामदन्तः । संवत्सरे स्वपसो यज्ञियं भागमायन् । ऋभवो देवा इह श्रवन्निह सोमस्य मत्सन् । प्रेमां देवा देवहूतिमवन्तु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवन्तु । चित्राश्चित्राभिरूतिभिः । श्रवन् ब्रह्माण्यावसा गमो३म्

इह प्रजामिह रयिं रराणाः । इह श्रवो वीरवत्तक्षता नो३ं

येन वयं चितयेमात्यन्यान् । तं वाजं चित्रमृभवो ददा नो३ं (४।३६।१–९)

धाय्याः–

शो३ंसावो३म् अयं वेनश्चोदयत्पृश्निगर्भाः । ज्योतिर्जरायू रजसो विमानो३म्

इममपां सङ्गमे सूर्यस्य । शिशुं न विप्रा मतिभी रिहन्तो३ं (१०।१२३।१)

शो३ंसावो३ं येभ्यो माता मधुमत्पिन्वते पयः । पीयूषं द्यौरदितिरद्रिबर्हो३म्

उक्थशुष्मान् वृषभरान्त्स्वप्नसः । ताँ आदित्याँ अनु मदा स्वस्तयो३ं  (१०।६३।३)

शो३ंसावो३म् एवा पित्रे विश्वदेवाय वृष्णे । यज्ञैर्विधेम नमसा हविर्भो३म्

बृहस्पते सुप्रजा वीरवन्तः । वयं स्याम पतयो रयीणो३ं  (४।५०।६)

वैश्वदेवम्–

शो३ंसावो३म् इदमित्था रौद्रं गूर्तवचाः । ब्रह्म क्रत्वा शच्यामन्तराजो३ं

क्राणा यदस्य पितरा मंहनेष्ठाः । पर्षत् पक्थे अहन्ना सप्त होतो३ं

स इद्दानाय दभ्याय वन्वन् । च्यवानः सूदैरमिमीत वेदो३ं

तूर्वयाणो गूर्तवचस्तमः । क्षोदो न रेत इतऊति सिञ्चो३म्

मनो न येषु हवनेषु तिग्मम् । विपः शच्या वनुथो द्रवन्तो३म्
आ यः शर्याभिस्तुविनृम्णो अस्य । अश्रीणीतादिशं गभस्तो३ं
कृष्णा यद् गोष्वरुणीषु सीदद् । दिवो नपाताश्विना हुवे वो३ं
वीतं मे यज्ञमा गतं मे अन्नम् । ववन्वांसा नेषमस्मृतध्रो३म्
प्रथिष्ट यस्य वीरकर्ममिष्णत् । अनुष्ठितं नु नर्यो अपौहो३म्
पुनस्तदा वृहति यत्कनायाः । दुहितुरा अनुभृतमनर्वो३म्
मध्या यत्कर्त्वमभवदभीके । कामं कृण्वाने पितरि युवत्यो३म्
मनानग्रेतो जहतुर्वियन्ता । सानौ निषिक्तं सुकृतस्य योनो३,
पिता यत्स्वां दुहितरमधिष्कन् । क्ष्मया रेतः संजग्मानो नि षिञ्चो३ं
स्वाध्योऽजनयन् ब्रह्म देवाः । वास्तोष्पतिं व्रतपां निरतक्षो३ं
स ईं वृषा न फेनमस्यदाजौ । स्मदा परैदप दभ्रचेतो३ं
सरत्पदा न दक्षिणा परावृक् । न ता नु मे पृशन्यो जगृभ्रो३म्
मक्षू न वह्निः प्रजाया उपब्दिः । अग्निं न नग्न उप सीददूधो३ं
सनितेध्मं सनितोत वाजम् । स धर्ता जज्ञे सहसा यवीयो३म्
मक्षू कनायाः सख्यं नवग्वाः । ऋतं वदन्त ऋतयुक्तिमग्मो३ं
द्विबर्हसो य उप गोपमागुः । अदक्षिणासो अच्युता दुदुक्षो३म्
मक्षू कनायाः सख्यं नवीयः । राधो न रेत ऋतमित् तुरण्यो३ं
शुचि यत्ते रेक्ण आयजन्त । सबर्दुघायाः पय उस्रियायो३म्
पश्वा यत्पश्चा वियुता बुधन्त । इति ब्रवीति वक्तरी रराणो३ं
वसोर्वसुत्वा कारवोऽनेहा । विश्वं विवेष्टि द्रविणमुप क्षो३ं
तदिन्वस्य परिषद्वानो अग्मन् । पुरू सदन्तो नार्षदं बिभित्सो३ं
वि शुष्णस्य सङ्ग्रथितमनर्वा । विदत् पुरुप्रजातस्य गुहा यो३म्
भर्गो ह नामोत यस्य देवाः । स्वर्ण ये त्रिषधस्थे निषेदो३म्
अग्निर्ह नामोत जातवेदाः । श्रुधी नो होतर्ऋतस्य होताध्रो३म्
उत त्या मे रौद्रावर्चिमन्ता । नासत्याविन्द्र गूर्तये यजध्यो३म्
मनुष्वद् वृक्तबर्हिषे रराणा । मन्दू हितप्रयसा विक्षु यज्यो३म्
अयं स्तुतो राजा वन्दि वेधाः । अपश्च विप्रस्तरति स्वसेतो३ं
स कक्षीवन्तं रेजयत्सो अग्निम् । नेमिं न चक्रमर्वतो रघुद्रो३ं
स द्विबन्धुर्वैतरणो यष्टा । सबर्धुं धेनुमस्वं दुहध्यो३ं

सं यन् मित्रावरुणा वृञ्ज उक्थैः । ज्येष्ठेभिरर्यमणं वरूथोइं
तद्बन्धुः सूरिर्दिवि ते धियंधाः । नाभानेदिष्ठो रपति प्र वेनोइं
सा नो नाभिः परमास्य वा घ । अहं तत् पश्चा कतिथश्चिदासोइम्
इयं मे नाभिरिह मे सधस्थम् । इमे मे देवा अयमस्मि सर्वोइं
द्विजा अह प्रथमजा ऋतस्य । इदं धेनुरदुहज्जायमानोइम्
अधासु मन्द्रो अरतिर्विभावा । अव स्यति द्विवर्तनिर्वनेषोइम्
ऊर्ध्वा यच्छ्रेणिर्न शिशुर्दन् । मक्षू स्थिरं शेवृधं सूत मातोइम्
अधा गाव उपमातिं कनायाः । अनु श्वान्तस्य कस्य चित्परेयोइं
श्रुधि त्वं सुद्रविणो नस्त्वं याट् । आश्वघ्नस्य वावृधे सूनृताभोइम्
अध त्वमिन्द्र विद्ध्यस्मान् । महो राये नृपते वज्रबाहोइं
रक्षा च नो मघोनः पाहि सूरीन् । अनेहसस्ते हरिवो अभिष्टोइम्
अध यद्राजाना गविष्टौ । सरत्सरण्युः कारवे जरण्योइं
विप्रः प्रेष्ठः स ह्येषां बभूव । परा च वक्षदुत पर्षदेनोइम्
अधा न्वस्य जेन्यस्य पुष्टौ । वृथा रेभन्त ईमहे तदू नोइं
सरण्युरस्य सूनुरश्वः । विप्रश्चासि श्रवसश्च सातोइं
युवोर्यदि सख्यायास्मे । शर्धाय स्तोमं जुजुषे नमस्वोइं
विश्वत्र यस्मिन्ना गिरः समीचीः । पूर्वीव गातुर्दाशत्सूनृतायोइं (१०।६१।१–२५)
ये यज्ञेन दक्षिणया समक्ताः । इन्द्रस्य सख्यममृतत्वमानशोइं
तेभ्यो भद्रमङ्गिरसो वो अस्तु । प्रति गृभ्णीत मानवं सुमेधसोइं
य उदाजन् पितरो गोमयं वसु । ऋतेनाभिन्दन् परिवत्सरे वलोइं
दीर्घायुत्वमङ्गिरसो वो अस्तु । प्रति गृभ्णीत मानवं सुमेधसोइं
य ऋतेन सूर्यमारोहयन् दिवि । अप्रथयन् पृथिवीं मातरं वोइं
सुप्रजास्त्वमङ्गिरसो वो अस्तु । प्रति गृभ्णीत मानवं सुमेधसोइम्
अयं नाभा वदति वल्गु वो गृहे । देवपुत्रा ऋषयस्तच्छृणोतनोइं
सुब्रह्मण्यमङ्गिरसो वो अस्तु । प्रति गृभ्णीत मानवं सुमेधसोइं
विरूपास इदृषयस्त इद्गम्भीरवेपसः ।
ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरोइं
ये अग्नेः परि जज्ञिरे विरूपासो दिवस्परि ।
नवग्वो नु दशग्वो अङ्गिरस्तमो सचा देवेषु मंहतोइम्

इन्द्रेण युजा निः सृजन्त वाघतो व्रजं गोमन्तमश्विनम् ।

सहस्रं मे ददतो अष्टकर्ण्यः श्रवो देवेष्वक्रतो३म्

प्र नूनं जायतामयं मनुस्तोक्मेव रोहतु ।

यः सहस्रं शताश्वं सद्यो दानाय मंहतो३ं

न तमश्नोति कश्चन दिव इव सान्वारभम् ।

सावर्ण्यस्य दक्षिणा वि सिन्धुरिव पप्रथो३म्

उत दासा परिविषे स्मद्दिष्टी गोपरीणसा । यदुस्तुर्वश्च मामहो३ं

सहस्रदा ग्रामणीर्मा रिषन्मनुः । सूर्येणास्य यतमानैतु दक्षिणो३ं

सावर्णेर्देवाः प्र तिरन्त्वायुः । यस्मिन्नश्रान्ता असनाम वाजो३ं (१०।६२।१–११)

स गृणानो अद्भिर्देववानिति । सुबन्धुर्नमसा सूक्तो३ं

वर्धदुक्थैर्वचोभिरा हि नूनम् । व्यध्वैति पयस उस्रियायो३ं

त ऊ षु णो महो यजत्राः । भूत देवास ऊतये सजोषो३ं

ये वाजाँ अनयता वियन्तः । ये स्था निचेतारो अमूरो३ं (१०।६१।२६–२७)

स्वस्ति नो मिमीतामश्विना भगः । स्वस्ति देव्यदितिरनर्वणो३ं

स्वस्ति पूषा असुरो दधातु नः । स्वस्ति द्यावापृथिवी सुचेतुनो३ं

स्वस्तये वायुमुप ब्रवामहै । सोमं स्वस्ति भुवनस्य यस्पतो३म्

बृहस्पतिं सर्वगणं स्वस्तये । स्वस्तय आदित्यासो भवन्तु नो३ं

शो३ंसावो३ं विश्वे देवाः सोमस्य मत्सन् । विश्वे वैश्वानराः । विश्वे हि विश्वमहसः । महि महान्तः । तक्वान्नेमतिथीवानः । आस्क्राः पचतवाहसः । वातात्मानो अग्निदूताः । ये द्यां च पृथिवीं चातस्थुः । अपश्च स्वश्च । ब्रह्म च क्षत्रं च । बर्हिश्च वेदिं च । यज्ञं चोरु चान्तरिक्षम् । ये स्थ त्रय एकादशाः । त्रयश्च त्रिंशच्च । त्रयश्च त्री च शता । त्रयश्च त्री च सहस्रा । तावन्तोऽभिपाचः । तावन्तोऽभिषाचः । तावतीः पत्नीः । तावतीर्ग्नाः । तावन्त उदरणे । तावन्तो निवेशने । अतो देवा भूयांसः स्थ । मा वो देवा अभिशसा मा परिशसा वृक्षि । विश्वे देवा इह श्रवन्निह सोमस्य मत्सन् । प्रेमां देवा देवहूतिमवन्तु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवन्तु । चित्राश्चित्राभिरूतिभिः । श्रवन् ब्रह्माण्यावसा गमो३ं

विश्वे देवा नो अद्या स्वस्तये । वैश्वानरो वसुरग्निः स्वस्तयो३ं

देवा अवन्त्वृभवः स्वस्तये । स्वस्ति नो रुद्रः पात्वंहसो३ं [५।५१।११–१३]

शो३ंसावो३म् अदितिर्द्यौरदितिरन्तरिक्षम् । अदितिर्माता स पिता स पुत्रो३ं

विश्वे देवा अदितिः पञ्च जनाः । अदितिर्जातमदितिर्जनित्वो३म् इति द्विः पच्छः

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।

**विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वो३म्** (१।८९।१–१०) इति सकृदर्धर्चशो भूमिमुपस्पृशन् परिदध्यात् । **उक्थं वाचीन्द्राय देवेभ्य आश्रुत्यै त्वा** इति शस्त्वा जपेत् ।

**ये३ यजामहे विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ ।**

**ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वा३ं वौ३षट् ॥** (६।५२।१३)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । सर्वभक्षाश्चमसाः ।

**आग्निमारुतशस्त्रम् ।**

यज्ञायज्ञीयस्तोत्रं त्रयस्त्रिंशत्स्तोत्रम् । स्तोत्रोपाकरणकालादारभ्य प्रावृतशिरस्का भवेयुः । अथ होता स्वभ्यग्रम् (सत्वरितम्) आग्निमारुतं शंसेत् । तस्याद्यामृचमृगावानं शंसेत् । यदि सा पच्छः शस्या भवेत्तदा पादे पादेऽवसायानुच्छवसन्नेव शंसेत् ।

प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे **हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शोशो३ंसावो३म्**

वैश्वानरीयं निविद्धानीयम्–

**वैश्वानराय धिषणामृतावृधे । घृतं न पूतमग्नये जनामसो३**

**द्विता होतारं मनुषश्च वाघतः । धिया रथं न कुलिशः समृण्वतो३ं**

**स रोचयज्जनुषा रोदसी उभे । स मात्रोरभवत्पुत्र ईड्यो३ं**

**हव्यवाळग्निरजरश्चनोहितः । दूळभो विशामतिथिर्विभावसो३ं**

**क्रत्वा दक्षस्य तरुषो विधर्मणि । देवासो अग्निं जनयन्त चित्तिभो३ं**

**रुरुचानं भानुना ज्योतिषा महाम् । अत्यो वाजं सनिष्यन्नुप ब्रुवो३म्**

**आ मन्द्रस्य सनिष्यन्तो वरेण्यम् । वृणीमहे अह्रयं वाजमृग्मियो३ं**

**रातिं भृगूणामुशिजं कविक्रतुम् । अग्निं राजन्तं दिव्येन शोचिषो३म्**

**अग्निं सुम्नाय दधिरे पुरो जनाः । वाजश्रवसमिह वृक्तबर्हिषो३ं**

**यतस्रुचः सुरुचं विश्वदेव्यम् । रुद्रं यज्ञानां साधदिष्टिमपसो३म्**

**पावकशोचे तव हि क्षयं परि । होतर्यज्ञेषु वृक्तबर्हिषो नरो३म्**

**अग्ने दुव इच्छमानास आप्यम् । उपासते द्रविणं धेहि तेभ्यो३म्**

**आ रोदसी अपृणदा स्वर्महत् । जातं यदेनमपसो अधारयो३ं**

**सो अध्वराय परि णीयते कविः । अत्यो न वाजसातये चनोहितो३ं**

**नमस्यत हव्यदातिं स्वध्वरम् । दुवस्यत दम्यं जातवेदसो३म्**

**रथीर्ऋतस्य बृहतो विचर्षणिः । अग्निर्देवानामभवत्पुरोहितो३ं**

**तिस्रो यह्वस्य समिधः परिज्मनः । अग्नेरपुनन्नुशिजो अमृत्यवो३ं**

तासामेकामदधुर्मर्त्ये भुजम् । उ लोकमु द्वे उप जामिमीयतो३ं
विशां कविं विश्पतिं मानुषीरिषः । सं सीमकृण्वन्त्स्वधितिं न तेजसो३ं
स उद्वतो निवतो याति वेविषत् । स गर्भमेषु भुवनेषु दीधरो३ं
स जिन्वते जठरेषु प्रजज्ञिवान् । वृषा चित्रेषु नानदन्न सिंहो३ं
वैश्वानरः पृथुपाजा अमर्त्यः । वसु रत्ना दयमानो वि दाशुषो३ं
वैश्वानरः प्रत्नथा नाकमारुहत् । दिवस्पृष्ठं भन्दमानः सुमन्मभो३ं
स पूर्ववज्जनयञ्जन्तवे धनम् । समानमज्मं पर्येति जागृवो३म्
ऋतावानं यज्ञियं विप्रमुक्थ्यम् । आ यं दधे मातरिश्वा दिवि क्षयो३ं
तं चित्रयामं हरिकेशमीमहे । सुदीतिमग्निं सुविताय नव्यसो३ं
शुचिं न यामन्निषिरं स्वर्दृशम् । केतुं दिवो रोचनस्थामुषर्बुधो३म्
अग्निं मूर्धानं दिवो अप्रतिष्कुतम् । तमीमहे नमसा वाजिन्बृहो३ं
शो३ंसावो३म् अग्निर्वैश्वानरः सोमस्य मत्सत् । विश्वेषां देवानां समित् । अजस्रं दैव्यं ज्योतिः । यो विड्भ्यो मानुषीभ्यो अदीदेत् । द्युषु पूर्वेषु दिद्युतानः । अजर उषसामनीके । आ योद्यां भात्या पृथिवीम् । ओर्वन्तरिक्षम् । ज्योतिषा यज्ञाय शर्म यंसत् । अग्निर्वैश्वानर इह श्रवदिह सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमो३ं
मन्द्रं होतारं शुचिमद्वयाविनम् । दमूनसमुक्थ्यं विश्वचर्षणो३ं
रथं न चित्रं वपुषाय दर्शतम् । मनुर्हितं सदमिद्राय ईमहो३ं (३।२।१–१५)
धाय्या– शो३ंसावो३ं शं नः करत्यर्वते सुगं मेषाय मेष्ये । नृभ्यो नारिभ्यो गवो३ं (१।४३।६)
मारुतं निविद्धानीयम्–
शो३ंसावो३म् प्रयज्यवो मरुतो भ्राजदृष्टयः । बृहद्वयो दधिरे रुक्मवक्षसो३म्
ईयन्ते अश्वैः सुयमेभिराशुभिः । शुभं यातामनु रथा अवृत्सतो३ं
स्वयं दधिध्वे तविषीं यथा विद । बृहन्महान्त उर्विया वि राजथो३म्
उतान्तरिक्षं ममिरे व्योजसा । शुभं यातामनु रथा अवृत्सतो३ं
साकं जाताः सुभ्वः साकमुक्षिताः । श्रिये चिदा प्रतरं वावृधुर्नरो३ं
विरोकिणः सूर्यस्येव रश्मयः । शुभं यातामनु रथा अवृत्सतो३ं
आभूषेण्यं वो मरुतो महित्वनम् । दिदृक्षेण्यं सूर्यस्येव चक्षणो३म्
उतो अस्माँ अमृतत्वे दधातन । शुभं यातामनु रथा अवृत्सतो३ं
उदीरयथा मरुतः समुद्रतः । यूयं वृष्टिं वर्षयथा पुरीषिणो३ं
न वो दस्रा उप दस्यन्ति धेनवः । शुभं यातामनु रथा अवृत्सतो३ं

यदश्वान् धूर्षु पृषतीरयुग्ध्वं । हिरण्ययान् प्रत्यत्काँ अमुग्ध्वो३ं
विश्वा इत् स्पृधो मरुतो व्यस्यथ । शुभं यातामनु रथा अवृत्सतो३ं
न पर्वता न नद्यो वरन्त वः । यत्राचिध्वं मरुतो गच्छथेदु तो३म्
उत द्यावापृथिवी याथना परि । शुभं यातामनु रथा अवृत्सतो३ं
यत्पूर्व्यं मरुतो यच्च नूतनम् । यदुद्यते वसवो यच्च शस्यतो३ं
विश्वस्य तस्य भवथा नवेदसः । शुभं यातामनु रथा अवृत्सतो३ं
मृळत नो मरुतो मा वधिष्टन । अस्मभ्यं शर्म बहुलं वि यन्तनो३म्
अधि स्तोत्रस्य सख्यस्य गातन । शुभं यातामनु रथा अवृत्सतो३ं
शो३ंसावो३म् मरुतो देवाः सोमस्य मत्सन् । सुष्टुभः स्वर्काः । अर्कस्तुभो बृहद्वयसः । शूरा अनाधृष्टरथाः । त्वेषासः पृश्निमातरः । शुभ्रा हिरण्यखादयः । तवसो भन्ददिष्टयः । नभस्या वर्षनिर्णिजः । मरुतो देवा इह श्रवन्निह सोमस्य मत्सन् । प्रेमां देवा देवहूतिमवन्तु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवन्तु । चित्राश्चित्राभिरूतिभिः । श्रवन् ब्रह्माण्यावसा गमो३ं
यूयमस्मान् नयत वस्यो अच्छ । निरंहतिभ्यो मरुतो गृणानो३ं
जुषध्वं नो हव्यदातिं यजत्राः । वयं स्याम पतयो रयीणो३ं (५।५५।१–१०)

स्तोत्रियानुरूपौ–

शो३ंसावो३ं यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे ।
प्र प्र वयममृतं जातवेदसम् प्रियं मित्रं न शंसिषो३म्
प्रियं मित्रं न शंसिषमूर्जो नपातं स हिनायमस्मयुः । दाशेम हव्यदातयो३ं
दाशेम हव्यदातये भुवद्वाजेष्वविता भुवद्वृधः । उत त्राता तनूनो३ं (६।४८।१–२)
त्वमग्ने यज्ञानां होता विश्वेषां हितः । देवेभिर्मानुषे जनो३ं
स नो मन्द्राभिरध्वरे जिह्वाभिर्यजा महः । आ देवान् वक्षि यक्षि चो३ं
वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसा । अग्ने यज्ञेषु सुक्रतो३ं (६।१६।१–३)
यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे ।
प्र प्र वयममृतं जातवेदसम् प्रियं मित्रं न शंसिषो३म्
प्रियं मित्रं न शंसिषमूर्जो नपातं स हिनायमस्मयुः । दाशेम हव्यदातयो३ं
दाशेम हव्यदातये भुवद्वाजेष्वविता भुवद्वृधः । उत त्राता तनूनो३ं (६।४८।१–२)
शो३ंसावो३ं देवो वो द्रविणोदाः पूर्णां विवष्ट्यासिचम् ।
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहतो३म्
आदिद्वो देव ओहते तं होतारमध्वरस्य प्रचेतसम् । वह्निं देवा अकृण्वतो३ं

वह्निं देवा अकृण्वत दधाति रत्नं विधते सुवीर्यम् । अग्निर्जनाय दाशुषो३ं (७।१६।११–१२)

त्वामीळे अध द्विता भरतो वाजिभिः शुनम् । ईजे यज्ञेषु यज्ञियो३ं

त्वमिमा वार्या पुरु दिवोदासाय सुन्वते । भरद्वाजाय दाशुषो३ं

त्वं दूतो अमर्त्य आ वहा दैव्यं जनम् । शृण्वन् विप्रस्य सुष्टुतो३ं (६।१६।४–६)

देवो वो द्रविणोदाः पूर्णां विवष्ट्यासिचम् ।

उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहतो३म्

आदिद्वो देव ओहते तं होतारमध्वरस्य प्रचेतसम् । वह्निं देवा अकृण्वतो३ं

वह्निं देवा अकृण्वत दधाति रत्नं विधते सुवीर्यम् । अग्निर्जनाय दाशुषो३ं (७।१६।११–१२)

जातवेदस्यं निविद्धानीयम्–

शो३ंसावो३म् इमं स्तोममर्हते जातवेदसे । रथमिव सं महेमा मनीषयो३म्

भद्रा हि नः प्रमतिरस्य संसदि । अग्ने सख्ये मा रिषामा वयं तवो३ं

यस्मै त्वमायजसे स साधति । अनर्वा क्षेति दधते सुवीर्यो३ं

स तूताव नैनमश्नोत्यंहतिः । अग्ने सख्ये मा रिषामा वयं तवो३ं

शकेम त्वा समिधं साधया धियः । त्वे देवा हविरदन्त्याहुतो३ं

त्वमादित्याँ आ वह तान् ह्युश्मसि । अग्ने सख्ये मा रिषामा वयं तवो३ं

भरामेध्मं कृणवामा हवींषि ते । चितयन्तः पर्वणा पर्वणा वयो३ं

जीवातवे प्रतरं साधया धियः । अग्ने सख्ये मा रिषामा वयं तवो३ं

विशां गोपा अस्य चरन्ति जन्तवः । द्विपच्च यदुत चतुष्पदक्तुभो३ं

चित्रः प्रकेत उषसो महाँ असि । अग्ने सख्ये मा रिषामा वयं तवो३ं

त्वमध्वर्युरुत होतासि पूर्व्यः । प्रशास्ता पोता जनुषा पुरोहितो३ं

विश्वा विद्वाँ आर्त्विज्या धीर पुष्यसि । अग्ने सख्ये मा रिषामा वयं तवो३ं

यो विश्वतः सुप्रतीकः सदृङ्ङसि । दूरे चित्सन्तळिदिवाति रोचसो३ं

रात्र्याश्चिदन्धो अति देव पश्यसि । अग्ने सख्ये मा रिषामा वयं तवो३ं

पूर्वो देवा भवतु सुन्वतो रथः । अस्माकं शंसो अभ्यस्तु दूढ्यो३ं

तदा जानीतोत पुष्यता वचः । अग्ने सख्ये मा रिषामा वयं तवो३ं

वधैर्दुःशंसाँ अप दूढ्यो जहि । दूरे वा ये अन्ति वा के चिदत्रिणो३म्

अथा यज्ञाय गृणते सुगं कृधि । अग्ने सख्ये मा रिषामा वयं तवो३ं

यदयुक्था अरुषा रोहिता रथे । वातजूता वृषभस्येव ते रवो३म्

आदिन्वसि वनिनो धूमकेतुना । अग्ने सख्ये मा रिषामा वयं तवो३ं

अध स्वनादुत बिभ्युः पतत्रिणः । द्रप्सा यत्ते यवसादो व्यस्थिरो३ं

सुगं तत्ते तावकेभ्यो रथेभ्यः । अग्ने सख्ये मा रिषामा वयं तवो३ं

अयं मित्रस्य वरुणस्य धायसे । अवयातां मरुतां हेळो अद्भुतो३म्

मृळा सु नो भूत्वेषां मनः पुनः । अग्ने सख्ये मा रिषामा वयं तवो३ं

देवो देवानामसि मित्रो अद्भुतः । वसुर्वसूनामसि चारुरध्वरो३ं

शर्मन् त्स्याम तव सप्रथस्तमे । अग्ने सख्ये मा रिषामा वयं तवो३ं

तत्ते भद्रं यत्समिद्धः स्वे दमे । सोमाहुतो जरसे मृळयत्तमो३ं

दधासि रत्नं द्रविणं च दाशुषे । अग्ने सख्ये मा रिषामा वयं तवो३ं

यस्मै त्वं सुद्रविणो ददाशः । अनागास्त्वमदिते सर्वतातो३ं

यं भद्रेण शवसा चोदयासि । प्रजावता राधसा ते स्यामो३ं

शो३ंसावो३म् अग्निर्जातवेदाः सोमस्य मत्सत् । स्वनीकश्चित्रभानुः । अप्रोषिवान् गृहपतिः । तिरस्तमांसि दर्शतः । घृताहवन ईड्यः । बहुलवर्मास्तृतयज्वा । प्रतीत्या शत्रून् जेतापराजितः । अग्ने जातवेदोऽभिद्युम्नमभि सह आयच्छस्व । समेद्धारं स्तोतारमंहसस्पाहि । अग्निर्जातवेदा इहश्रवदिह सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमो३ं

स त्वमग्ने सौभगत्वस्य विद्वान् । अस्माकमायुः प्र तिरेह देवो३ं

तन्नो मित्रो वरुणो मामहन्ताम् । अदितिः सिन्धुः पृथिवी उत द्यो३ं (१।९४।१–१६)

अथापोहिष्ठीये वियतं स्थित्वा स्थित्वा अपश्चोपस्पृशञ्छंसेत् । उद्गात्रादिष्वन्वारब्धेष्वपावृतशिरस्कः

शो३ंसावो३म् आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसो३ं

यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरो३ं

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नो३ं (१०।९।१–३)

शो३ंसावो३म् उत नोऽहिर्बुध्न्यः शृणोतु । अज एकपात्पृथिवी समुद्रो३ं

विश्वे देवा ऋतावृधो हुवानाः । स्तुता मन्त्राः कविशस्ता अवन्तो३ं (६।५०।१४)

शो३ंसावो३म् देवानां पत्नीरुशतीरवन्तु नः । प्रावन्तु नस्तुजये वाजसातयो३ं

याः पार्थिवासो या अपामपि व्रते । ता नो देवीः सुहवाः शर्म यच्छतो३म्

उत ग्ना व्यन्तु देवपत्नीः । इन्द्राण्यग्नाय्यश्विनी रो३म्

आ रोदसी वरुणानी शृणोतु । व्यन्तु देवीर्य ऋतुर्जनीनो३ं (५।४६।७–८)

शो३ंसावो३ं राकामहं सुहवां सुष्टुती हुवे । शृणोतु नः सुभगा बोधतु त्मनो३ं

सीव्यत्वपः सूच्या च्छिद्यमानया । ददातु वीरं शतदायमुक्थ्यो३ं

यास्ते राके सुमतयः सुपेशसः । याभिर्ददासि दाशुषे वसूनोऽ३ं
ताभिर्नो अद्य सुमना उपागहि । सहस्रपोषं सुभगे रराणोऽ३ं (२।३२।४–५)
शोऽ३ंसावोऽ३म् पावीरवी कन्या चित्रायुः । सरस्वती वीरपत्नी धियं धोऽ३ं
ग्नाभिरच्छिद्रं शरणं सजोषाः । दुराधर्षं गृणते शर्म यंसोऽ३ं। (६।४९।७)
शोऽ३ंसावोऽ३म् इमं यम प्रस्तरमा हि सीद । अङ्गिरोभिः पितृभिः संविदानोऽ३म्
आ त्वा मन्त्राः कविशस्ता वहन्तु । एना राजन्हविषा मादयस्वोऽ३ं (१०।१४।४)
शोऽ३ंसावोऽ३म् मातली कव्यैर्यमो अङ्गिरोभिः । बृहस्पतिर्ऋक्वभिर्वावृधानोऽ३ं
यांश्च देवा वावृधुर्ये च देवान् । स्वाहान्ये स्वधयान्ये मदन्तोऽ३ं (१०।१४।३)
शोऽ३ंसावोऽ३म् उदीरतामवर उत्परासः । उन्मध्यमाः पितरः सोम्यासोऽ३म्
असुं य ईयुरवृका ऋतज्ञाः । ते नोऽवन्तु पितरो हवेषोऽ३ं (१०।१५।१)
शोऽ३ंसावोऽ३म् आहं पितॄन्सुविदत्राँ अवित्सि । नपातं च विक्रमणं च विष्णोऽ३म्
बर्हिषदो ये स्वधया सुतस्य । भजन्त पित्वस्त इहागमिष्ठोऽ३ं (१०।१५।३)
शोऽ३ंसावोऽ३म् इदं पितृभ्यो नमो अस्त्वद्य । ये पूर्वासो य उपरास ईयोऽ३ं
ये पार्थिवे रजस्या निषत्ताः । ये वा नूनं सुवृजनासु विक्षोऽ३ं (१०।१५।२)
शोऽ३ंसावोऽ३ं स्वादुषकिलायं मधुमाँ उतायम् । तीव्रः किलायं रसवाँ उतायोऽ३म्
उतो न्वस्य पपिवांसमिन्द्रम् । न कश्चन सहत आहवेषोऽ३म्
अयं स्वादुरिह मदिष्ठ आस । यस्येन्द्रो वृत्रहत्ये ममादोऽ३म्
पुरूणि यश्च्यौत्ना शम्बरस्य । वि नवतिं नव च देह्यो होऽ३म्
शोऽ३ंसावोऽ३म् अयं मे पीत उदियर्ति वाचम् । अयं मनीषामुशतीमजीगोऽ३म्
अयं षळुर्वीरमिमीत धीरः । न याभ्यो भुवनं कच्चनारोऽ३म्
अयं स यो वरिमाणं पृथिव्याः । वर्ष्माणं दिवो अकृणोदयं सोऽ३म्
अयं पीयूषं तिसृषु प्रवत्सु । सोमो दाधारोर्वन्तरिक्षोऽ३ं (६।४७।१–४)
शोऽ३ंसावोऽ३म् ययो रोजसा स्कभिता रजांसि । वीर्येभिर्वीरतमा शविष्ठोऽ३ं
या पत्येते अप्रतीता सहोभिः । विष्णू अगन् वरुणा पूर्वहूतोऽ३ं
विष्णोर्नु कं वीर्याणि प्र वोचम् । यः पार्थिवानि विममे रजांसोऽ३ं
यो अस्कभायदुत्तरं सधस्थम् । विचक्रमाणस्त्रेधोरुगायोऽ३ं (१।१५४।१)
शोऽ३ंसावोऽ३ं तन्तुं तन्वन्रजसो भानुमन्विहि । ज्योतिष्मतः पथो रक्ष धिया कृतोऽ३म्
अनुल्बणं वयत जोगुवामपः । मनुर्भव जनया दैव्यं जनोऽ३ं (१०।५३।६)
शोऽ३ंसावोऽ३म् एवा न इन्द्रो मघवा विरप्शी । करत्सत्या चर्षणीधृदनर्वोऽ३ं

**त्वं राजा जनुषां धेह्यस्मे । अधि श्रवो माहिन्यज्जरित्रो३म्** (४।१७।२०)

भूमिमुपस्पृशन्नस्या ऋचो मध्यमे वचन उत्तमं पादमवशिष्य स्थित्वा उत्तमेन वचनेन ध्रुवावनयनं काङ्क्षेत् । **उक्थं वाचीन्द्राय देवेभ्य आश्रुताय त्वा** इति शस्त्वा जपेत् ।

**ये३ यजामहेऽग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मन्दसानो गणश्रिभिः ।**

**पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजू३ र्वौ३षट् ॥** (५।६०।८)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । चमसभक्षणम् ।

**उक्थ्यशस्त्राणि ॥**

**मैत्रावरुणशस्त्रम् ।**

साकमश्वगूर्दस्तोत्रं गर्भाकारं त्रिणवस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शोशो३ंसावो३म्**

स्तोत्रियानुरूपौ–

**एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्धास इन्दुभो३ं**

**यत्र क्व च ते मनो दक्षं दधस उत्तरम् । तत्रा सदः कृणवसो३ं**

**नहि ते पूर्तमक्षिपद्भुवन्नेमानां वसो । अथा दुवो वनवसो३ं** (६।१६।१६–१८)

**अग्ने त्वं नो अन्तमः । उत त्राता शिवो भवा वरूथ्यो३ं**

**वसुरग्निर्वसुश्रवाः । अच्छा नक्षि द्युमत्तमं रयिं दो३ं**

**तं त्वा शोचिष्ठ दीदिवः । सुम्नाय नूनमीमहे सखिभ्यो३म्** (५।२४।१,२,४)

**एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्धास इन्दुभो३ं**

**यत्र क्व च ते मनो दक्षं दधस उत्तरम् । तत्रा सदः कृणवसो३ं**

**नहि ते पूर्तमक्षिपद्भुवन्नेमानां वसो । अथा दुवो वनवसो३ं** (६।१६।१६–१८)

**शो३ंसावो३म् आग्निरगामि भारतो वृत्रहा पुरुचेतनः । दिवोदासस्य सत्पतो३ं**

**स हि विश्वानि पार्थिवा रयिं दाशन्महित्वना । वन्वन्नवातो अस्तृतो३ं**

**स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता । बृहत्ततन्थ भानुनो३ं** (६।१६।१८–२१)

**अग्ने भव सुषमिधा समिद्धः । उत बर्हिरुर्विया वि स्तृणीतो३म्**

**उत द्वार उशतीर्वि श्रयन्ताम् । उत देवाँ उशत आ वहेहो३म्**

**अग्ने वीहि हविषा यक्षि देवान् । स्वध्वरा कृणुहि जातवेदो३म्** (७।१७।१–३)

**आग्निरगामि भारतो वृत्रहा पुरुचेतनः । दिवोदासस्य सत्पतो३ं**

**स हि विश्वानि पार्थिवा रयिं दाशन्महित्वना । वन्वन्नवातो अस्तृतो३ं**

स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता । बृहत्ततन्थ भानुनो३ं (६।१६।१८–२१)

महावालभित् पच्छः–

अभि प्र वः सुराधसमिन्द्रस्य समिषो महीः ।

शतानीका हेतयो अस्य दुष्टरा इन्द्रमर्च यथा विदो३ं

यो जरितृभ्यो मघवा पुरूवसुर्यदीं सुता अमन्दिषुः ।

गिरिर्न भुज्मा मघवत्सु पिन्वते सहस्रेणेव शिक्षतो३म्

इन्द्रो विश्वस्य गोपतिः ॥

प्र सु श्रुतं सुराधसं हन्ति वृत्राणि दाशुषे ।

शतानीकेव प्र जिगाति धृष्णुयार्चा शक्रमभिष्टयो३ं

यः सुन्वते स्तुवते काम्यं वसु दत्राणि पुरुभोजसः ।

गिरेरिव प्र रसा अस्य पिन्विरे सहस्रेणेव मंहतो३म्

इन्द्रो विश्वस्य भूपतिः ॥

आ त्वा सुतास इन्दवो मध्वः क्षरन्ति धीतयः ।

अनेहसं वो हवमानमूतये मदा य इन्द्र गिर्वणो३म्

आपो न वज्रिन्नन्वोक्यं सर उप स्तोत्रेषु दधिरे ।

आ त्वा वसो हवमानास इन्दवः पृणन्ति शूर राधसो३म्

इन्द्रो विश्वस्य चेतति ॥

यदीं सुतास इन्दवो मध्वः स्वादिष्ठमीं पिब ।

अनेहसं प्रतरणं विवक्षणमभि प्रियममन्दिषो३म्

आपो न धायि सवनं म आ वसो प्र क्षुद्रेव त्मना धृषत् ।

आ यथा मन्दसानः किरासि नो दुघा इवोप दाशुषो३म्

इन्द्रो विश्वस्य राजति ॥

आ नः स्तोममुप द्रवद् विभूर्तिं राधसो महः ।

प्र वीरमुग्रं विविचिं धनस्पृतं हियानो अश्वो न सोतृभो३ं

यं ते स्वधावन्त्स्वदयन्ति धेनवः सदा पीपेथ दाशुषे ।

उद्रीव वज्रिन्नवतो वसुत्वनेन्द्र कण्वेषु रातयो३म्

इन्द्रो विश्वं विराजति ॥

आ नः सोमे स्वध्वरो विभूतिमक्षितावसुम् ।

उग्रं न वीरं नमसोप सेदिमेयानो अत्यो न तोशतो३ं

यं ते स्वदावन्त्स्वदन्ति गूर्तयः क्षरन्तीन्द्र धीतयः ।
उद्रीव वज्रिन्नवतो न सिञ्चते पौरे च्छन्दयसे हवो३म्
प्रचेतन प्रचेतय ॥
यद्ध नूनं यद्वा यज्ञे ओजो वातस्य पिप्रति ।
रथिरासो हरयो ये ते अस्रिधो यद्वा पृथिव्यामधो३म्
अतो नो यज्ञमाशुभिर्महेमते येभिः स्वः परीयसे ।
येभिर्नि दस्युं मनुषो निघोषय उग्र उग्रेभिरा गहो३म्
इन्द्र द्युम्नाय न इषे ॥
यद्ध नूनं परावति वाता इव प्रसक्षिणः ।
अजिरासो हरयो ये त आशवो यद्वा पृथिव्यां दिवो३ं
युजान इन्द्र हरिभिर्महेमत येभिर्विश्वं स्वर्दृशे ।
येभिरपत्यं मनुषः परीयस ऋष्व ऋष्वेभिरा गहो३म्
राये वाजाय वज्रिवः ॥
एतावतस्त ईमहे दीर्घनीथे दमूनसि ।
यथा कण्वे मघवन् मेधे अध्वर इन्द्र सुम्नस्य गोमतो३ं
यथा प्रावो मघवन् मेध्यातिथिं मयि गोत्रं हरिश्रियम् ।
यथा गोशर्ये असिषासो अद्रिवो यथा नीपातिथिं धनो३ं
शविष्ठ वज्रिन्नृञ्जसे ॥
एतावतस्ते वसो यथा पक्थे दशव्रजे ।
यथा कण्वे मघवन् त्रसदस्यवि विद्याम शूर नव्यसो३ं
यथा प्राव एतशं कृत्व्ये धन इन्द्र गोमद्धिरण्यवत् ।
यथा गोशर्ये असनोर्ऋजिश्वनि यथा वशं दशव्रजो३म्
मंहिष्ठ वज्रिन्नृञ्जसे ॥
यथा मनौ सांवरणाविन्द्र सुवाने अमन्दथाः ।
पृषध्रे मेध्ये मातरिश्वनि सोममिन्द्रापिबः सुतो३ं
नीपातिथौ मघवन्मेध्यातिथौ स्यूमरश्मावृजूनसि ।
यथा सोमं दशशिप्रे दशोण्ये पुष्टिगौ श्रुष्टिगौ सचो३ं
चिकित्वाँ अभि नो नय ॥
यथा मनौ विवस्वति शयानं जिव्रिमुद्धितम् ।

पार्षद्वाणः प्रस्कण्वं समसादयत् सोमं शक्रापिबः सुतो३ं
यथा त्रिते च्छन्द इन्द्र जुजोषसि त्वोतो दस्यवे वृकः ।
सहस्राण्यसिषासद् गवामृषिरायौ मादयसे सचो३म्
इन्द्रो विदे तमु स्तुषे ॥
य उक्थेभिर्न विन्धते वाजे वाजिञ्छतक्रतो ।
यस्य त्वमिन्द्र स्तोमेषु चाकनश्चिकिद्य ऋषिचोदनो३म्
इन्द्रं तमच्छा वद नव्यस्या मति जुहूमसि श्रवस्यवः ।
तं त्वा वयं सुदुघामिव गोदुहोऽरिष्यन्तं न भोजसो३ं
तमूतये हवामहे ॥
य उक्था केवला दधे त्रिधातुमुत्तमे पदे ।
यस्मा अर्कं सप्तशीर्षाणमानृचुर्यः सोमं धृषितापिबो३ं
यस्मै विष्णुस्त्रीणि पदा विचक्रम आदिज्जनिष्ट पौंस्यम् ।
स त्विमा विश्वा भुवनानि चिक्रददुप मित्रस्य धर्मभो३ं
जेतारमपराजितम् ॥
यो नो दाता वसूनां स रायस्पोषमिन्वति ।
यस्मै त्वं वसो दानाय मंहस इन्द्रं तं हूमहे वयो३ं
विद्मा ह्यस्य सुमतिं नवीयसीं स्तोमैरिन्द्रं हवामहे ।
वसूयवो वसुपतिं शतक्रतुं गमेम गोमति व्रजो३ं
स नः पर्षदति द्विषः ॥
यो नो दाता स नः पिता स रायस्पोषमश्नुते ।
यस्मै त्वं वसो दानाय शिक्षसि महाँ उग्र ईशानको३म्
अयामन्नुग्रो मघवा पुरूवसुः सुतावन्तो हवामहे ।
तं त्वा वयं मघवन्निन्द्र गिर्वणो गोरश्वस्य प्र दातु नो३ं
क्रतुश्छन्द ऋतं बृहत् ॥
कदा चन स्तरीरसि शिक्षो शिक्षसि दाशुषे ।
यस्मै त्वं मघवन्निन्द्र गिर्वणो नेन्द्र सश्चसि दाशुषो३म्
उपोपेन्नु मघवन् भूय इन्नु ते कण्ववच्छृणुधी हवम् ।
अस्माकं गिर उत सुष्टुतिं वसो दानं देवस्य पृच्यतो३ं
स नः पर्षदति स्रिधः ॥

कदा चन प्र युच्छसि वधैः शुष्णं निघोषयन् ।
प्र यो ननक्षे अभ्योजसा क्रिविमुभे नि पासि जन्मनो३ं
तुरीयादित्य हवनं त इन्द्रियमादिज्जनिष्ट पार्थिवः ।
यदेदस्तम्भीत् प्रथयन्नमूं दिवमातस्थावमृतं दिवो३ं
पूर्वस्य यत्ते अद्रिवः ॥
यस्यायं विश्व आर्यः सं क्षोणी समु सूर्यम् ।
समिन्द्रो रायो बृहतीरधूनुत दासः शेवधिपा अरो३ं
तिरश्चिदर्ये रुशमे परीरवि सोमा इन्द्रममन्दिषुः ।
सं शुक्रासः शुचयः सं गवाशिरस्तुभ्येत्सो अज्यते रयो३ं
सुम्न आधेहि नो वसो ॥
अस्तावि मन्म पूर्व्यं विप्रासो अर्कमानृचुः ।
तुरण्यवो मधुमन्तं घृतश्चुतं ब्रह्मेन्द्राय वोचतो३म्
पूर्वीर्ऋतस्य बृहतीरनूषतास्मे सुवानास इन्दवः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवः स्तोतुर्मेधा असृक्षतो३म्
पूर्तिः शविष्ठ शश्वते ॥
उपमं त्वा मघोनां येषां सुतेषु मन्दसे ।
नक्षन्त इन्द्रमवसे सुकृत्यया ज्येष्ठं च वृषभाणो३म्
पूर्भित्तमं मघवन्निन्द्र गोविदमेवास्मे इन्द्र मत्स्व ।
यथा संवर्ते अमदो यथा कृश ईशानं राय ईमहो३ं
नूनं तं नव्यं मन्यसे ॥
एतत्त इन्द्र वीर्यं वावृधानो दिवे दिवे ।
य आयुं कुत्समतिथिग्वमर्दयो गीर्भिर्गृणन्ति कारवो३ं
ते स्तोभन्त ऊर्जमावन् घृतश्चुतं वाजयन्तो हवामहे ।
तं त्वा वयं हर्यश्वं शतक्रतुं पौरासो नक्षन् धीतिभो३म्
प्रभो जनस्य वृत्रहन् ॥
आ नो विश्वेषां रसमवन्तु सप्त सिन्धवः ।
पूषा विष्णुर्हवनं मे सरस्वती मध्वः सिञ्चन्त्वद्रयो३ं
ये परावति सुन्विरे जनेष्वा शृणोतु पृथिवी हवम् ।
आपो वातः पर्वतासो वनस्पतिर्ये अर्वावतीन्दवो३ं

समन्येषु ब्रवावहै ॥

आ नो विश्वे सजोषसो विश्वे सन्वन्त्वा वसु ।

विश्वा द्वेषांसि जहि चाव चा कृधि देवासो गन्तनोप नो३ं

वसवो रुद्रा अवसे न आ गमन् यत्रा सोमस्य तृम्पसि ।

शीष्टेषु चित्ते मदिरासो अंशवः शृण्वन्तु मरुतो हवो३ं

शूरो यो गोषु गच्छति ॥

इन्द्र नेदीय एदिहि वाज आ वक्षि सुक्रतो ।

आजिपते नृपते त्वमिद्धि नो मितमेधाभिरूतिभो३म्

आ शंतम शंतमाभिरभिष्टिभिः ससवांसो वि शृण्विरे ।

वीती होत्राभिरुत देववीतिभिरा स्वापे स्वापिभो३ं

सखा सुशेवो अद्वयाः ॥

यदिन्द्र राधो अस्ति ते कृधि प्रजास्वाभगम् ।

आजितुरं सत्पतिं विश्वचर्षणिं माघोनं मघवत्तमो३ं

तेन नो बोधि सधमाद्यो वृधे ऋतुं पुनत आनुषक् ।

प्र सू तिरा शचीभिर्ये त उक्थिनो भगो दानाय वृत्रहो३म्

एवा ह्येवैवा हि विष्णा३ उ ॥

यस्ते साधिष्ठोऽवसे त्वमस्माकं शतक्रतो ।

वयं त इन्द्र स्तोमेभिर्विधेम ते स्याम भरेषु तो३ं

वयं होत्राभिरुत देवहूतिभिः प्रस्कण्वाय नि तोशय ।

महि स्थूरं शशयं राधो अह्रयं ससवांसो मनामहो३म्

एवा ह्येवैवा हि पूषा३न् ॥

सन्ति ह्यर्य आशिष आजिं यामि सदोतिभिः ।

अहं हि ते हरिवो ब्रह्म वाजयुरिन्द्र आयुर्जनानो३म्

अस्मान् नक्षस्व मघवन्नुपावसे गव्युरग्रे मथीनाम् ।

त्वामिदेव तममे समश्वयुर्धुक्षस्व पिप्युषीमिषो३म्

एवा ह्येवैवा हि देवा३ः ॥

अर्धर्चशः–

अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।

गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता अमन्दिषो३ं

शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षतो३म्
इन्द्रो विश्वस्य गोपतिः ॥
प्र सु श्रुतं सुराधसमर्चा शक्रमभिष्टये ।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसो३ं
शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।
यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहतो३म्
इन्द्रो विश्वस्य भूपतिः ॥
आ त्वा सुतास इन्दवो मदा य इन्द्र गिर्वणः ।
आ त्वा वसो हवमानास इन्दव उप स्तोत्रेषु दधिरो३म्
अनेहसं वो हवमानमूतये मध्वः क्षरन्ति धीतयः ।
आपो न वज्रिन्नन्वोक्यं सरः पृणन्ति शूर राधसो३म्
इन्द्रो विश्वस्य चेतति ॥
यदीं सुतास इन्दवोऽभि प्रियममन्दिषुः ।
आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मना धृषो३म्
अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठमीं पिब ।
आपो न धायि सवनं म आ वसो दुघा इवोप दाशुषो३म्
इन्द्रो विश्वस्य राजति ॥
आ नः स्तोममुप द्रवद्धियानो अश्वो न सोतृभिः ।
उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषो३म्
प्र वीरमुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ।
यं ते स्वधावन्त्स्वदयन्ति धेनव इन्द्र कण्वेषु रातयो३म्
इन्द्रो विश्वं विराजति ॥
आ नः सोमे स्वध्वर इयानो अत्यो न तोशते ।
उद्रीव वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयो३ं
उग्रं न वीरं नमसोप सेदिम विभूतिमक्षितावसुम् ।
यं ते स्वदावन्त्स्वदन्ति गूर्तयः पौरे च्छन्दयसे हवो३म्
प्रचेतन प्रचेतय ॥
यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्यामधि ।

येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः परीयसो३ं

रथिरासो हरयो ये ते अस्रिध ओजो वातस्य पिप्रति ।

अतो नो यज्ञमाशुभिर्महेमत उग्र उग्रेभिरा गहो३म्

इन्द्र द्युम्नाय न इषे ॥

यद्ध नूनं परावति यद्वा पृथिव्यां दिवि ।

येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशो३म्

अजिरासो हरयो ये त आशवो वाता इव प्रसक्षिणः ।

युजान इन्द्र हरिभिर्महेमत ऋष्व ऋष्वेभिरा गहो३ं

राये वाजाय वज्रिवः ॥

एतावतस्त ईमह इन्द्र सुम्नस्य गोमतः ।

यथा गोशर्ये असिषासो अद्रिवो मयि गोत्रं हरिश्रियो३ं

यथा कण्वे मघवन्मेधे अध्वरे दीर्घनीथे दमूनसि ।

यथा प्रावो मघवनं मेध्यातिथिं यथा नीपातिथिं धनो३ं

शविष्ठ वज्रिन्नृञ्जसे ॥

एतावतस्ते वसो विद्याम शूर नव्यसः ।

यथा गोशर्ये असनोर्ऋजिश्वनीन्द्र गोमद्धिरण्यवो३ं

यथा कण्वे मघवन् त्रसदस्यवि यथा पक्थे दशव्रजे ।

यथा प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजो३म्

मंहिष्ठ वज्रिन्नृञ्जसे ॥

यथा मनौ सांवरणौ सोममिन्द्रापिबः सुतम् ।

यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसो३म्

पृषध्रे मेध्ये मातरिश्वनीन्द्र सुवाने अमन्दथाः ।

नीपातिथौ मघवन् मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचो३ं

चिकित्वाँ अभि नो नय ॥

यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।

सहस्राण्यसिषासद्गवामृषिस्त्वोतो दस्यवे वृको३म्

पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रिमुद्धितम् ।

यथा त्रिते च्छन्द इन्द्र जुजोषस्यायौ मादयसे सचो३म्

इन्द्रो विदे तमु स्तुषे ॥

य उक्थेभिर्न विन्धते चिकिद्य ऋषिचोदनः ।
तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवो३ं
यस्य त्वमिन्द्र स्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।
इन्द्रं तमच्छा वद नव्यस्या मत्यरिष्यन्तं न भोजसो३ं
तमूतये हवामहे ॥
य उक्था केवला दधे यः सोमं धृषितापिबत् ।
स त्विमा विश्वा भुवनानि चिक्रददादिज्जनिष्ट पौंस्यो३ं
यस्मा अर्कं सप्तशीर्षाणमानृचुस्त्रिधातुमुत्तमे पदे ।
यस्मै विष्णुस्त्रीणि पदा विचक्रम उप मित्रस्य धर्मभो३ं
जेतारमपराजितम् ॥
यो नो दाता वसूनामिन्द्रं तं हूमहे वयम् ।
वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहो३ं
यस्मै त्वं वसो दानाय मंहसे स रायस्पोषमिन्वति ।
विद्मा ह्यस्य सुमतिं नवीयसीं गमेम गोमति व्रजो३ं
स नः पर्षदति द्विषः ॥
यो नो दाता स नः पिता महाँ उग्र ईशानकृत् ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहो३ं
यस्मै त्वं वसो दानाय शिक्षसि स रायस्पोषमश्नुते ।
अयामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नो३ं
क्रतुश्छन्द ऋतं बृहत् ॥
कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
अस्माकं गिर उत सुष्टुतिं वसो कण्ववच्छृणुधी हवो३ं
यस्मै त्वं मघवन्निन्द्र गिर्वणः शिक्षो शिक्षसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यतो३ं
स नः पर्षदति स्रिधः ॥
कदा चन प्र युच्छस्युभे नि पासि जन्मनी ।
यदेदस्तम्भीत् प्रथयन्नमूं दिवमादिज्जनिष्ट पार्थिवो३म्
प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन् ।
तुरीयादित्य हवनं त इन्द्रियमा तस्थावमृतं दिवो३म्

पूर्वस्य यत्ते अद्रिवः ॥
यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
सं शुक्रासः शुचयः सं गवाशिरः सोमा इन्द्रममन्दिषो३ं
समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।
तिरश्चिदर्ये रुशमे परीरवि तुभ्येत्सो अज्यते रयो३ं
सुम्न आधेहि नो वसो ॥
अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवो३ं
तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षतो३म्
पूर्तिः शविष्ठ शश्वते ॥
उपमं त्वा मघोनां ज्येष्ठं च वृषभाणाम् ।
यथा संवर्ते अमदो यथा कृश एवास्मे इन्द्र मत्स्वो३ं
नक्षन्त इन्द्रमवसे सुकृत्यया येषां सुतेषु मन्दसे ।
पूर्भित्तमं मघवन्निन्द्र गोविदमीशानं राय ईमहो३ं
नूनं तं नव्यं मन्यसे ॥
एतत्त इन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः ।
तं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहो३ं
य आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवे दिवे ।
ते स्तोभन्त ऊर्जमावन् घृतश्चुतं पौरासो नक्षन् धीतिभो३म्
प्रभो जनस्य वृत्रहन् ॥
आ नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः ।
आपो वातः पर्वतासो वनस्पतिः शृणोतु पृथिवी हवो३म्
पूषा विष्णुर्हवनं मे सरस्वत्यवन्तु सप्त सिन्धवः ।
ये परावति सुन्विरे जनेष्वा ये अर्वावतीन्दवो३ं
समन्येषु ब्रवावहै ॥
आ नो विश्वे सजोषसो देवासो गन्तनोप नः ।
शीष्टेषु चित्ते मदिरासो अंशवो यत्रा सोमस्य तृम्पसो३ं
विश्वा द्वेषांसि जहि चाव चा कृधि विश्वे सन्वन्त्वा वसु ।

वसवो रुद्रा अवसे न आ गमञ्च्छृण्वन्तु मरुतो हवो३ं

शूरो यो गोषु गच्छति ॥

इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।

वीती होत्राभिरुत देववीतिभिः ससवांसो वि शृण्विरो३म्

आजिपते नृपते त्वमिद्धि नो वाज आ वक्षि सुक्रतो ।

आ शंतम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभो३ं

सखा सुशेवो अद्वयाः ॥

यदिन्द्र राधो अस्ति ते माघोनं मघवत्तम ।

प्र सू तिरा शचीभिर्ये त उक्थिनः क्रतुं पुनत आनुषो३म्

आजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम् ।

तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहो३म्

एवा ह्येवैवा हि विष्णा३ उ ॥

यस्ते साधिष्ठोऽवसे ते स्याम भरेषु ते ।

महि स्थूरं शशयं राधो अह्रयं प्रस्कण्वाय नि तोशयो३ं

वयं त इन्द्र स्तोमेभिर्विधेम त्वमस्माकं शतक्रतो ।

वयं होत्राभिरुत देवहूतिभिः ससवांसो मनामहो३म्

एवा ह्येवैवा हि पूषा३न् ॥

सन्ति ह्यर्य आशिष इन्द्र आयुर्जनानाम् ।

त्वामिदेव तममे समश्वयुर्गव्युरग्रे मथीनो३म्

अहं हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोतिभिः ।

अस्मान्नक्षस्व मघवन्नुपावसे धुक्षस्व पिप्युषीमिषो३म्

एवा ह्येवैवा हि देवा३ः ॥

ऋक्शः–

अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।

यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षतो३ं

शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।

गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता अमन्दिषो३म्

इन्द्रो विश्वस्य गोपतिः ॥

प्र सु श्रुतं सुराधसमर्चा शक्रमभिष्टये ।

यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहतो३ं
शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसो३म्
इन्द्रो विश्वस्य भूपतिः ॥
आ त्वा सुतास इन्दवो मदा य इन्द्र गिर्वणः ।
आपो न वज्रिन्नन्वोक्यं सरः पृणन्ति शूर राधसो३म्
अनेहसं वो हवमानमूतये मध्वः क्षरन्ति धीतयः ।
आ त्वा वसो हवमानास इन्दव उप स्तोत्रेषु दधिरो३म्
इन्द्रो विश्वस्य चेतति ॥
यदीं सुतास इन्दवोऽभि प्रियममन्दिषुः ।
आपो न धायि सवनं म आ वसो दुघा इवोप दाशुषो३म्
अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठमीं पिब ।
आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मना धृषो३म्
इन्द्रो विश्वस्य राजति ॥
आ नः स्तोममुप द्रवद्धियानो अश्वो न सोतृभिः ।
यं ते स्वधावन्त्स्वदयन्ति धेनव इन्द्र कण्वेषु रातयो३म्
प्र वीरमुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ।
उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषो३म्
इन्द्रो विश्वं विराजति ॥
आ नः सोमे स्वध्वर इयानो अत्यो न तोशते ।
यं ते स्वदावन्त्स्वदन्ति गूर्तयः पौरे च्छन्दयसे हवो३म्
उग्रं न वीरं नमसोप सेदिम विभूतिमक्षितावसुम् ।
उद्रीव वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयो३म्
प्रचेतन प्रचेतय ॥
यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्यामधि ।
अतो नो यज्ञमाशुभिर्महेमत उग्र उग्रेभिरा गहो३ं
रथिरासो हरयो ये ते अस्रिध ओजो वातस्य पिप्रति ।
येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः परीयसो३म्
इन्द्र द्युम्नाय न इषे ॥

यद्ध नूनं परावति यद्वा पृथिव्यां दिवि ।
युजान इन्द्र हरिभिर्महेमत ऋष्व ऋष्वेभिरा गहो३म्
अजिरासो हरयो ये त आशवो वाता इव प्रसक्षिणः ।
येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशो३ं
राये वाजाय वज्रिवः ॥
एतावतस्त ईमह इन्द्र सुम्नस्य गोमतः ।
यथा प्रावो मघवन् मेध्यातिथिं यथा नीपातिथिं धनो३ं
यथा कण्वे मघवन् मेधे अध्वरे दीर्घनीथे दमूनसि ।
यथा गोशर्ये असिषासो अद्रिवो मयि गोत्रं हरिश्रियो३ं
शविष्ठ वज्रिन्नृञ्जसे ॥
एतावतस्ते वसो विद्याम शूर नव्यसः ।
यथा प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजो३ं
यथा कण्वे मघवन् त्रसदस्यवि यथा पक्थे दशव्रजे ।
यथा गोशर्ये असनोर्ऋजिश्वनीन्द्र गोमद्धिरण्यवो३म्
मंहिष्ठ वज्रिन्नृञ्जसे ॥
यथा मनौ सांवरणौ सोममिन्द्रापिबः सुतम् ।
नीपातिथौ मघवन् मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचो३म्
पृषध्रे मेध्ये मातरिश्वनीन्द्र सुवाने अमन्दथाः ।
यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसो३ं
चिकित्वाँ अभि नो नय ॥
यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।
यथा त्रिते च्छन्द इन्द्र जुजोषस्यायौ मादयसे सचो३म्
पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रिमुद्धितम् ।
सहस्राण्यसिषासद् गवामृषिस्त्वोतो दस्यवे वृको३म्
इन्द्रो विदे तमु स्तुषे ॥
य उक्थेभिर्न विन्धते चिकिद्य ऋषिचोदनः ।
इन्द्रं तमच्छा वद नव्यस्या मत्यरिष्यन्तं न भोजसो३ं
यस्य त्वमिन्द्र स्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।
तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवो३ं

तमूतये हवामहे ॥

य उक्था केवला दधे यः सोमं धृषितापिबत् ।

यस्मै विष्णुस्त्रीणि पदा विचक्रम उप मित्रस्य धर्मभो३ं

यस्मा अर्कं सप्तशीर्षाणमानृचुस्त्रिधातुमुत्तमे पदे ।

स त्विमा विश्वा भुवनानि चिक्रददादिज्जनिष्ट पौंस्यो३ं

जेतारमपराजितम् ॥

यो नो दाता वसूनामिन्द्रं तं हूमहे वयम् ।

विद्मा ह्यस्य सुमतिं नवीयसीं गमेम गोमति व्रजो३ं

यस्मै त्वं वसो दानाय मंहसे स रायस्पोषमिन्वति ।

वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहो३ं

स नः पर्षदति द्विषः ॥

यो नो दाता स नः पिता महाँ उग्र ईशानकृत् ।

अयामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नो३ं

यस्मै त्वं वसो दानाय शिक्षसि स रायस्पोषमश्नुते ।

तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहो३ं

क्रतुश्छन्द ऋतं बृहत् ॥

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।

उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यतो३ं

यस्मै त्वं मघवन्निन्द्र गिर्वणः शिक्षो शिक्षसि दाशुषे ।

अस्माकं गिर उत सुष्टुतिं वसो कण्ववच्छृणुधी हवो३ं

स नः पर्षदति स्रिधः ॥

कदा चन प्र युच्छस्युभे नि पासि जन्मनी ।

तुरीयादित्य हवनं त इन्द्रियमा तस्थावमृतं दिवो३म्

प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन् ।

यदेदस्तम्भीत् प्रथयन्नमूं दिवमादिज्जनिष्ट पार्थिवो३म्

पूर्वस्य यत्ते अद्रिवः ॥

यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।

तिरश्चिदर्ये रुशमे परीरवि तुभ्येत्सो अज्यते रयो३ं

समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।

सं शुक्रासः शुचयः सं गवाशिरः सोमा इन्द्रममन्दिषो३ं
सुम्न आधेहि नो वसो ॥
अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षतो३ं
तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवो३म्
पूर्तिः शविष्ठ शश्वते ॥
उपमं त्वा मघोनां ज्येष्ठं च वृषभाणाम् ।
पूर्भित्तमं मघवन्निन्द्र गोविदमीशानं राय ईमहो३ं
नक्षन्त इन्द्रमवसे सुकृत्यया येषां सुतेषु मन्दसे ।
यथा संवर्ते अमदो यथा कृश एवास्मे इन्द्र मत्स्वो३ं
नूनं तं नव्यं मन्यसे ॥
एतत्त इन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः ।
ते स्तोभन्त ऊर्जमावन् घृतश्चुतं पौरासो नक्षन् धीतिभो३ं
य आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवे दिवे ।
तं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहो३म्
प्रभो जनस्य वृत्रहन् ॥
आ नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः ।
ये परावति सुन्विरे जनेष्वा ये अर्वावतीन्दवो३म्
पूषा विष्णुर्हवनं मे सरस्वत्यवन्तु सप्त सिन्धवः ।
आपो वातः पर्वतासो वनस्पतिः शृणोतु पृथिवी हवो३ं
समन्येषु ब्रवावहै ॥
आ नो विश्वे सजोषसो देवासो गन्तनोप नः ।
वसवो रुद्रा अवसे न आ गमञ्च्छृण्वन्तु मरुतो हवो३ं
विश्वा द्वेषांसि जहि चाव चा कृधि विश्वे सन्वन्त्वा वसु ।
शीष्टेषु चित्ते मदिरासो अंशवो यत्रा सोमस्य तृम्पसो३ं
शूरो यो गोषु गच्छति ॥
इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।
आ शंतम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभो३म्

आजिपते नृपते त्वमिद्धि नो वाज आ वक्षि सुक्रतो ।
वीती होत्राभिरुत देववीतिभिः ससवांसो वि शृण्विरो३ं
सखा सुशेवो अद्वयाः ॥
यदिन्द्र राधो अस्ति ते माघोनं मघवत्तम ।
तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहो३म्
आजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम् ।
प्र सू तिरा शचीभिर्ये त उक्थिनः क्रतुं पुनत आनुषो३म्
एवा ह्येवैवा हि विष्णा३ उ ॥
यस्ते साधिष्ठोऽवसे ते स्याम भरेषु ते ।
वयं होत्राभिरुत देवहूतिभिः ससवांसो मनामहो३ं
वयं त इन्द्र स्तोमेभिर्विधेम त्वमस्माकं शतक्रतो ।
महि स्थूरं शशयं राधो अह्रयं प्रस्कण्वाय नि तोशयो३म्
एवा ह्येवैवा हि पूषा३न् ॥
सन्ति ह्यर्य आशिष इन्द्र आयुर्जनानाम् ।
अस्मान्नक्षस्व मघवन्नुपावसे धुक्षस्व पिप्युषीमिषो३म्
अहं हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोतिभिः ।
त्वामिदेव तममे समश्वयुर्गव्युरग्रे मथीनो३म्
एवा ह्येवैवा हि देवा३ः ॥
अविहृतेन चतुर्थम्–
अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षतो३ं
शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसो३म्
आ त्वा सुतास इन्दवो मदा य इन्द्र गिर्वणः ।
आपो न वज्रिन्नन्वोक्यं सरः पृणन्ति शूर राधसो३म्
अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठमीं पिब ।
आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मना धृषो३म्
आ नः स्तोममुप द्रवद्धियानो अश्वो न सोतृभिः ।
यं ते स्वधावन्त्स्वदयन्ति धेनव इन्द्र कण्वेषु रातयो३म्

उग्रं न वीरं नमसोप सेदिम विभूतिमक्षितावसुम् ।
उद्रीव वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयो३ं
यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्यामधि ।
अतो नो यज्ञमाशुभिर्महेमत उग्र उग्रेभिरा गहो३म्
अजिरासो हरयो ये त आशवो वाता इव प्रसक्षिणः ।
येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशो३म्
एतावतस्त ईमह इन्द्र सुम्नस्य गोमतः ।
यथा प्रावो मघवन् मेध्यातिथिं यथा नीपातिथिं धनो३ं
यथा कण्वे मघवन् त्रसदस्यवि यथा पक्थे दशव्रजे ।
यथा गोशर्ये असनोर्ऋजिश्वनीन्द्र गोमद्धिरण्यवत् ॥ (८।४९)
प्र सु श्रुतं सुराधसमर्चा शक्रमभिष्टये ।
यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहतो३ं
शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।
गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता अमन्दिषो३ं
यदीं सुतास इन्दवोऽभि प्रियममन्दिषुः ।
आपो न धायि सवनं म आ वसो दुघा इवोप दाशुषो३म्
अनेहसं वो हवमानमूतये मध्वः क्षरन्ति धीतयः ।
आ त्वा वसो हवमानास इन्दव उप स्तोत्रेषु दधिरो३म्
आ नः सोमे स्वध्वर इयानो अत्यो न तोशते ।
यं ते स्वदावन्त्स्वदन्ति गूर्तयः पौरे च्छन्दयसे हवो३म्
प्र वीरमुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ।
उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषो३ं
यद्ध नूनं परावति यद्वा पृथिव्यां दिवि ।
युजान इन्द्र हरिभिर्महेमत ऋष्व ऋष्वेभिरा गहो३ं
रथिरासो हरयो ये ते अस्रिध ओजो वातस्य पिप्रति ।
येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः परीयसो३म्
एतावतस्ते वसो विद्याम शूर नव्यसः ।
यथा प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजो३ं
यथा कण्वे मघवन् मेधे अध्वरे दीर्घनीथे दमूनसि ।

यथा गोशर्ये असिषासो अद्रिवो मयि गोत्रं हरिश्रियो३ं (८।५०)
यथा मनौ सांवरणौ सोममिन्द्रापिबः सुतम् ।
नीपातिथौ मघवन् मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचो३म्
पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रिमुद्धितम् ।
सहस्राण्यसिषासद् गवामृषिस्त्वोतो दस्यवे वृको३ं
य उक्थेभिर्न विन्धते चिकिद्य ऋषिचोदनः ।
इन्द्रं तमच्छा वद नव्यस्या मत्यरिष्यन्तं न भोजसो३ं
यस्मा अर्कं सप्तशीर्षाणमानृचुस्त्रिधातुमुत्तमे पदे ।
स त्विमा विश्वा भुवनानि चिक्रददादिज्जनिष्ट पौंस्यो३ं
यो नो दाता वसूनामिन्द्रं तं हूमहे वयम् ।
विद्मा ह्यस्य सुमतिं नवीयसीं गमेम गोमति व्रजो३ं
यस्मै त्वं वसो दानाय शिक्षसि स रायस्पोषमश्नुते ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहो३ं
कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यतो३म्
प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन् ।
यदेदस्तम्भीत् प्रथयन्नमूं दिवमादिज्जनिष्ट पार्थिवो३ं
यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे परीरवि तुभ्येत्सो अज्यते रयो३ं
तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवो३ं (८।५१)
यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।
यथा त्रिते च्छन्द इन्द्र जुजोषस्यायौ मादयसे सचो३म्
पृषध्रे मेध्ये मातरिश्वनीन्द्र सुवाने अमन्दथाः ।
यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसो३ं
य उक्था केवला दधे यः सोमं धृषितापिबत् ।
यस्मै विष्णुस्त्रीणि पदा विचक्रम उप मित्रस्य धर्मभो३ं
यस्य त्वमिन्द्र स्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।
तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवो३ं

यो नो दाता स नः पिता महाँ उग्र ईशानकृत् ।
अयामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नो३ं
यस्मै त्वं वसो दानाय मंहसे स रायस्पोषमिन्वति ।
वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहो३ं
कदा चन प्र युच्छस्युभे नि पासि जन्मनी ।
तुरीयादित्य हवनं त इन्द्रियमा तस्थावमृतं दिवो३ं
यस्मै त्वं मघवन्निन्द्र गिर्वणः शिक्षो शिक्षसि दाशुषे ।
अस्माकं गिर उत सुष्टुतिं वसो कण्ववच्छृणुधी हवो३म्
अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षतो३ं
समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।
सं शुक्रासः शुचयः सं गवाशिरः सोमा इन्द्रममन्दिषो३म् [८।५२]
उपमं त्वा मघोनां ज्येष्ठं च वृषभाणाम् ।
पूर्भित्तमं मघवन्निन्द्र गोविदमीशानं राय ईमहो३ं
य आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवे दिवे ।
तं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहो३म्
आ नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः ।
ये परावति सुन्विरे जनेष्वा ये अर्वावतीन्दवो३ं
विश्वा द्वेषांसि जहि चाव चा कृधि विश्वे सन्वन्त्वा वसु ।
शीष्टेषु चित्ते मदिरासो अंशवो यत्रा सोमस्य तृम्पसो३म्
इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।
आ शंतम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभो३म्
आजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम् ।
प्र सू तिरा शचीभिर्ये त उक्थिनः क्रतुं पुनत आनुषो३ं
यस्ते साधिष्ठोऽवसे ते स्याम भरेषु ते ।
वयं होत्राभिरुत देवहूतिभिः ससवांसो मनामहो३म्
अहं हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोतिभिः ।
त्वामिदेव तममे समश्वयुर्गव्युरग्रे मथीनो३म् [८।५३]
एतत्त इन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः ।

ते स्तोभन्त ऊर्जमावन् घृतश्चुतं पौरासो नक्षन् धीतिभो३ं

नक्षन्त इन्द्रमवसे सुकृत्यया येषां सुतेषु मन्दसे ।

यथा संवर्ते अमदो यथा कृश एवास्मे इन्द्र मत्स्वो३म्

आ नो विश्वे सजोषसो देवासो गन्तनोप नः ।

वसवो रुद्रा अवसे न आ गमञ्छृण्वन्तु मरुतो हवो३म्

पूषा विष्णुर्हवनं मे सरस्वत्यवन्तु सप्त सिन्धवः ।

आपो वातः पर्वतासो वनस्पतिः शृणोतु पृथिवी हवो३ं

यदिन्द्र राधो अस्ति ते माघोनं मघवत्तम ।

तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहो३म्

आजिपते नृपते त्वमिद्धि नो वाज आ वक्षि सुक्रतो ।

वीती होत्राभिरुत देववीतिभिः ससवांसो वि शृण्विरो३ं

सन्ति ह्यर्य आशिष इन्द्र आयुर्जनानाम् ।

अस्मान्नक्षस्व मघवन्नुपावसे धुक्षस्व पिप्युषीमिषो३ं

वयं त इन्द्र स्तोमेभिर्विधेम त्वमस्माकं शतक्रतो ।

महि स्थूरं शशयं राधो अह्रयं प्रस्कण्वाय नि तोशयो३म् (८।५४)

प्रति ते दस्यवे वृक राधो अदर्श्यह्रयम् । द्यौर्न प्रथिना शवो३ं

दश मह्यं पौतक्रतः सहस्रा दस्यवे वृकः । नित्याद्रायो अमंहतो३ं

शतं मे गर्दभानां शतमूर्णावतीनाम् । शतं दासाँ अति स्रजो३ं

तत्रो अपि प्राणीयत पूतक्रतायै व्यक्ता । अश्वानामिन्न यूथ्यो३म्

अचेत्यग्निश्चिकितुर्हव्यवाट् स सुमद्रथः ।

अग्निः शुक्रेण शोचिषा बृहत् सूरो अरोचत । दिवि सूर्यो अरोचतो३म् [८।५६]

भूरीदिन्द्रस्य वीर्यं व्यख्यमभ्यायति । राधस्ते दस्यवे वृको३ं

शतं श्वेतास उक्षणो दिवि तारो न रोचन्ते । मह्ना दिवं न तस्तभो३ं

शतं वेणूञ्छतं शुनः शतं चर्माणि म्लातानि ।

शतं मे बल्बजस्तुका अरुषीणां चतुः शतो३ं

सुदेवाः स्थ काण्वायना वयो वयो विचरन्तः । अश्वासो न चङ्क्रमतो३म्

आदित् साप्तस्य चर्किरन्नानूनस्य महि श्रवः ।

श्यावीरतिध्वसन् पथश्चक्षुषा चन संनशे ॥ (८।५५)

सौपर्णम्–

इमानि वां भागधेयानि सिस्रते । इन्द्रावरुणा प्र महे सुतेषु वो३ं
यज्ञे यज्ञे ह सवना भुरण्यथः । यत् सुन्वते यजमानाय शिक्षथो३ं
निष्षिध्वरीरोषधीराप आस्ताम् । इन्द्रावरुणा महिमानमाशतो३ं
या सिस्रतू रजसः पारे अध्वनः । ययोः शत्रुर्नकिरादेव ओहतो३ं
सत्यं तदिन्द्रावरुणा कृशस्य वाम् । मध्व ऊर्मिं दुहते सप्त वाणो३ं
ताभिर्दाश्वांसमवतं शुभस्पती । यो वामदब्धो अभि पाति चित्तिभो३ं
घृतप्रुषः सौम्या जीरदानवः । सप्त स्वसारः सदन ऋतस्यो३ं
या ह वामिन्द्रावरुणा घृतश्चुतः । ताभिर्धत्तं यजमानाय शिक्षतो३म्
अवोचाम महते सौभगाय । सत्यं त्वेषाभ्यां महिमानमिन्द्रियो३म्
अस्मान्त्स्विन्द्रावरुणा घृतश्चुतः । त्रिभिः साप्तेभिरवतं शुभस्पतो३म्
इन्द्रावरुणा यदृषिभ्यो मनीषाम् । वाचो मतिं श्रुतमदत्तमग्रो३ं
यानि स्थानान्यसृजन्त धीराः । यज्ञं तन्वानास्तपसाभ्यपश्यो३ं
दूरोहणम्–
शो३ंसावो३ं हंसः शुचिषद्वसुरन्तरिक्षसत् । होता वेदिषदतिथिर्दुरोणसो३ं
नृषद्वरसदृतसद् व्योमसत् । अब्जा गोजा ऋतजा अद्रिजा ऋतो३ं
हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद् वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतो३ं
हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसन्
नृषद्वरसदृतसद् व्योमसत् । अब्जा गोजा ऋतजा अद्रिजा ऋतो३ं
हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसन्
नृषद् वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतो३ं
हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसन्
नृषद्वरसदृतसद् व्योमसत् । अब्जा गोजा ऋतजा अद्रिजा ऋतो३ं
हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद् वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतो३ं
हंसः शुचिषद्वसुरन्तरिक्षसत् । होता वेदिषदतिथिर्दुरोणसो३ं [४।४०।५]
नृषद्वरसदृतसद् व्योमसत् । अब्जा गोजा ऋतजा अद्रिजा ऋतो३ं
इन्द्रावरुणा सौमनसमदृप्तम् । रायस्पोषं यजमानेषु धत्तो३म्
प्रजां पुष्टिं भूतिमस्मासु धत्तम् । दीर्घायुत्वाय प्र तिरतं न आयो३म् (८।५९)

ऐकाहिकसूक्तम्–

**आ वां राजानावध्वरे ववृत्याम् । हव्येभिरिन्द्रावरुणा नमोभो३म्**

**प्र वां घृताची बाह्वोर्दधाना । परि त्मना विषुरूपा जिगातो३ं**

**युवो राष्ट्रं बृहदिन्वति द्यौः । यौ सेतृभिररज्जुभिः सिनीथो३म्**

**परि नो हेळो वरुणस्य वृज्याः । उरुं न इन्द्रः कृणवदु लोको३ं**

**कृतं नो यज्ञं विदथेषु चारुम् । कृतं ब्रह्माणि सूरिषु प्रशस्तो३म्**

**उपो रयिर्देवजूतो न एतु । प्र ण स्पार्हाभिरूतिभिस्तिरेतो३म्**

**अस्मे इन्द्रावरुणा विश्ववारम् । रयिं धत्तं वसुमन्तं पुरुक्षो३म्**

**प्र य आदित्यो अनृता मिनाति । अमिता शूरो दयते वसूनो३ं**

**शो३ंसावो३म् इयमिन्द्रं वरुणमष्ट मे गीः । प्रावत्तोके तनये तूतुजानो३ं**

**सुरत्नासो देववीतिं गमेम । यूयं पात स्वस्तिभिः सदा नो३म् ॥** (७।८४।१–५) इति त्रिः परिदध्यात् ।

**उक्थं वाचीन्द्राय देवेभ्यः** इति शस्त्वा जपः ।

**ये३ यजामह इन्द्रावरुणा मधुमत्तमस्य वृष्णः सोमस्य वृषणा वृषेथाम् ।**

**इदं वामन्धः परिषिक्तमस्मे आसद्यास्मिन् बर्हिषि मादयेथा३ं वौ३षट् ॥** (६।६८।११)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । चमसभक्षणम् ।

**ब्राह्मणाच्छंसीशस्त्रम् ।**

सौभरभद्रस्तोत्रं गर्भाकारं एकविंशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शोशो३ंसावो३म्**

स्तोत्रियानुरूपौ–

**वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः । वाजे चित्रं हवामहो३ं**

**वाजे चित्रं हवामह उप त्वा कर्मन्नूतये स नो युवा । उग्रश्चक्राम यो धृषो३ं**

**उग्रश्चक्राम यो धृषत्त्वामिद्ध्यवितारं ववृमहे । सखाय इन्द्र सानसो३ं ॥** (८।२१।१–२)

**इमा नु कं भुवना सीषधाम । इन्द्रश्च विश्वे च देवो३ं**

**यज्ञं च नस्तन्वं च प्रजां च । आदित्यैरिन्द्रः सह चीक्लपातो३म्**

**आदित्यैरिन्द्रः सगणो मरुद्भिः । अस्माकं भूत्वविता तनूनो३ं** (१०–१५७–३)

**वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः । वाजे चित्रं हवामहो३ं**

**वाजे चित्रं हवामह उप त्वा कर्मन्नूतये स नो युवा । उग्रश्चक्राम यो धृषो३ं**

**उग्रश्चक्राम यो धृषत्त्वामिद्ध्यवितारं ववृमहे । सखाय इन्द्र सानसो३ं ॥** (८।२१।१–२)

शो३ंसावो३ं यो न इदमिदं पुरा प्र वस्य आनिनाय तमु वः स्तुषे । सखाय इन्द्रमूतयो३ं
सखाय इन्द्रमूतये हर्यश्वं सत्पतिं चर्षणीसहम् । स हि ष्मा यो अमन्दतो३ं
स हि ष्मा यो अमन्दता तु नः स वयति गव्यमश्व्यम् । स्तोतृभ्यो मघवा शतो३ं ॥ (८।२१।९–१०)
हत्वाय देवा असुरान्यदायन् । देवा देवत्वमभिरक्षमाणो३म्
प्रत्यञ्चमर्कमनयञ्छचीभिः । आदित्स्वधामिषिरां पर्यपश्यो३म्
अया वाजं देवहितं सनेम । मदेम शतहिमाः सुवीरो३ं
यो न इदमिदं पुरा प्र वस्य आनिनाय तमु वः स्तुषे । सखाय इन्द्रमूतयो३ं
सखाय इन्द्रमूतये हर्यश्वं सत्पतिं चर्षणीसहम् । स हि ष्मा यो अमन्दतो३ं
स हि ष्मा यो अमन्दता तु नः स वयति गव्यमश्व्यम् । स्तोतृभ्यो मघवा शतो३ं ॥ (८।२१।९–१०)
शो३ंसावो३म् अप प्राच इन्द्र विश्वाँ अमित्रान् । अपापाचो अभिभूते नुदस्वो३म्
अपोदीचो अप शूराधराचः । उरौ यथा तव शर्मन् मदेमो३ं
कुविदङ्ग यवमन्तो यवं चित् । यथा दान्त्यनुपूर्वं वियूयो३म्
इहेहैषां कृणुहि भोजनानि । ये बर्हिषो नमोवृक्तिं न जग्मो३ं
नहि स्थूर्यृतुथा यातमस्ति । नोत श्रवो विविदे सङ्गमेषो३ं
गव्यन्त इन्द्रं सख्याय विप्राः । अश्वायन्तो वृषणं वाजयन्तो३ं
युवं सुराममश्विना नमुचावासुरे सचा ।
विपिपाना शुभस्पती इन्द्रं कर्मस्वावतो३म्
पुत्रमिव पितरावश्विनोभा । इन्द्रावथुः काव्यैर्दंसनाभो३ं
यत्सुरामं व्यपिबः शचीभिः । सरस्वती त्वा मघवन्नभिष्णो३म्
इन्द्रः सुत्रामा स्ववाँ अवोभिः । सुमृळीको भवतु विश्ववेदो३म्
बाधतां द्वेषो अभयं कृणोतु । सुवीर्यस्य पतयः स्यामो३ं
तस्य वयं सुमतौ यज्ञियस्य । अपि भद्रे सौमनसे स्यामो३ं
स सुत्रामा स्ववाँ इन्द्रो अस्मे । आराच्चिद् द्वेषः सनुतर्युयोतो३ं
वि हि सोतोरसृक्षत । नेन्द्रं देवममंसत ।
यत्रो३ओओओओओओ३ओओओओओओ३ओओओ मदद्वृषाकपो३ओओओ३मर्यः पुष्टेषु मत्सखा ।
विश्वस्मादिन्द्र उत्तरो३म् परा हीन्द्र धावसि । वृषाकपेरति व्यथिः ।
नो ओ३ओओओओओओ३ओओओओओओ३ओओओ ह प्र विन्दसो३ओओओ३मन्यत्र सोमपीतये ।
विश्वस्मादिन्द्र उत्तरो३ं किमयं त्वां वृषाकपिः । चकार हरितो मृगः ।

यस्मो३ओओओओओओ३ओओओओओओ३ओओओ इरस्यसीदो३ओओओ३ं न्वर्यो वा पुष्टिमद्वसु ।
विश्वस्मादिन्द्र उत्तरो३ं यमिमं त्वं वृषाकपिम् । प्रियमिन्द्राभिरक्षसि ।
श्वा न्वो३ओओओओओओ३ओओओओओओ३ओओओ स्य जम्भिषो३ओओओ३मपि कर्णे वराहयुः ।
विश्वस्मादिन्द्र उत्तरो३ं प्रिया तष्टानि मे कपिः । व्यक्ता व्यदूदुषत् ।
शिरो३ओओओओओओ३ओओओओओओ३ओओओ न्वस्य राविषो३ओओओ३ं न सुगं दुष्कृते भुवम् ।
विश्वस्मादिन्द्र उत्तरो३ं न मत् स्त्री सुभसत्तरा । न सुयाशुतरा भुवत् ।
न मो३ओओओओओओ३ओओओओओओ३ओओओ प्रतिच्यवीयसो३ओओओ३ं न सक्थ्युद्यमीयसी ।
विश्वस्मादिन्द्र उत्तरो३ं उवे अम्ब सुलाभिके । यथेवाङ्ग भविष्यति ।
भसो३ओओओओओओ३ओओओओओओ३ओओओ मे अम्ब सक्थि मो३ओओओ३ं शिरो मे वीव हृष्यति ।
विश्वस्मादिन्द्र उत्तरो३ं किं सुबाहो स्वङ्गुरे पृथुष्टो पृथुजाघने ।
किं शो३ओओओओओओ३ओओओओओओ३ओओओ रपत्नि नस्त्वो३ओओओ३मभ्यमीषि वृषाकपिम् ।
विश्वस्मादिन्द्र उत्तरो३म् अवीरामिव मामयम् । शरारुरभि मन्यते ।
उतो३ओओओओओओ३ओओओओओओ३ओओओ हमस्मि वीरिणो३ओओओ३मिन्द्रपत्नी मरुत्सखा ।
विश्वस्मादिन्द्र उत्तरो३ं संहोत्रं स्म पुरा नारी । समनं वाव गच्छति ।
वेधो३ओओओओओओ३ओओओओओओ३ओओओ ऋतस्य वीरिणो३ओओओमिन्द्रपत्नी महीयते ।
विश्वस्मादिन्द्र उत्तरो३म् इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ।
नह्यो३ओओओओओओ३ओओओओओओ३ओओओ स्या अपरं चनो३ओओओ३ं जरसा मरते पतिः ।
विश्वस्मादिन्द्र उत्तरो३ं नाहमिन्द्राणि रारण । सख्युर्वृषाकपेर्ऋते ।
यस्यो३ओओओओओओ३ओओओओओओ३ओओओ दमप्यं हवो३ओओओ३ं प्रियं देवेषु गच्छति ।
विश्वस्मादिन्द्र उत्तरो३ं वृषाकपायि रेवति । सुपुत्र आदु सुस्नुषे ।
घसो३ओओओओओओ३ओओओओओओ३ओओओ त्त इन्द्र उक्षणो३ओओओ३ं प्रियं काचित्करं हविः ।
विश्वस्मादिन्द्र उत्तरो३म् उक्ष्णो हि मे पञ्चदश । साकं पचन्ति विंशतिम् ।
उतो३ओओओओओओ३ओओओओओओ३ओओओ हमद्मि पीव ओ३ओओओ३मुभा कुक्षी पृणन्ति मे ।
विश्वस्मादिन्द्र उत्तरो३ं वृषभो न तिग्मशृङ्गः । अन्तर्यूथेषु रोरुवत् ।
मन्थो३ओओओओओओ३ओओओओओओ३ओओओ स्त इन्द्र शं हृदो३ओओओ३ं यं ते सुनोति भावयुः ।
विश्वस्मादिन्द्र उत्तरो३ं न सेशे यस्य रम्बते । अन्तरा सक्थ्या कपृत् ।
सेदो३ओओओओओओ३ओओओओओओ३ओओओ शे यस्य रोमशो३ओओओ३ं निषेदुषो विजृम्भते ।
विश्वस्मादिन्द्र उत्तरो३ं न सेशे यस्य रोमशम् । निषेदुषो विजृम्भते ।

सेदो३ओओओओओओ३ओओओओओओ३ओओओ शे यस्य रम्बतो३ओओओ३मन्तरा सक्थ्या कपृत् ।
विश्वस्मादिन्द्र उत्तरो३म् अयमिन्द्र वृषाकपिः । परस्वन्तं हतं विदत् ।
असो३ओओओओओओ३ओओओओओओ३ओओओ सूनां नवं चरो३ओओओ३माद्येधस्यान आचितम् ।
विश्वस्मादिन्द्र उत्तरो३म् अयमेमि विचाकशत् । विचिन्वन्दासमार्यम् ।
पिबो३ओओओओओओ३ओओओओओओ३ओओओ मि पाकसुत्वनो३ओओओ३मभि धीरमचाकशम् ।
विश्वस्मादिन्द्र उत्तरो३ं धन्व च यत्कृन्तत्रं च । कति स्वित्ता वि योजना ।
नेदो३ओओओओओओ३ओओओओओओ३ओओओ यसो वृषाकपो३ओओओ३मस्तमेहि गृहाँ उप ।
विश्वस्मादिन्द्र उत्तरो३म् पुनरेहि वृषाकपे । सुविता कल्पयावहै ।
य ओ३ओओओओओओ३ओओओओओओ३ओओओ ष स्वप्ननंशनो३ओओओ३मस्तमेषि पथा पुनः ।
विश्वस्मादिन्द्र उत्तरो३ं यदुदञ्चो वृषाकपे । गृहमिन्द्राजगन्तन ।
क्व स्यो३ओओओओओओ३ओओओओओओ३ओओओ पुल्वघो मृगो३ओओओ३ं कमगञ्जनयोपनः ।
विश्वस्मादिन्द्र उत्तरो३म् पर्शुर्ह नाम मानवी । साकं ससूव विंशतिम् ।
भद्रो३ओओओओओओ३ओओओओओओ३ओओओ भल त्यस्या अभो३ओओओ३ं यस्या उदरमामयत् ।
विश्वस्मादिन्द्र उत्तरो३म्

इदं जना उपश्रुत । नराशंसस्तविष्यते ।
षष्टिं सहस्रा नवतिं च कौरम आरुशमेषु दद्महो३म्
उष्ट्रा यस्य प्रवाहिणो वधूमन्तो द्विर्दश ।
वर्ष्मा रथस्य नि जिहीळते दिव ईषमाणा उपस्पृशो३म्
एष इषाय मामहे शतं निष्कान् दश स्रजः ।
त्रीणि शतान्यर्वतां सहस्रा दश गोनो३ं
वच्यस्व रेभ वच्यस्व वृक्षे न पक्वे शकुनः ।
निष्टे जिह्वा चर्चरीति क्षुरो न भुरिजोरिवो३म्
प्र रेभासो मनीषया वृथा गाव इवेरते ।
अमोतपुत्रका एषामुमोदका उपासतो३म्
प्र रेभ धियं भरस्व गोविदं वसुविदम् ।
देवत्रेमां वाचं शृणीहीषुनी वीरास्तारो३ं
राज्ञो विश्वजनीनस्य यो देवो मर्त्यॉं अ्त ।
वैश्वानरस्य सुष्टुतमा सुनोता परिक्षितो३म्
परिक्षिन्नः क्षेममकरत्तम अ्सनमा सरम् ।

अराय्यं कुर्वन् कौरव्यः पतिर्वदति जाययो३ं

कतरत आ हराणि दधि मन्थां परिस्रुतम् ।

जाया पतिं विपृच्छति राष्ट्रे राज्ञः परिक्षितो३म्

अभीव स्वः प्र जिहीते यवः पक्वः पयो बिलम् ।

जनः स भद्रमेधते राष्ट्रे राज्ञः परिक्षितो३म्

इन्द्रः कारुमबूबुधदुत्तिष्ठ विचरा चरन् ।

ममेदुग्रस्य चर्कृतिः सर्व इत्ते पृणादरो३म्

इह गावः प्र जायध्वमिहाश्वा इह पूरुषाः ।

इहो सहस्रदक्षिणासो वीरस्त्रता नि षीदतो३ं

नेमा इन्द्र गावो व्रिन्मो आसां गोपती रिषत् ।

मासाममित्रयुर्जन इन्द्र मा स्तेन ईशतो३म्

उप वो नर एमसि । सूक्तेन वचसा वयं भद्रेणा वचसा वयम् ।

चनो दधिष्व नो गिरो न व्रिष्येम कदा चनो३ं

यः सभेयो विदथ्यः सुत्वा यज्वा च पूरुषः ।

सूर्यं चामू रिशादसं तद्देवाः प्रागकल्पयो३ं

यो जाम्याः प्रत्यमदद्यः सखायं निनित्सति ।

ज्येष्ठो यदप्रचेतास्तदाहुरधरागितो३ं

यद्भद्रस्य पुरुषस्य पुत्रो भवति दाधृषिः ।

तद्विप्रो अब्रवीदुद्गगन्धर्वः काम्यं वचो३ं

योऽनाक्ताक्ष्यो अनभ्यक्तो मणीवो अहिरण्यवः ।

अब्रह्मा ब्रह्मणः पुत्रस्त्वोता कल्पेषु सम्मितो३ं

य आक्ताक्ष्यः स्वभ्यक्तः सुमणिः सुहिरण्ययः ।

सुब्रह्मा ब्रह्मणः पुत्रस्त्वोता कल्पेषु सम्मितो३म्

अप्रपाणा च वेशन्ता रेवाँ अप्रचतिश्च यः ।

अयभ्या कन्या कल्याणी त्वोता कल्पेषु सम्मितो३ं

सुप्रपाणा च वेशन्ता रेवाँ सुप्रचतिश्च यः ।

सुयभ्या कन्या कल्याणी त्वोता कल्पेषु सम्मितो३ं

परिवृक्ता च महिषी स्वस्त्या च युधिङ्गमः ।

स्वाशुरश्च आयामी त्वोता कल्पेषु सम्मितो३ं

वावाता च महिष्वणिस्या च युधिङ्गमः ।
अनाशुरश्च आयामी त्वोता कल्पेषु सम्मितो३ं
यदिन्द्रादो दाशराज्ञेऽमानुषं विगाहथाः ।
विरूपः सर्वस्मा आसीत् सदृगक्षाय वञ्चतो३ं
त्वं विषाक्षं मघवन्नम्रं पर्याकरोरभि ।
त्वं रौहिणं व्यास्यस्त्वं वृत्रस्याभिनच्छिरो३ं
यः पर्वतान् व्यदधाद्यो अपो व्यगाहथाः ।
यो वृत्रं वृत्रहन्नहन् तस्मा इन्द्र नमोऽस्तु तो३म्
प्रष्टिं धावन्तं हर्योरोच्चैःश्रवसमब्रवम् ।
स्वस्त्यश्व जैत्रायेन्द्र मा वहतो रथो३ं
यत्त्वा श्वेता उच्चैःश्रवसं हर्योर्युञ्जन्ति दक्षिणम् ।
मूर्धानमश्वं देवानां बिभ्रदिन्द्रं महीयतो३म्

एता अश्वा आप्लवन्ते । प्रतीपं प्रातिसत्वनम् । तासामेका हरिक्लिका । हरिक्लिके किमिच्छसि । साधुं पुत्रं हिरण्ययम् । क्वाह तं परास्यः । यत्रामूस्तिस्रः शिंशपाः । परि त्रयः पृदाकवः । शृङ्गं धमन्त आसते । अयं वहाते अवहि । स इत्था कं स एव कम् । स घा घ ते सघा घ मे । गोमी घ गोमिनीरभि । पुमां भूम्ने निनित्ससि । बल्बबथो इति । बल्बबो अथो इति । अजकोऽरकोऽविका । अश्वस्य वारो गोः शफः । केशिनी श्येनी एनीव । अनामयोपजिह्विका । को अम्ब हुलमायुनि । को अर्जुन्याः पयः । को असिक्न्याः पयः । एतं पृच्छ कुहं पृच्छ । कुहा कं पक्वकं पृच्छ । य आयन्ति श्वभिष्कुभिः । अब्जन्तः कुभायवः । आमनको मनस्थकः । देवत्तः प्रतिजूर्यः । पिनष्टि पर्तिका हविः । प्र बुद्बुधो मथायति । शुङ्ग उत्पत । मा त्वाति सखा नो वदत् । वशायाः पुत्रमायन् तम् । इरा चेन्द्रममन्दत । इयन्नियन्निति । अथो इयन्निति । अथो ज्यायस्तरो भुवत् । इयं यका शलाकका । आ मिनोति नि भज्यते । तस्या अनुनिभञ्जनम् । वरुणो याति बभ्रुभिः । शतं बभ्रोरभीशुभिः । शतं कशा हिरण्ययीः । शतं रथा हिरण्ययाः । आहलकुः शवर्तकः । आयवनेन तेजनी । शफेन पीव ओहते । वनिष्ठुनोप नृत्यति । इमं मह्यमदुरिति । ते वृक्षाः सह तिष्ठन्ति । पाकवलिः शतवलिः । अश्वत्थः खदिरो धवः । अरदुः परमः शये । हत इव पापपूरुषः । अदोहमित् पीयूषकम् । द्वौ च हस्तिनो दृती । अध्यर्धं च परस्वतः । आदलाबुकमेककम् । अलाबुकं निखातकम् । कर्करिको निखातकः । तद्वात उन्मथायति । कुलायं करवाँ इति । उग्रं वल्पदाततम् । न वल्पदनानतम् । क एषां कर्करिं लिखत् । क एषां दुन्दुभिं हनत् । यदीं हनत् कथं हनत् । दैलीं हनत् कथं हनत् । पर्याकारं पुनः पुनो३ं

विततौ किरणौ द्वौ तावा पिनष्टि पूरुषः । न वै कुमारि तत्तथा यथा कुमारि मन्यसो३म्
मातुष्टे किरणौ द्वौ नीवीतः पुरुषादृते । न वै कुमारि तत्तथा यथा कुमारि मन्यसो३ं
निगृह्य कर्णकौ द्वौ निरायच्छसि मध्यमम् । न वै कुमारि तत्तथा यथा कुमारि मन्यसो३म्
उत्तानायै शयानायै तिष्ठन्नेवाव गूहसि । न वै कुमारि तत्तथा यथा कुमारि मन्यसो३ं
श्लक्ष्णायां श्लक्ष्णिकायां श्लक्ष्णमेवाव गूहसि । न वै कुमारि तत्तथा यथा कुमारि मन्यसो३म्
अव श्लक्ष्णमभ्रशदन्तर्लोमवति ह्रदे । न वै कुमारि तत्तथा यथा कुमारि मन्यसो३म्

इहेत्था प्रागपागुदगधरागरला उदभर्त्सतो३म् । इहेत्था प्रागपागुधगदराग् वत्साः प्रुपन्त आसतो३म् ।
इहेत्था प्रागपागुधगदराक् स्थालीपको विलीयतो३म् । इहेथा प्रागपागुधगदराक् सिलीपुच्छो विलीयतो३म् ।

भुगित्यभिगतः । शरित्यभिष्ठितः । फलित्यपक्रान्तः ।

वीमे देवा अक्रंसताध्वर्यो क्षिप्रं प्र चर । सुशस्तिरिद् गवामस्यति प्रखिदसो महत् ।

आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन् ।
तां ह जरितर्न प्रत्यायन् तामु ह जरितः प्रत्यायन् ।
तां ह जरितर्न प्रत्यगृभ्णन् तामु ह जरितः प्रत्यगृभ्णन् ।
अहानेतसन्नविचेतनानि जज्ञानेतसन्नपुरोगवासः ।
उत श्वेता आशुपत्वा उतो पद्याभिर्वसिष्ठः । उतेमाशुमानं पिपर्ति ।
आदित्या रुद्रा वसवस्त्वेळते इदं राधः प्रति गृभ्णीह्यङ्गिरः ।
इदं राधो बृहत्पृथु देवा ददत्वा वरम् ।
तद्वो अस्तु सुचेतनं युष्मे अस्तु दिवे दिवे । प्रत्येव गृभायतो३म् ।

त्वमिन्द्र शर्मन्नरिणा हव्यं परावतेभ्यः । विप्राय स्तुवते वसु ऋजुरिच्छ्रवसे वहो३ं
त्वमिन्द्र कपोताय च्छिन्नपक्षाय वञ्चते । श्यामाकं पक्वं विरुज वारस्मा अकृणोर्बहो३म्
आरङ्गरो वावदीति त्रेधा बद्धो वरत्रयाः । इरामु ह प्र शंसत्यनिरामप सेधतो३म्

यदस्याः अंहुभेद्याः । पृथु स्थूरमुपातसत् ।
मुष्को३ओओओओओओ३ओओओओओओ३ओओओ इदस्या एजतो३ओओओ३ं गोशफे शकुलाविवो३ं

यदा स्थूरेण पससा । अणू मुष्का उपावधीत् ।

विश्वो३ओओओओओओ३ओओओओओओ३ओओओ चावस्यार्दतो३ओओओ३ं सिकतास्विव गर्दभो३ं

यदल्पिका स्वल्पिका । कर्कन्धुकेव पच्यते ।

वासो३ओओओओओओ३ओओओओओओ३ओओओ न्तिकमिव तेज३ओओओ३ं यभ्यमाना वि नम्यतो३ं

यद्देवासो ललाबुकं । प्र विष्टीमिनमाविषुः ।

सक्थ्नो३ओओओओओओ३ओओओओओओ३ओओओ ते दश्यते नारो३ओओओ३ं सत्यस्याक्षी भगो यथो३म्

महानग्न्युप ब्रूते । अश्वस्या वेशितं पसः ।

ईदो३ओओओओओओ३ओओओओओओ३ओओओ ॅ फलस्य वृक्षस्यो३ओओओ३ं शूर्पं शूर्पं भजेमहो३म्

महानग्न्यदृसं हि सः । अक्रन्ददस्तमासदत् ।

शक्नो३ओओओओओओ३ओओओओओओ३ओओओ कामना भुवो३ओओओ३ं मशकं सक्थ्युतो३म्

महानग्नुलूखलम् । अतिक्रामन्त्यब्रवीत् ।

यथो३ओओओओओओ३ओओओओओओ३ओओओ व ते वनस्पतो३ओओओ३मपि घ्नन्ति तथैव मो३ं

महानग्नी कृकवाकुम् । शम्यया परिधावति ।

इदो३ओओओओओओ३ओओओओओओ३ओओओ न विद्म तेजनो३ओओओ३ं शीर्ष्णा भवति धानिको३म्

महानग्नी महानग्नम् । धावन्तमनु धावति ।

इमो३ओओओओओओ३ओओओओओओ३ओओओ स्तदस्य गा रक्षो३ओओओ३ं यम मामद्ध्योदनो३म्

महान् वै भदो बिल्वः । महान् पक्व उदुम्बरः ।

महो३ओओओओओओ३ओओओओओओ३ओओओ अभिज्ञु बाधतो३ओओओ३ं महतः साधु खोदनो३म्

कपृन्नरः कपृथमुद्दधातन । चोदयत खुदत वाजसातये ।

निष्टो३ओओओओओओ३ओओओओओओ३ओओओ ग्र्यः पुत्रमा च्यावयोतयो३ओओओ३मिन्द्रं सबाध इह सोमपीतयो३म्

यद्ध प्राचीरजगन्तोरो । मण्डूरधाणिकीः ।

हतो३ओओओओओओ३ओओओओओओ३ओओओ इन्द्रस्य शत्रवो३ओओओ३ं सर्वे बुद्बुधयाशवो३ं

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत् प्र ण आयूंषि तारिषो३ं

सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।

पवित्रवन्तो अक्षरन्देवान्गच्छन्तु वो मदो३म् (९–१०१–४)

इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् ।

सोमः पती रयीणां सखेन्द्रस्य दिवे दिवो३म् (९–१०१–६)

सहस्रधारः पवते समुद्रो वाचमीङ्ख्यः ।
वाचस्पतिर्मखस्यते विश्वस्येशान ओजसो३म् (९–१०१–५)
अव द्रप्सो अंशुमतीमतिष्ठत् । इयानः कृष्णो दशभिः सहस्रो३म्
आवत्तमिन्द्रः शच्या धमन्तम् । अप स्नेहितीर्नृमणा अधत्तो३ं (८–९६–१३
द्रप्समपश्यं विषुणे चरन्तम् । उपह्वरे नद्यो अंशुमत्यो३ं
नभो न कृष्णमवतस्थिवांसम् । इष्यामि वो वृषणो युध्यताजो३म्
अध द्रप्सो अंशुमत्याः । उपस्थेऽधारयत्तन्वं तित्विषाणो३ं
विशो अदेवीरभ्याचरन्तीः । बृहस्पतिना युजेन्द्रः ससाहो३म् (८–९६–१५)
अच्छा म इन्द्रं मतयः स्वर्विदः । सध्रीचीर्विश्वा उशतीरनूषतो३म्
परि ष्वजन्ते जनयो यथा पतिम् । मर्यं न शुन्ध्युं मघवानमूतयो३ं
न घा त्वद्रिगप वेति मे मनः । त्वे इत्कामं पुरुहूत शिश्रयो३ं
राजेव दस्म नि षदोऽधि बर्हिषि । अस्मिन्त्सु सोमेऽवपानमस्तु तो३ं
विषूवृदिन्द्रो अमतेरुत क्षुधः । स इद्रायो मघवा वस्व ईशतो३ं
तस्येदिमे प्रवणे सप्त सिन्धवः । वयो वर्धन्ति वृषभस्य शुष्मिणो३ं
वयो न वृक्षं सुपलाशमासदन् । सोमास इन्द्रं मन्दिनश्चमूषदो३म्
प्रैषामनीकं शवसा दविद्युतत् । विदत्स्वर्मनवे ज्योतिरार्यो३ं
कृतं न श्वघ्नी वि चिनोति देवने । संवर्गं यन्मघवा सूर्यं जयो३ं
न तत्ते अन्यो अनु वीर्यं शकत् । न पुराणो मघवन्नोत नूतनो३ं
विशं विशं मघवा पर्यशायत । जनानां धेना अवचाकशद्वृषो३ं
यस्याह शक्रः सवनेषु रण्यति । स तीव्रैः सोमैः सहते पृतन्यतो३म्
आपो न सिन्धुमभि यत्समक्षरन् । सोमास इन्द्रं कुल्याइव ह्रदो३ं
वर्धन्ति विप्रा महो अस्य सादने । यवं न वृष्टिर्दिव्येन दानुनो३ं
वृषा न क्रुद्धः पतयद्रजः स्वा । यो अर्यपत्नीरकृणोदिमा अपो३ं
स सुन्वते मघवा जीरदानवे । अविन्दज्ज्योतिर्मनवे हविष्मतो३म्
उज्जायतां परशुर्ज्योतिषा सह । भूया ऋतस्य सुदुघा पुराणवो३ं
वि रोचतामरुषो भानुना शुचिः । स्वर्ण शुक्रं शुशुचीत सत्पतो३ं
गोभिष्टरेमामतिं दुरेवाम् । यवेन क्षुधं पुरुहूत विश्वो३ं
वयं राजभिः प्रथमा धनानि । अस्माकेन वृजनेना जयेमो३ं
शो३ंसावो३म् बृहस्पतिर्नः परि पातु पश्चात् । उतोत्तरस्मादधरादघायो३म्

**इन्द्रः पुरस्तादुत मध्यतो नः । सखा सखिभ्यो वरिवः कृणोतो३म्** (१०।४३।१–११) इति त्रिः परिदध्यात् ।

**उक्थं वाचीन्द्राय देवेभ्यः** इति शस्त्वा जपति ।

**ये३ यजामहे बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य ।**

**धत्तं रयिं स्तुवते कीरये चिद्यूयं पात स्वस्तिभिः सदा ना३ वौ३षट् ॥** (७।९७।१०)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । स्वेन प्रातःसवनकीयेन समो भक्षविधिः ।

**अच्छावाकशस्त्रम् ।**

नार्मेधस्तोत्रमेकविंशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते  प्रतिहारे

**हिम् भूर्भुवःस्वरो३म् । अध्वर्यो शोशो३ंसावो३ं**

**अधा हीन्द्र गिर्वण उप त्वा कामान्महः ससृज्महे । उदेव यन्त उदभो३ं**

**वार्ण त्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि । वावृध्वांसं चिदद्रिवो दिवे दिवो३ं**

**युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे । इन्द्रवाहा वचोयुजो३ं** (८।९८।७–९)

**प्र व इन्द्राय वृत्रहन्तमाय । विप्रा गाथं गायत यज्जुजोषो३म्**

**अर्चन्त्यर्कं देवतास्वर्काः । आ स्तोभति श्रुतो युवा स इन्द्रो३म्**

**उपप्रक्षेमधुमति क्षियन्तः । पुष्यन्तो रयिं धीमहे तमिन्द्रो३म्**

**अधा हीन्द्र गिर्वण उप त्वा कामान्महः ससृज्महे । उदेव यन्त उदभो३ं**

**वार्ण त्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि । वावृध्वांसं चिदद्रिवो दिवे दिवो३ं**

**युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे । इन्द्रवाहा वचोयुजो३ं** (८।९८।७–९)

**शो३ंसावो३म् इयं त इन्द्र गिर्वणो रातिः क्षरति सुन्वतः । मन्दानो अस्य बर्हिषो वि राजसो३ं**

**नूनं तदिन्द्र दद्धि नो यत्त्वा सुन्वन्त ईमहे । रयिं न श्चित्रमा भरा स्वर्विदो३ं**

**स्तोता यत्ते विचर्षणिरतिप्रशर्धयद् गिरः । वया इवानु रोहते जुषन्त यो३ं** (८।१३।४–६)

**विश्वतो दावन्विश्वतो न आ भर । यं त्वा शविष्ठमीमहो३ं**

**स सुप्रणीते नृतमः स्वराट् । असि मंहिष्ठो वाजसातयो३ं**

**त्वं ह्येक ईशिषे । अनादमृक्त ओजसो३म्**

**इयं त इन्द्र गिर्वणो रातिः क्षरति सुन्वतः । मन्दानो अस्य बर्हिषो वि राजसो३ं**

**नूनं तदिन्द्र दद्धि नो यत्त्वा सुन्वन्त ईमहे । रयिं न श्चित्रमा भरा स्वर्विदो३ं**

**स्तोता यत्ते विचर्षणिरतिप्रशर्धयद् गिरः । वया इवानु रोहते जुषन्त यो३ं** (८।१३।४–६)

**शो३ंसावो३म् प्र वो महे मतयो यन्तु विष्णवे । मरुत्वते गिरिजा एवयामरुत् ।**

प्र शो३ओओओओओओ३ओओओओओओ३ओओओ र्धाय प्रयज्यवे सुखादयो३ओओओ३ं तवसे भन्ददिष्टये । धुनिव्रताय शवसो३म्

प्र ये जाता महिना ये च नु स्वयम् । प्र विद्मना ब्रुवत एवयामरुत् ।

क्रत्वो३ओओओओओओ३ओओओओओओ३ओओओ तद्वो मरुतो नाधृषे शवो ३ओओओ३ं दाना मह्ना तदेषाम् । अधृष्टासो नाद्रयो३म्

प्र ये दिवो बृहतः शृण्विरे गिरा सुशुक्वानः सुभ्व एवयामरुत् ।

न यो३ओओओओओओ३ओओओओओओ३ओओओ षामिरी सधस्थ ईष्ट ओ३ओओओ३मग्नयो न स्वविद्युतः । प्र स्यन्द्रासो धुनीनो३ं

स चक्रमे महतो निरुरुक्रमः । समानस्मात्सदस एवयामरुत् ।

यदो३ओओओओओओ३ओओओओओओ३ओओओ युक्त त्मना स्वादधि ष्णुभो३ओओओ३ं विष्पर्धसो विमहसः । जिगाति शेवृधो नृभो३ं

स्वनो न वोऽमवान्रेजयद्वृषा । त्वेषो ययिस्तविष एवयामरुत् ।

येनो३ओओओओओओ३ओओओओओओ३ओओओ सहन्त ऋञ्जत स्वरोचिषो३ओओओ३ं स्थारश्मानो हिरण्ययाः । स्वायुधास इष्मिणो३म्

अपारो वो महिमा वृद्धशवसः । त्वेषं शवोऽवत्वेवयामरुत् ।

स्थातो३ओओओओओओ३ओओओओओओ३ओओओ रो हि प्रसितौ संदृशि स्थनो३ओओओ३ं ते न उरुष्यता निदः । शुशुक्वांसो नाग्नयो३ं

ते रुद्रासः सुमखा अग्नयो यथा । तुविद्युम्ना अवन्त्वेवयामरुत् ।

दीर्घो३ओओओओओओ३ओओओओओओ३ओओओ पृथु पप्रथे सद्म पार्थिवो३ओओओ३ं येषामज्मेष्वा महः । शर्धांस्यद्भुतैनसो३म्

अद्वेषो नो मरुतो गातुमेतन । श्रोता हवं जरितुरेवयामरुत् ।

विष्णो३ओओओओओओ३ओओओओओओ३ओओओ र्महः समन्यवो युयोतनो३ओओओ३ं स्मद्रथ्यो न दंसना । अप द्वेषांसि सनुतो३ं

गन्ता नो यज्ञं यज्ञियाः सुशमि । श्रोता हवमरक्ष एवयामरुत् ।

ज्येष्ठो३ओओओओओओ३ओओओओओओ३ओओओ सो न पर्वतासो व्योमनो३ओओओ३ं यूयं तस्य प्रचेतसः । स्यात दुर्धर्तवो निदो३म् (५–८७–९)

ऋतुर्जनित्री तस्या अपस्परि । मक्षू जात आविशद्यासु वर्धतो३ं

तदाहना अभवत्पिप्युषी पयः । अंशोः पीयूषं प्रथमं तदुक्थ्यो३ं

सध्रीमा यन्ति परि बिभ्रतीः पयः । विश्वप्स्न्याय प्र भरन्त भोजनो३ं

समानो अध्वा प्रवतामनुष्यदे । यस्ताकृणोः प्रथमं सास्युक्थ्यो३म्
अन्वेको वदति यद्ददाति तत् । रूपा मिनन्तदपा एक ईयतो३ं
विश्वा एकस्य विनुदस्तितिक्षते । यस्ताकृणोः प्रथमं सास्युक्थ्यो३म्
प्रजाभ्यः पुष्टिं विभजन्त आसते । रयिमिव पृष्ठं प्रभवन्तमायतो३म
असिन्वन्दंष्ट्रैः पितुरत्ति भोजनम् । यस्ताकृणोः प्रथमं सास्युक्थ्यो३म्
अधाकृणोः पृथिवीं संदृशे दिवे । यो धौतीनामहिहन्नारिणक्पथो३ं
तं त्वा स्तोमेभिरुदभिर्न वाजिनम् । देवं देवा अजनन्त्सास्युक्थ्यो३ं
यो भोजनं च दयसे च वर्धनम् । आर्द्रादा शुष्कं मधुमद्दुदोहिथो३ं
स शेवधिं नि दधिषे विवस्वति । विश्वस्यैक ईशिषे सास्युक्थ्यो३ं
यः पुष्पिणीश्च प्रस्वश्च धर्मणा । अधि दाने व्यवनीरधारयो३ं
यश्चासमा अजनो दिद्युतो दिवः । उरुरूर्वाँ अभितः सास्युक्थ्यो३ं
यो नार्मरं सहवसुं निहन्तवे । पृक्षाय च दासवेशाय चावहो३म्
ऊर्जयन्त्या अपरिविष्टमास्यम् । उतैवाद्य पुरुकृत् सास्युक्थ्यो३ं
शतं वा यस्य दश साकमाद्यः । एकस्य श्रुष्टौ यद्ध चोदमाविथो३ं
अरज्जौ दस्यून्त्समुनब् दभीतये । सुप्राव्यो अभवः सास्युक्थ्यो३ं
विश्वेदनु रोधना अस्य पौंस्यम् । ददुरस्मै दधिरे कृत्नवे धनो३ं
षळस्तभ्ना विष्टिरः पञ्च संदृशः । परि परो अभवः सास्युक्थ्यो३ं
सुप्रवाचनं तव वीर वीर्यम् । यदेकेन क्रतुना विन्दसे वसो३ं
जातूष्ठिरस्य प्र वयः सहस्वतः । या चकर्थ सेन्द्र विश्वास्युक्थ्यो३म्
अरमयः सरपसस्तराय कम् । तुर्वीतये च वय्याय च स्रुतो३ं
नीचा सन्तमुदनयः परावृजम् । प्रान्धं श्रोणं श्रवयन्त्सास्युक्थ्यो३म्
अस्मभ्यं तद्वसो दानाय राधः । समर्थयस्व बहु ते वसव्यो३म्
इन्द्र यच्चित्रं श्रवस्या अनु द्यून् । बृहद्वदेम विदथे सुवीरो३ं (२।१३।१–१३)
नू मर्तो दयते सनिष्यन् । यो विष्णव उरुगायाय दाशो३म्
प्र यः सत्राचा मनसा यजाते । एतावन्तं नर्यमाविवासो३ं
त्वं विष्णो सुमतिं विश्वजन्याम् । अप्रयुतामेवयावो मतिं दो३म्
पर्चो यथा नः सुवितस्य भूरेः । अश्वावतः पुरुश्चन्द्रस्य रायो३ं
त्रिर्देवः पृथिवीमेष एताम् । वि चक्रमे शतर्चसं महित्वो३म्
प्र विष्णुरस्तु तवसस्तवीयान् । त्वेषं ह्यस्य स्थविरस्य नामो३ं

वि चक्रमे पृथिवीमेष एताम् । क्षेत्राय विष्णुर्मनुषे दशस्योꣳ३

ध्रुवासो अस्य कीरयो जनासः । उरुक्षितिं सुजनिमा चकारो३म्

प्र तत्ते अद्य शिपिविष्ट नाम । अर्यः शंसामि वयुनानि विद्वोꣳ३

तं त्वा गृणामि तवसमतव्यान् । क्षयन्तमस्य रजसः पराकोꣳ३

किमित्ते विष्णो परिचक्ष्यं भूत् । प्र यद्ववक्षे शिपिविष्टो अस्मो३म्

मा वर्पो अस्मदप गूह एतत् । यदन्यरूपः समिथे बभूथोꣳ३

वषट् ते विष्णवास आ कृणोमि । तन्मे जुषस्व शिपिविष्ट हव्योꣳ३

वर्धन्तु त्वा सुष्टुतयो गिरो मे । यूयं पात स्वस्तिभिः सदा नो३म् (७।१००।१–७)

भवा मित्रो न शेव्यो घृतासुतिः । विभूतद्युम्न एवया उ सप्रथो३म्

अधा ते विष्णो विदुषा चिदर्ध्यः । स्तोमो यज्ञश्च राध्यो हविष्मतोꣳ३

यः पूर्व्याय वेधसे नवीयसे । सुमज्जानये विष्णवे ददाशतोꣳ३

यो जातमस्य महतो महि ब्रवत् । सेदु श्रवोभिर्युज्यं चिदभ्यसोꣳ३

तमु स्तोतारः पूर्व्यं यथा विद । ऋतस्य गर्भं जनुषा पिपर्तनो३म्

आस्य जानन्तो नाम चिद्विवक्तन । महस्ते विष्णो सुमतिं भजामहोꣳ३

तमस्य राजा वरुणस्तमश्विना । क्रतुं सचन्त मारुतस्य वेधसोꣳ३

दाधार दक्षमुत्तममहर्विदम् । व्रजं च विष्णुः सखिवाँ अपोर्णुतो३म्

आ यो विवाय सचथाय दैव्यः । इन्द्राय विष्णुः सुकृते सुकृत्तरोꣳ३

वेधा अजिन्वत् त्रिषधस्थ आर्यम् । ऋतस्य भागे यजमानमाभजोꣳ३ [१।१५६।१–६]

सं वां कर्मणा समिषा हिनोमि । इन्द्राविष्णू अपसस्पारे अस्योꣳ३

जुषेथां यज्ञं द्रविणं च धत्तम् । अरिष्टैर्नः पथिभिः पारयन्तोꣳ३

या विश्वासां जनितारा मतीनाम् । इन्द्राविष्णू कलशा सोमधानो३म्

प्र वां गिरः शस्यमाना अवन्तु । प्र स्तोमासो गीयमानासो अर्को३म्

इन्द्राविष्णू मदपती मदानाम् । आ सोमं यातं द्रविणो दधानोꣳ३

सं वामञ्जन्त्वक्तुभिर्मतीनाम् । सं स्तोमासः शस्यमानास उक्थो३म्

आ वामश्वासो अभिमातिषाहः । इन्द्राविष्णू सधमादो वहन्तोꣳ३

जुषेथां विश्वा हवना मतीनाम् । उप ब्रह्माणि शृणुतं गिरो मो३म्

इन्द्राविष्णू तत्पनयाय्यं वाम् । सोमस्य मद उरु चक्रमाथो३म्

अकृणुतमन्तरिक्षं वरीयः । अप्रथतं जीवसे नो रजांसो३म्

इन्द्राविष्णू हविषा वावृधाना । अग्राद्वाना नमसा रातहव्योꣳ३

**घृतासुती द्रविणं धत्तमस्मे । समुद्र स्थः कलशः सोमधानो३म्**

**इन्द्राविष्णू पिबतं मध्वो अस्य । सोमस्य दस्रा जठरं पृणेथो३म्**

**आ वामन्धांसि मदिराण्यग्मन् । उप ब्रह्माणि शृणुतं हवं मो३म्**

**शो३ंसावो३म् उभा जिग्यथुर्न परा जयेथे । न परा जिग्ये कतरश्चनैनो३म्**

**इन्द्रश्च विष्णो यदपस्पृधेथाम् । त्रेधा सहस्रं वि तद्वैरयेथो३म् ॥** (६।६९।१–८) इति त्रिः परिदध्यात् ।

**उक्थं वाचीन्द्राय देवेभ्यः** इति शस्त्वा जपति ।

**ये३ यजामह इन्द्राविष्णू मदपती मदानामा सोमं यातं द्रविणो दधाना ।**

**सं वामञ्जन्त्वक्तुभिर्मतीनां सं स्तोमासः शस्यमानास उक्थै३ वौषट् ॥** (६।६९।३)

**सोमस्याग्ने वीही३ वौ३षट् ॥** द्विर्वागोजः । स्वेन प्रातःसवनकीयेन समो भक्षविधिः ।

अतिरिक्तोक्थानि ॥

**होतृशस्त्रम् ।**

आकूपारस्तोत्रं पञ्चदशस्तोमम् । प्रस्तोत्रा **एष** इति प्रोक्ते प्रतिहारे–

**हिम् भूर्भुवःस्वरो३म् । शो३ंसावो३म्**

**जराबोध तद्विविᳲ विशे विशे यज्ञियाय । स्तोमं रुद्राय दृशीकम् ॥ (१–२७–१०)**

**स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः । धिये वाजाय हिन्वतु ॥ (१–२७–११)**

**स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः । उक्थैरग्निर्बृहद्भानुः ॥ (१–२७–१२)**

**जरमाणः समिध्यसे देवेभ्यो हव्यवाहन । तं त्वा हवन्त मर्त्याः ॥ (१०–११८–५)**

**तं मर्ता अमर्त्यं घृतेनाग्निं सपर्यत । अदाभ्यं गृहपतिम् ॥ (१०–११८–६)**

**अदाभ्येन शोचिषाग्ने रक्षस्त्वं दह । गोपा ऋतस्य दीदिहि ॥ (१०–११८–७)**

**अग्निनेन्द्रेण वरुणेन विष्णुनादित्यै रुद्रैर्वसुभिः सचाभुवा ।**

**सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना ॥ (८–३५–१)**

**विश्वाभिर्धीभिर्भुवनेन वाजिना दिवा पृथिव्याद्रिभिः सचाभुवा ।**

**सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना ॥ (८–३५–२)**

**विश्वैर्देवैस्त्रिभिरेकादशैरिहाद्भिर्मरुद्भिर्भृगुभिः सचाभुवा ।**

**सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना ॥ (८–३५–३)**

**जुषेथां यज्ञं बोधतं हवस्य मे विश्वेह देवौ सवनाव गच्छतम् ।**

**सजोषसा उषसा सूर्येण चेषं नो वोळ्हमश्विना ॥ (८–३५–४)**

स्तोमं जुषेथां युवशेव कन्यनां विश्वेह देवौ सवनाव गच्छतम् ।
सजोषसा उषसा सूर्येण चेषं नो वोळ्हमश्विना ॥ (८–३५–५)
गिरो जुषेथामध्वरं जुषेथां विश्वेह देवौ सवनाव गच्छतम् ।
सजोषसा उषसा सूर्येण चेषं नो वोळ्हमश्विना ॥ (८–३५–६)
हारिद्रवेव पतथो वनेदुप सोमं सुतं महिषेवाव गच्छथः ।
सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥ (८–३५–७)
हंसाविव पतथो अध्वगाविव सोमं सुतं महिषेवाव गच्छथः ।
सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥ (८–३५–८)
श्येनाविव पतथो हव्यदातये सोमं सुतं महिषेवाव गच्छथः ।
सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥ (८–३५–९)
पिबतं च तृप्णुतं चा च गच्छतं प्रजां च धत्तं द्रविणं च धत्तम् ।
सजोषसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥ (८–३५–१०)
जयतं च प्र स्तुतं च प्र चावतं प्रजां च धत्तं द्रविणं च धत्तम् ।
सजोषसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥ (८–३५–११)
हतं च शत्रून्यततं च मित्रिणः प्रजां च धत्तं द्रविणं च धत्तम् ।
सजोषसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥ (८–३५–१२)
मित्रावरुणवन्ता उत धर्मवन्ता मरुत्वन्ता जरितुर्गच्छथो हवम् ।
सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥ (८–३५–१३)
अङ्गिरस्वन्ता उत विष्णुवन्ता मरुत्वन्ता जरितुर्गच्छथो हवम् ।
सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥ (८–३५–१४)
ऋभुमन्ता वृषणा वाजवन्ता मरुत्वन्ता जरितुर्गच्छथो हवम् ।
सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥ (८–३५–१५)
ब्रह्म जिन्वतमुत जिन्वतं धियो हतं रक्षांसि सेधतममीवाः ।
सजोषसा उषसा सूर्येण च सोमं सुन्वतो अश्विना ॥ (८–३५–१६)
क्षत्रं जिन्वतमुत जिन्वतं नॄन्हतं रक्षांसि सेधतममीवाः ।
सजोषसा उषसा सूर्येण च सोमं सुन्वतो अश्विना ॥ (८–३५–१७)
धेनूर्जिन्वतमुत जिन्वतं विशो हतं रक्षांसि सेधतममीवाः ।
सजोषसा उषसा सूर्येण च सोमं सुन्वतो अश्विना ॥ (८–३५–१८)
अत्रेरिव शृणुतं पूर्व्यस्तुतिं श्यावाश्वस्य सुन्वतो मदच्युता ।

सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यम् ॥ (८–३५–१९)

सर्गाँ इव सृजतं सुष्टुतीरुप श्यावाश्वस्य सुन्वतो मदच्युता ।

सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यम् ॥ (८–३५–२०)

रश्मीँरिव यच्छतमध्वराँ उप श्यावाश्वस्य सुन्वतो मदच्युता ।

सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यम् ॥ (८–३५–२१)

अर्वाग् रथं नि यच्छतं पिबतं सोम्यं मधु ।

आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥ (८–३५–२२)

नमोवाके प्रस्थिते अध्वरे नरा विवक्षणस्य पीतये ।

आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥ (८–३५–२३)

स्वाहाकृतस्य तृम्पतं सुतस्य देवावन्धसः ।

आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥ (८–३५–२४)

आ भात्यग्निरुषसामनीकमुद् विप्राणां देवया वाचो अस्थुः ।

अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छो३ं

न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।

दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शम्भविष्ठो३म्

उता यातं सङ्गवे प्रातरह्नो मध्यन्दिन उदिता सूर्यस्य ।

दिवा नक्तमवसा शन्तमेन नेदानीं पीतिरश्विना ततानो३म् ॥

इदं हि वां प्रदिवि स्थानमोक इमे गृहा अश्विनेदं दुरोणम् ।

आ नो दिवो बृहतः पर्वतादाद्भ्यो यातमिषमूर्जं वहन्तो३ं

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।

आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानो३म् [५ ।७६ ।१–५] [२०२]

क्षेत्रस्य पतिना वयं हितेनेव जयामसि ।

गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥ (४–५७–१)

यथा होतर्मनुषो देवताता यज्ञेभिः सूनो सहसो यजासि ।

एवा नो अद्य समना समानानुशन्न अग्न उशतो यक्षि देवान् ॥ (६–४–१)

यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य ।

सर्वं तदिन्द्र ते वशे ॥ (८–९३–४)

यद्वा प्रवृद्ध सत्पते न मरा इति मन्यसे ।
उतो तत्सत्यमित्तव ॥ (८–९३–५)
ये सोमासः परावति ये अर्वावति सुन्विरे ।
सर्वांस्ताँ इन्द्र गच्छसि ॥ (८–९३–६)
उद् घेदभि श्रुतामघं वृषभं नर्यापसम् ।
अस्तारमेषि सूर्य ॥ (८–९३–१)
नव यो नवतिं पुरो बिभेद बाह्वोजसा ।
अहिं च वृत्रहावधीत् ॥ (८–९३–२)
स न इन्द्रः शिवः सखाश्वावद्गोमद्यवमत् ।
उरुधारेव दोहते ॥ (८–९३–३)
आ नो विश्वाभिरूतिभिरश्विना गच्छतं युवम् ।
दस्रा हिरण्यवर्तनी पिबतं सोम्यं मधु ॥ (८–८–१)
आ नूनं यातमश्विना रथेन सूर्यत्वचा ।
भुजी हिरण्यपेशसा कवी गम्भीरचेतसा ॥ (८–८–२)
आ यातं नहुषस्पर्यान्तरिक्षात्सुवृक्तिभिः ।
पिबाथो अश्विना मधु कण्वानां सवने सुतम् ॥ (८–८–३)
आ नो यातं दिवस्पर्यान्तरिक्षादधप्रिया ।
पुत्रः कण्वस्य वामिह सुषाव सोम्यं मधु ॥ (८–८–४)
आ नो यातमुपश्रुत्यश्विना सोमपीतये ।
स्वाहा स्तोमस्य वर्धना प्र कवी धीतिभिर्नरा ॥ (८–८–५)
यच्चिद्धि वां पुर ऋषयो जुहूरेऽवसे नरा ।
आ यातमश्विना गतमुपेमां सुष्टुतिं मम ॥ (८–८–६)
दिवश्चिद्रोचनादध्या नो गन्तस्वर्विदा ।
धीभिर्वत्सप्रचेतसा स्तोमेभिर्हवनश्रुता ॥ (८–८–७)
किमन्ये पर्यासतेऽस्मत्स्तोमेभिरश्विना ।
पुत्रः कण्वस्य वामृषिर्गीर्भिर्वत्सो अवीवृधत् ॥ (८–८–८)
आ वां विप्र इहावसेऽह्वत्स्तोमेभिरश्विना ।
अरिप्रा वृत्रहन्तमा ता नो भूतं मयोभुवा ॥ (८–८–९)
आ यद्वां योषणा रथमतिष्ठद्वाजिनीवसू ।

विश्वान्यश्विना युवं प्र धीतान्यगच्छतम् ॥ (८–८–१०)

अतः सहस्रनिर्णिजा रथेना यातमश्विना ।

वत्सो वां मधुमद्वचोऽशंसीत्काव्यः कविः ॥ (८–८–११)

पुरुमन्द्रा पुरूवसू मनोतरा रयीणाम् ।

स्तोमं मे अश्विनाविममभि वह्नी अनूषाताम् ॥ (८–८–१२)

आ नो विश्वान्यश्विना धत्तं राधांस्यह्रया ।

कृतं न ऋत्वियावतो मा नो रीरधतं निदे ॥ (८–८–१३)

यन्नासत्या परावति यद्वा स्थो अध्यम्बरे ।

अतः सहस्रनिर्णिजा रथेना यातमश्विना ॥ (८–८–१४)

यो वां नासत्यावृषिर्गीर्भिर्वत्सो अवीवृधत् ।

तस्मै सहस्रनिर्णिजमिषं धत्तं घृतश्चुतम् ॥ (८–८–१५)

प्रास्मा ऊर्जं घृतश्चुतमश्विना यच्छतं युवम् ।

यो वां सुम्नाय तुष्टवद्वसूयाद्दानुनस्पती ॥ (८–८–१६)

आ नो गन्तं रिशादसेमं स्तोमं पुरुभुजा ।

कृतं नः सुश्रियो नरेमा दातमभिष्टये ॥ (८–८–१७)

आ वां विश्वाभिरूतिभिः प्रियमेधा अहूषत ।

राजन्तावध्वराणामश्विना यामहूतिषु ॥ (८–८–१८)

आ नो गन्तं मयोभुवा ऋश्विना शम्भुवा युवम् ।

यो वां विपन्यू धीतिभिर्गीर्भिर्वत्सो अवीवृधत् ॥ (८–८–१९)

याभिः कण्वं मेधातिथिं याभिर्वशं दशव्रजम् ।

याभिर्गोशर्यमावतं ताभिर्नोऽवतं नरा ॥ (८–८–२०)

याभिर्नरा त्रसदस्युमावतं कृत्व्ये धने ।

ताभिः ष्वस्माँ अश्विना प्रावतं वाजसातये ॥ (८–८–२१)

प्र वां स्तोमाः सुवृक्तयो गिरो वर्धन्त्वश्विना ।

पुरुत्रा वृत्रहन्तमा ता नो भूतं पुरुस्पृहा ॥ (८–८–२२)

त्रीणि पदान्यश्विनोराविः सान्ति गुहा परः ।

कवी ऋतस्य पत्मभिरर्वाग्जीवेभ्यस्परि ॥ (८–८–२३)

प्रातर्यावाणा प्रथमा यजध्वं पुरा गृध्रादररुषः पिबातः ।

प्रातर्हि यज्ञमश्विना दधाते प्र शंसन्ति कवयः पूर्वभाजः ॥ (५–७७–१)

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् ।
उतान्यो अस्मद्यजते वि चावः पूर्वः पूर्वो यजमानो वनीयान् ॥ (५–७७–२)
हिरण्यत्वङ् मधुवर्णो घृतस्नुः पृक्षो वहन्न आ रथो वर्तते वाम् ।
मनोजवा अश्विना वातरंहा येनातियाथो दुरितानि विश्वा ॥ (५–७७–३)
यो भूयिष्ठं नासत्याभ्यां विवेष चनिष्ठं पित्वो ररते विभागे ।
स तोकमस्य पीपरच्छमीभिरनूर्ध्वभासः सदमित्तुतुर्यात् ॥ (५–७७–४)
समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ (५–७७–५)
क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ।
मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ॥ (४–५७–२)
यद्वावान पुरुतमं पुराषाळा वृत्रहेन्द्रो नामान्यप्राः ।
अचेति प्रासहस्पतिस्तुविष्मान्यदीमुश्मसि कर्तवे करत्तत् ॥ (१०–७४–६)

तद्वो गाय सुते सचा पुरुहूताय सत्वने । शं यद्गवे न शाकिने ॥ (६–४५–२२)
न घा वसुर्नि यमते दानं वाजस्य गोमतः । यत्सीमुप श्रवद् गिरः ॥ (६–४५–२३)
कुवित्सस्य प्र हि व्रजं गोमन्तं दस्युहा गमत् । शचीभिरप नो वरत् ॥ (६–४५–२४)
स्तोत्रमिन्द्राय गायत पुरुनृम्णाय सत्वने । नकिर्यं वृण्वते युधि ॥ (८–४५–२१)
अभि त्वा वृषभा सुते सुतं सृजामि पीतये । तृम्पा व्यश्नुही मदम् ॥ (८–४५–२२)
मा त्वा मूरा अविष्यवो मोपहस्वान आ दभन् । माकीं ब्रह्मद्विषो वनः ॥ (८–४५–२३)
आ नूनमश्विना युवं वत्सस्य गन्तमवसे ।
प्रास्मै यच्छतमवृकं पृथु च्छर्दिर्युयुतं या अरातयः ॥ (८–९–१)
यदन्तरिक्षे यद्दिवि यत्पञ्च मानुषाँ अनु ।
नृम्णं तद्धत्तमश्विना ॥ (८–९–२)
ये वां दंसांस्यश्विना विप्रासः परिमामृशुः ।
एवेत्काण्वस्य बोधतम् ॥ (८–९–३)
अयं वां घर्मो अश्विना स्तोमेन परि षिच्यते ।
अयं सोमो मधुमान्वाजिनीवसू येन वृत्रं चिकेतथः ॥ (८–९–४)

यदप्सु यद्वनस्पतौ यदोषधीषु पुरुदंससा कृतम् ।

तेन माविष्टमश्विना ॥ (८–९–५)

यन्नासत्या भुरण्यथो यद्वा देव भिषज्यथः ।

अयं वां वत्सो मतिभिर्न विन्धते हविष्मन्तं हि गच्छथः ॥ (८–९–६)

आ नूनमश्विनोर्ऋषि स्तोमं चिकेत वामया ।

आ सोमं मधुमत्तमं घर्मं सिञ्चादथर्वणि ॥ (८–९–७)

आ नूनं रघुवर्तनिं रथं तिष्ठाथो अश्विना ।

आ वां स्तोमा इमे मम नभो न चुच्यवीरत ॥ (८–९–८)

यदद्य वां नासत्योक्थैराचुच्युवीमहि ।

यद्वा वाणीभिरश्विनेवेत्काण्वस्य बोधतम् ॥ (८–९–९)

यद्वां कक्षीवाँ उत यद् व्यश्व ऋषिर्यद्वां दीर्घतमा जुहाव ।

पृथी यद्वां वैन्यः सादनेष्वेवेदतो अश्विना चेतयेथाम् ॥ (८–९–१०)

यातं च्छर्दिष्पा उत नः परस्पा भूतं जगत्पा उत नस्तनूपा ।

वर्तिस्तोकाय तनयाय यातम् ॥ (८–९–११)

यदिन्द्रेण सरथं याथो अश्विना यद्वा वायुना भवथः समोकसा ।

यदादित्येभिर्ऋभुभिः सजोषसा यद्वा विष्णोर्विक्रमणेषु तिष्ठथः ॥ (८–९–१२)

यदद्याश्विनावहं हुवेय वाजसातये ।

यत्पृत्सु तुर्वणे सहस्तच्छ्रेष्ठमश्विनोरवः ॥ (८–९–१३)

आ नून्यातमश्विनेमा हव्यानि वां हिता ।

इमे सोमासो अधि तुर्वशे यदाविमे कण्वेषु वामथ ॥ (८–९–१४)

यन्नासत्या पराके अर्वाके अस्ति भेषजम् ।

तेन नूनं विमदाय प्रचेतसा च्छर्दिर्वत्साय यच्छतम् ॥ (८–९–१५)

अभुत्स्यु प्र देव्या साकं वाचाहमश्विनोः ।

व्यावर्देव्या मतिं वि रातिं मर्त्येभ्यः ॥ (८–९–१६)

प्र बोधयोषो अश्विना प्र देवि सूनृते महि ।

प्र यज्ञहोतरानुषक्प्र मदाय श्रवो बृहत् ॥ (८–९–१७)

यदुषो यासि भानुना सं सूर्येण रोचसे ।

आ हायमश्विनो रथो वर्तिर्याति नृपाय्यम् ॥ (८–९–१८)

यदापीतासो अंशवो गावो न दुह्र ऊधभिः ।

यद्वा वाणीरनूषत प्र देवयन्तो अश्विना ॥ (८–९–१९)

प्र द्युम्नाय प्र शवसे प्र नृषाह्याय शर्मणे ।

प्र दक्षाय प्रचेतसा ॥ (८–९–२०)

यन्नूनं धीभिरश्विना पितुर्योना निषीदथः ।

यद्वा सुम्नेभिरुक्थ्या ॥ (८–९–२१)

तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना सङ्गतिं गोः ।

यः सूर्यां वहति वन्धुरायुर् गिर्वाहसं पुरुतमं वसूयुम् ॥ (४–४४–१)

युवं श्रियमश्विना देवता तां दिवो नपाता वनथः शचीभिः ।

युवोर्वपुरभि पृक्षः सचन्ते वहन्ति यत्ककुहासो रथे वाम् ॥ (४–४४–२)

को वामद्या करते रातहव्य ऊतये वा सुतपेयाय वार्कैः ।

ऋतस्य वा वनुषे पूर्व्याय नमो येमानो अश्विना ववर्तत् ॥ (४–४४–३)

हिरण्ययेन पुरुभू रथेनेमं यज्ञं नासत्योप यातम् ।

पिबाथ इन्मधुनः सोम्यस्य दधथो रत्नं विधते जनाय ॥ (४–४४–४)

आ नो यातं दिवो अच्छा पृथिव्या हिरण्ययेन सुवृता रथेन ।

मा वामन्ये नि यमन्देवयन्तः सं यद्ददे नाभिः पूर्व्या वाम् ॥ (४–४४–५)

नू नो रयिं पुरुवीरं बृहन्तं दस्रा मिमाथामुभयेष्वस्मे ।

नरो यद्वामश्विना स्तोममावन्सधस्तुतिमाजमीळ्हासो अग्मन् ॥ (४–४४–६)

इहेह यद्वां समना पपृक्षे सेयमस्मे सुमतिर्वाजरत्ना ।

उरुष्यतं जरितारं युवं ह श्रितः कामो नासत्या युवद्रिक् ॥ (४–४४–७)

मधुमतीरोषधीर्द्याव आपो मधुमन्नो भवत्वन्तरिक्षम् ।

क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥ (४–५७–३)

स्तीर्णे बर्हिषि समिधाने अग्नौ सूक्तेन महा नमसा विवासे ।

अस्मिन्नो अद्य विदथे यजत्रा विश्वे देवा हविषि मादयध्वम् ॥ (६–५२–१७)

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूहळमस्य पांसुरो३ं

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धामानि धारयो३ं

विष्णोः कर्माणि पश्यथ यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखो३ं

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततो३ं

तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत् परमं पदो३म्
उत नो धियो गो अग्राः पूषन्विष्णवेवयावः । कर्ता नः स्वस्तिमतः ॥ (१–९०–५)
ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये ।
याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतो३ं
युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे ।
याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विना गतो३ं
युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना ।
याभिर्धेनुमस्वं पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति ।
याभिस्त्रिमन्तुरभवद् विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतो३ं
याभी रेभं निवृतं सितमद्भ्य उद् वन्दनमैरयतं स्वर्दृशे ।
याभिः कण्वं प्र सिषासन्तमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिरन्तकं जसमानमारणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुः ।
याभिः कर्कन्धुं वय्यं च जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः शुचन्ति धनसां सुषंसदं तप्तं घर्ममोम्यावन्तमत्रये ।
याभिः पृश्निगुं पुरुकुत्समावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथः ।
याभिर्वर्तिकां ग्रसितामुञ्चतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतम् ।
याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिर्विश्पलां धनसामथर्व्यं सहस्रमीह्ळ् आजावजिन्वतम् ।
याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत् ।
कक्षीवन्तं स्तोतारं याभिरावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे ।
याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतम् ।
याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम् ।

याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः ।
याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः ।
याभिः शारीराजतं स्यूमरश्मये ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना ।
याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिरङ्गिरो मनसा निरण्यतोऽग्रं गच्छतो विवरे गो अर्णसः ।
याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षितम् ।
याभिः सुदास ऊहथुः सुदेव्यं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः शन्ताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम् ।
ओम्यावतीं सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतम् ।
मधु प्रियं भरथो यत् सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः ।
याभी रथाँ अवथो याभिरर्वतस्ताभिरू षु ऊतिभिरश्विना गतो३ं
याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम् ।
याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरू षु ऊतिभिरश्विना गतो३म्
अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् ।
अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातो३ं
द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यो३ं [१ ।११२ ।१–२५]
उभा उ नूनं तदिदर्थयेथे वि तन्वाथे धियो वस्त्रापसेव ।
सध्रीचीना यातवे प्रेमजीगः सुदिनेव पृक्ष आ तंसयेथे ॥ (१०–१०६–१)
उष्टारेव फर्वरेषु श्रयेथे प्रायोगेव श्वात्र्या शासुरेथः ।
दूतेव हि ष्ठो यशसा जनेषु माप स्थातं महिषेवावपानात् ॥ (१०–१०६–२)
साकंयुजा शकुनस्येव पक्षा पश्वेव चित्रा यजुरा गमिष्टम् ।
अग्निरिव देवयोदीदिवांसा परिज्मानेव यजथः पुरुत्रा ॥ (१०–१०६–३)

आपी वो अस्मे पितरेव पुत्रोग्रेव रुचा नृपतीव तुर्यै ।
इर्येव पुष्ट्यै किरणेव भुज्यै श्रुष्टीवानेव हवमा गमिष्टम् ॥ (१०–१०६–४)
वंसगेव पूषर्या शिम्बाता मित्रेव ऋता शतरा शातपन्ता ।
वाजेवोच्चा वयसा घर्म्येष्ठा मेषेवेषा सपर्या पुरीषा ॥ (१०–१०६–५)
सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका ।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥ (१०–१०६–६)
पज्रेव चर्चरं जारं मरायु क्षद्मेवार्थेषु तर्तरीथ उग्रा ।
ऋभू नापत्खरमज्रा खरज्रुर्वायुर्न पर्फरत् क्षयद्रयीणाम् ॥ (१०–१०६–७)
घर्मेव मधु जठरे सनेरू भगेविता तुर्फरी फारिवारम् ।
पतरेव चचरा चन्द्रनिर्णिङ् मनऋङ्गा मनन्या न जग्मी ॥ (१०–१०६–८)
बृहन्तेव गम्भरेषु प्रतिष्ठां पादेव गाधं तरते विदाथः ।
कर्णेव शासुरनु हि स्मराथोंऽशेव नो भजतं चित्रमप्नः ॥ (१०–१०६–९)
आरङ्गरेव मध्वेरयेथे सारघेव गवि नीचीनबारे ।
कीनारेव स्वेदमासिष्विदाना क्षामेवोर्जा सूयवसात्सचेथे ॥ (१०–१०६–१०)
ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोप यातम् ।
यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः ॥ (१०–१०६–११)
दैव्या होतारा प्रथमा पुरोहित ऋतस्य पन्थामन्वेमि साधुया ।
क्षेत्रस्य पतिं प्रतिवेशमीमहे विश्वान्देवाँ अमृताँ अप्रयुच्छतः ॥ (१०–६६–१३)
परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।
उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥ (७–९९–१)
युवं देवा ऋतुना पूर्व्येण युक्ता रथेन तविषं यजत्रा ।
आगच्छतं नासत्या शचीभिरिदं तृतीयं सवनं पिबाथः ॥ (८–५७–१)
युवां देवास्त्रय एकादशासः सत्याः सत्यस्य ददृशे पुरस्तात् ।
अस्माकं यज्ञं सवनुाषाणा पातं सोममश्विना दीद्यग्नी ॥ (८–५७–२)
पनाय्यं तदश्विना कृतं वां वृषभो दिवो रजसः पृथिव्याः ।
सहस्रं शंसा उत ये गविष्टौ सर्वाँ इत्ताँ उप याता पिबध्यै ॥ (८–५७–३)
अयं वां भागो निहितो यजत्रेमा गिरो नासत्योप यातम् ।
पिबतं सोमं मधुमन्तमस्मे प्र दाश्वांसमवत्खचीभिः ॥ (८–५७–४)
पुराणमोकः सख्यं शिवं वां युवोर्नरा द्रविणं जह्नाव्याम् ।

पुनः कृण्वानाः सख्या शिवानि मध्वा मदेम सह नू समानाः ॥ (३–५८–६)
अश्विना वायुना युवं सुदक्षा नियुद्भिष् च सजोषसा युवाना ।
नासत्या तिरोअह्न्युाषाणा सोमं पिबतमस्रिधा सुदानू ॥ (३–५८–७)
अश्विना परि वामिषः पुरूचीरीयुर्गीर्भिर्यतमाना अमृध्राः ।
रथो ह वामृतजा अद्रिजूतः परि द्यावापृथिवी याति सद्यः ॥ (३–५८–८)
अश्विना मधुषुत्तमो युवाकुः सोमस्तं पातमा गतं दुरोणे ।
रथो ह वां भूरि वर्पः करिक्रत्सुतावतो निष्कृतमागमिष्ठः ॥ (३–५८–९)

सोमातिरेकप्रायश्चित्तम् ।

प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥ (७–१००–५)
किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥ (७–१००–६)
वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ (७–१००–७)
प्र तद्विष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ (१–१५४–२)
प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे ।
य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥ (१–१५४–३)
यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।
य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥ (१–१५४–४)
महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग् वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥ (६–१९–१)
इन्द्रमेव धिषणा सातये धाद्बृहन्तमृष्वमजरं युवानम् ।
अषाळ्हेन शवसा शूशुवांसं सद्यश्चिद्यो वावृधे असामि ॥ (६–१९–२)
पृथू करस्ना बहुला गभस्ती अस्मद्र्यक्सं मिमीहि श्रवांसि ।
यूथेव पश्वः पशुपा दमूना अस्माँ इन्द्राभ्या ववृत्स्वाजौ ॥ (६–१९–३)
तं व इन्द्रं चतिनमस्य शाकैरिह नूनं वाजयन्तो हुवेम ।

यथा चित्पूर्वे जरितार आसुरनेद्या अनवद्या अरिष्टाः ॥ (६–१९–४)
धृतव्रतो धनदाः सोमवृद्धः स हि वामस्य वसुनः पुरुक्षुः ।
सं जग्मिरे पथ्या रायो अस्मिन्समुद्रे न सिन्धवो यादमानाः ॥ (६–१९–५)
शविष्ठं न आ भर शूर शव ओजिष्ठमोजो अभिभूत उग्रम् ।
विश्वा द्युम्ना वृष्ण्या मानुषाणामस्मभ्यं दा हरिवो मादयध्यै ॥ (६–१९–६)
यस्ते मदः पृतनाषाळमृध्र इन्द्र तं न आ भर शूशुवांसम् ।
येन तोकस्य तनयस्य सातौ मंसीमहि जिगीवांसस्त्वोताः ॥ (६–१९–७)
आ नो भर वृषणं शुष्ममिन्द्र धनस्पृतंशूशुवांसं सुदक्षम् ।
येन वंसाम पृतनासु शत्रून्तवोतिभिरुत जामीँरजामीन् ॥ (६–१९–८)
आ ते शुष्मो वृषभ एतु पश्चादोत्तरादधरादा पुरस्तात् ।
आ विश्वतो अभि समेत्वर्वाङिन्द्र द्युम्नं स्वर्वद्धेह्यस्मे ॥ (६–१९–९)
नृवत्त इन्द्र नृतमाभिरूती वंसीमहि वामं श्रोमतेभिः ।
ईक्षे हि वस्व उभयस्य राजन् धा रत्नं महि स्थूरं बृहन्तम् ॥ (६–१९–१०)
मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यं शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम ॥ (६–१९–११)
जनं वज्रिन्महि चिन्मन्यमानमेभ्यो नृभ्यो रन्धया येष्वस्मि ।
अधा हि त्वा पृथिव्यां शूरसातौ हवामहे तनये गोष्वप्सु ॥ (६–१९–१२)
वयं त एभिः पुरुहूत सख्यैः शत्रोः शत्रोरुत्तर इत् स्याम ।
घ्नन्तो वृत्राण्युभयानि शूर राया मदेम बृहता त्वोताः ॥ (६–१९–१३)
विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ (१–१५४–१)
प्र तद्विष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ (१–१५४–२)
प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे ।
य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥ (१–१५४–३)
यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।
य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥ (१–१५४–४)
तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥ (१–१५४–५)

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।

अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॥ (१–१५४–६)

या विश्वासां जनितारा मतीनामिन्द्राविष्णू कलशा सोमधाना ।

प्र वां गिरः शस्यमाना अवन्तु प्र स्तोमासो गीयमानासो अर्कैः ॥ (६–६९–२)

त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति ।

या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ॥ (१–१५५–२)